॥ श्रीहरिः ॥

विजयते श्रीबालकृष्णः प्रभुः ।

# ब्रह्मसूत्राणां अणुभाष्यम् ।

## भगवद्वदनावतारश्रीमद्वल्लभाचार्यचरणविरचितम् ।

गोस्वामिश्रीमन्मुरलीधरीयाणुभाष्यव्याख्यानेन, गोस्वामिश्रीमद्गिरिधरनिर्मितविवरणेन,
वेदान्तचन्द्रिकया, डाल्लभट्टोपनामकश्रीबालकृष्णभट्टविरचितगूढार्थ-
दीपिकया, भगवदीयश्रीमदिच्छारामरचितप्रदीपेनेति
पञ्चभिष्टीकाभिः सवलितम् ।

## त्रिसूत्रीपरिमितो भागः ।

श्रीमद्वल्लभकुलकमलप्रभाकरविद्वन्मण्डलाखण्डलगोस्वामिश्रीगोकुलनाथमहाराज-
चरणाश्रयपरिवर्द्धितसाम्प्रदायवैदुष्येण तदाज्ञानुवर्तिना देवर्षिभट्टश्रीद्वारकाना-
थात्मजेन शुद्धाद्वैतभूषणवेदान्तभूषणसाहित्यरत्नमहामहोपदेशकेन
देवर्षिभट्टश्रीरमानाथशर्मणा संशोधितः ।

मुम्बानगरे
निर्णयसागरे समुद्र्य
पुष्टिमार्गसिद्धान्तकार्यालयात्प्रकाशितः ।

सं १९७८-सन् १९२१

निर्मन्छनम्—मुद्रात्रितयम् ।

॥ श्रीहरिः ॥

श्रीबालकृष्णो जयति ।

लीलाप्रविष्टगोस्वामिश्रीगोकुलोत्सवात्मजगोस्वामिश्रीमज्जीवनेशैर्विरचिता

# ब्रह्मसूत्रवृत्तिः ।

## अथातो ब्रह्मजिज्ञासा ।

प्रणम्य श्रीमदाचार्यान्सपुत्रान्विट्ठलेश्वरान् ।
पितृपादाम्बुजातश्च गुरून्गोवर्द्धनाभिधान् ॥ १ ॥

विवृत्तिं ब्रह्मसूत्राणामणुभाष्यानुसारिणीम् ।
करोमि सरलां सूक्ष्मामक्षरोत्तमबोधिकाम् ॥ २ ॥

अथ । अतः । ब्रह्मजिज्ञासा । अथशब्दोधिकाराऽर्थकः । अत एतस्मै प्रयोजनाय । सार्वविभक्तिकस्तसिल् । परमपुरुषार्थसाधकब्रह्मज्ञानेच्छापूरणाय । ब्रह्मणो जिज्ञासा । ब्रह्मण इति शेषे षष्ठी । तेन ब्रह्मसम्बन्धि सर्वं ब्रह्मपदेन संगृह्यते । जिज्ञासापदं विचाराऽर्थकम् । तेन ब्रह्मज्ञानेच्छापूरणाय ब्रह्मसम्बन्धिसर्वविचारोऽधिक्रियत इति सूत्राऽर्थः । अत्र ब्रह्मजिज्ञासापदात्त्रैवर्णिकोऽधिकारी । न हि वेदाऽनधिकारी ब्रह्मविचाराऽर्हः । सपरिकरं ब्रह्मैव विषयः । विचार्यविचारकभावः सम्बन्धः । ब्रह्म विचार्यम् । वेदान्तशास्त्रं विचारकम् । अतःपदाद्ब्रह्मज्ञानं प्रयोजनम् । एतेन ब्रह्ममीमांसाप्रतिज्ञाकरणेनाऽनुबन्धचतुष्टयमपि स्फुटीकृतं व्यासचरणैरित्येकसूत्रात्मकं प्रथमं जिज्ञासाधिकरणम् ।

अधिकरणलक्षणं तु—विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । संगतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् । विशयः संशयः । तेनाऽत्र विषयो वेदान्तानां विचारः । स आरम्भणीयो नवेति संशयः । साङ्गवेदाऽध्ययनमात्रादर्थप्रतीतेर्नाऽऽरम्भणीय एवेति पूर्वपक्षः । प्रातिशाख्यवत्संदेहवारकत्वादारम्भणीय एवेत्युत्तरम् । सिद्धान्त इत्यर्थः । उपोद्घातरूपा सङ्गतिः ॥ १ ॥

---

ननु जिज्ञास्यं ब्रह्म किंलक्षणकं किंप्रमाणकमित्याकाङ्क्षायामाहुः—

## जन्माद्यस्य यतः शास्त्रयोनित्वात् ॥ २ ॥

जन्मादि । अस्य । यतः । शास्त्रयोनित्वात् । अस्य पुरोवर्तिप्रपञ्चस्य । जन्मोत्पत्तिः । आदिपदात्स्थितिप्रलयाऽभिसंवेशाः । यतो यस्मात्सकाशात् । तद्ब्रह्मेत्यर्थादायाति । तत्र हेतुः—शास्त्रयोनित्वात् । शास्त्रं वेदाख्यम् । शास्तीति शास्त्रम् । पूर्वोत्तरकाण्डरूपम् । तस्मिन्योनिः कारणम् । तस्य भावस्तस्मात् । श्रुत्युक्तकारणत्वादित्यर्थः । श्रुतिस्तु तैत्तिरीये भृगुप्रपाठके **'यतो वा इमानि भूतानि जायन्त'** इत्यादिरूपा । अथवा जन्माऽऽद्यस्य यतः । आद्यस्य वाच्याद्यपेक्षयाऽऽदौ भव-

स्याऽऽकाशस्य यतः सकाशाज्जन्म प्रादुर्भाव इति सूत्रार्थः । 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत'इत्यानन्दवल्लीश्रुतेः । इदमप्येकसूत्रात्मकं द्वितीयं लक्षणप्रमाणाऽधिकरणम् । अत्र ब्रह्म विषयः । तत्कर्तृ आहोस्विदकर्तृ इति संदेहः । 'निष्कलं निष्क्रियं शान्त'मित्यादिभिर्बृहदारण्यकादिश्रुतिभिस्तदकर्तृ इति पूर्वपक्षः । 'निष्कलं निष्क्रिय'मित्यादिश्रुतिषु लौकिककर्तृत्वनिषेधः । 'कर्तारमीशं पुरुषं ब्रह्मयोनि'मित्यादिषु मुण्डकादिषु श्रुतिष्वलौकिककर्तृत्वप्रतिपादनम् । तेनाऽलौकिककर्तृ तदिति सिद्धान्तः । सामान्यविशेषरूपा संगतिः ॥ २ ॥

---

ननु पूर्वस्मिन्सूत्रे सर्ववेदप्रतिपाद्यं ब्रह्मणः सामान्यतः कारणत्वं सिद्धम् । तेन सर्वप्रकारकं कारणत्वं सिद्ध्यति । तत्र 'यतो वा इमानि भूतानि' 'तस्माद्वा एतस्मादात्मन' इत्यादिवाक्येषु पञ्चमीश्रवणान्निमित्तत्वे तु न सन्देहः । परं समवायिकारणत्वे भूयान्सन्देहः । सावयवत्वविकृतत्वाऽनर्थरूपत्वपारतन्त्र्यादिदोषप्रसक्तेः । इति चेन्नाऽऽहुः—

## तत्तु समन्वयात् ॥ ३ ॥

तत् । तु । समन्वयात् । तुशब्दः पूर्वपक्षव्यावर्तकः । तत्समवायिकारणम् । प्रकरणवशाद्ब्रह्मैव । कुतः । समन्वयात् । अस्मिन्प्रपञ्चेऽस्तिभातिप्रियत्वेन सच्चिदानन्दस्य ब्रह्मणः समन्वयात् । सम्यगनुवर्तनादिति सूत्रार्थः । नामरूपयोरनागन्तुकत्वाऽभावात्प्रपञ्चमध्यपातित्वाच्च न पृथङ्निरूपणम् । तारतम्याऽप्रियत्वादिकं त्वज्ञानकृतम् । घटपटादिव्यक्तिभेदो भगवदिच्छाकृतः । खपुष्पादीनां तु वाचनिक्येव सत्ता । प्रकृतेरपि सत्वादिगुणानां परस्परोपमर्दकत्वाद्विगात्मप्रभृतिषु व्यभिचाराच्च न समन्वयः । किन्तु ब्रह्मांशत्वेन सः तस्य 'तदात्मानं स्वयमकुरुते'त्यादिब्रह्मप्रपाठकादिवाक्यैर्निःसंदिग्धं ब्रह्मैव समवायीति सिद्धम् । इदमप्येकसूत्रात्मकं तृतीयं समन्वयाधिकरणम् । अत्र ब्रह्मैव विषयः । तत्समवायि न वेति सन्देहः । मृत्साधारण्यं भवेदिति न ब्रह्म समवायि किन्तु निमित्तमेवेति पूर्वपक्षः । 'तदात्मानं स्वयमकुरुते'त्यादिभिः श्रुतिभिर्निःसंदिग्धप्रतिपादनाद्विरुद्धधर्माश्रयत्वाच्च ब्रह्मैव समवायीति सिद्धान्तः । पूर्वाधिकरणेनाऽस्य निर्वाहकत्वरूपा संगतिः ॥ ३ ॥

---

॥ श्रीहरिः ॥

# दर्शनानि तत्प्रतिपाद्यं च ।

दर्शनं हि नामाऽपरोक्षं ज्ञानं साक्षात्कारो वा । शब्दस्य तत्रैव शक्तिरिति । परोक्षज्ञाने तु साक्षात्कारसादृश्याभासानुरोधादौपचारिक एव प्रयोगोऽयम् । परोक्षज्ञानकारणेष्वपि शास्त्रेषु कार्यकारणैक्यमनुसृत्यैव दर्शनपदव्यवहार इति औपचारिकत्वं स्पष्टम् । शब्दो हि परोक्षमेव ज्ञानं कारयति नाऽपरोक्षम् । मधुरां दिदृक्षुर्यदि तत्प्रतिकृतिं तत्स्वरूपप्रतिपादकं पुस्तकं वा गृहीत्वा 'एष विश्रान्तघट्टः, एषा यमुना, एतद्द्वारकाधीशमन्दिरं, इत्यादि विभावयेत्र तेन मधुरासाक्षात्कारः स्यात् । बुभुक्षुर्यदि क्षीरलड्डुकादिभोज्यमीमांसां शतमप्यावर्तयेन्मन्ये न तेन तस्य तत्पदार्थसाक्षात्कारः स्यात् । तस्माद् ये 'दशमस्त्वमसी'त्यादि दृष्टान्तीकृत्य 'तत्त्वमसी'त्यादिवाक्यजातैस्तत्त्वसाक्षात्कारं साधयितुं चेष्टन्ते ते हि फाल्गुनबालका इव परिहासपात्रमात्रम् । उक्तं च केनापि तत्तत्त्वविदा 'कलौ वेदान्तिनो भान्ति फाल्गुने बालका इवे'ति । साक्षात्कारस्तु पदार्थानां तदसाधारणसाधनैर्भगवदनुग्रहेण योगादिभिर्वेति मन्यामहे । तस्माद्वेदान्तविचारमात्रेण पदार्थानां तत्त्वस्य च साक्षात्कारं ये केचन मन्यन्ते तेषामपि शास्त्रेषु दर्शनव्यवहार औपचारिक एव । विचारसाधनाभ्यां तत्त्वज्ञानं प्रतिपादयतां दर्शनानामपि द्वेधा भेदः । नास्तिवादीनि अस्तिवादीनि चेति । नास्तिकत्वाऽऽस्तिकत्वे चतुर्मुखं विद्वांसोऽपि बहुलं विवदन्ते । नास्ति परलोक इति वादीत्येके । वेदमार्गमननुरुन्धान इत्यपरे । नास्ति जगत्कर्ता कश्चनेति केचित् । अलौकिकशब्दाप्रामाण्यवचन इति भिन्नाः । मिथ्यावादीति केचन । एवं नास्तिकत्वे बहव एव विकल्पाः प्रचरन्ति लोके विद्वत्सु च । तत्र किमिह प्रतिपत्तव्यमिति चेदुच्यते—'मिथ्यादृष्टिर्नास्तिकते'त्येव कोशकृदुक्तिर्युक्तेति मन्यामहे । अर्थात्-यः खलु लोकाऽनधिगतार्थगन्तृशब्दे वेदराशौ मिथ्यादृष्टिः-कथमप्यप्रामाण्यशङ्की-तद्वादी चेति स एव नास्तिकः । अत्रैव सर्वविकल्पानामन्तर्भावात् । उक्तं च श्रीमनुना—

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः । स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दक इति ॥

अत्र हेतुशास्त्राश्रयादित्यस्य 'लोके इदं दृष्टं तस्मादिदं साधु, इदं न दृश्यत इत्यसाधु' इति-हेतुभिर्यददृष्टार्थाभिशङ्कि शास्त्रं तदाश्रयादित्यर्थो ज्ञेयः । यस्त्वस्य कोपस्य टीकाकृताऽर्थः कृतः स तु नास्तिकतार्थैकदेशो विवादग्रस्तश्चेति नादरणीयः । मनूक्तिविरोधाच्च । तस्मात् कथमपि वेदाऽप्रामाण्यवादी नास्तिक इत्येव साधु । तत्कृतं शास्त्रं दर्शनं वा नास्तिकदर्शनम् ।

तत्र लोकायतिकाः-नास्ति परलोकः । तत्सत्साधनेषु मुधा न परिश्रान्तव्यम् । तत्प्रमाणं च प्रत्यक्षमेव न शाब्दादि । पञ्चभूतपरमाणूनां यथार्थतः संग्रहो देह एवाऽऽत्मा । न कश्चिन्नित्यश्चेतनः । स चाऽऽत्रैव भस्मीभवति नान्यत्र गच्छन्दृश्यत इति प्रत्यक्षम् । अतोऽपि नास्ति परलोक इत्याहुः ।

तथा च तदुक्तिसंक्षेपः—

न स्वर्गो नाऽपवर्गो वा नैवात्मा पारलौकिकः । नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥

त्रयो वेदस्य कर्तारो धूर्तभण्डनिशाचराः । जर्भरीतुर्फरीत्यादि पण्डितानां वचः स्मृतम् ॥ इत्यादि ।

एतेन 'सर्वलोकेषु कामचारो भवति' 'विज्ञानं यज्ञं तनुते' 'स्वर्गकामो यजेत' 'निःश्वसितमस्य यदृग्वेदः' इत्याद्यलौकिकशब्दोक्तार्थमप्रमाणीकुर्वतां लोकायतिकानां दर्शनं तत्त्वसाक्षात्काराभावादसदुक्तनास्तिकलक्षणे समन्वयाच्च दर्शनाभासं नास्तिकं च ।

वेदमार्गमननुरुन्धानाश्च बौद्धाः । तत्र तेषां मुख्याश्चत्वारो भेदाः । सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकाः । सौत्रान्तिकवैभाषिकौ तावद्बाह्यमर्थजातमस्तीति मन्येते । किन्तु क्षणिकम् । तयोर्मते बुद्धिरेव नीलपीताद्याकाराऽऽत्मा । बुद्धेर्नीलपीताद्याकारेभ्य एव बाह्यमर्थजातमस्तीत्यनुमीयते । स्वभावक्षणभङ्गुरमिति मिथ्या च । बहिः प्रतीयत इति बाह्यम् । आन्तरस्त्वर्थः केवलं क्षणिकं विज्ञानमेव । तच्च मोक्षेऽपि नाऽपैति । प्रत्युत मोक्षे विज्ञानं तत्तदाकारानुभवनं तांश्च विमुच्य विशुद्धं भवति । विज्ञानस्य सवासनं बाह्याकारपरित्यागः शून्यतयाऽवस्थानमेव मोक्षः ।

विज्ञानस्य क्षणिकत्वेऽपि तस्य समानसन्तानानां धारावाहिकत्वेन यद्दीपस्यापि ज्वालासु 'सोऽयं दीप'-इतिवत्स्थिरत्वभ्रम एकत्वावधारणं च न विरुद्धम् । ननु विज्ञानस्य क्षणिकत्वे कर्मफलभोगः स्मृतिनियमश्च कथं निर्व्यूढः स्यात् । भोक्तुरनुभवकर्तुश्च विज्ञानस्य नष्टत्वात् । उच्यते । पूर्वपूर्वविज्ञानमुत्तरस्मिन्नुत्तरस्मिन्वासनां परित्यज्य नश्यतीति सर्वं सुस्थम् । ननु वासना हि नाम संस्कारविशेषः । स चाऽनुभवमन्तरा नोत्पद्यते । अनुभवश्च पदार्थ-पूर्वभावित्वमपेक्षते । सर्वतः पूर्वस्य तु पदार्थस्याऽभावात्कथमनुभवस्तत्संस्कारश्चेति चेन्नैष दोषः । क्षणिकस्याऽपि स्वभे पदार्थस्याऽनुभवात् । वासनाप्रतिपक्षस्याऽपि संभवदनुभवकत्वात् । तेन च वासनासंभवात् । बीजाङ्कुरवद्वासनानां तद्विषयपदार्थस्यापि चाऽनादित्वाच्च पूर्वाऽपरभावशङ्काऽपि । इत्येवमाहतुः ।

योगाचाराश्च—स्वयं विज्ञानमस्तीत्येव साधु । अन्यथा प्रपञ्चापत्तिः स्वीकृता स्यात् । तत्र शुद्धोऽहमह-मिति धारावाहिनी बुद्धिरेवेति पर्यवस्यति । सा च स्वयमात्मप्रकाशिनी प्रदीपवदित्युक्तम् । बाह्यार्थस्तु प्रातीतिको-ऽनुमानगम्य एव न सन् । यश्च ग्राह्यग्राहकयोर्भेदः सोऽपि द्विचन्द्रावभास इव प्रातीतिक एव । तद्दर्शने चानादिपरि-च्छिन्नवासनासन्तानमेव हेतुः । वासनासन्तानं च 'यदिदं सर्वं दुःख'मिति चिरभावनयाऽपैति सैव मुक्तिरित्याहुः । यद्यप्येते त्रयोऽपि पर्यवसाने शून्यवादिन एव तथापि स्पष्टं न ब्रुवते । माध्यमिकास्तु स्पष्टमेवाभिदधति 'सर्वं शून्य'-मिति । एकस्यैव सुगतस्योपदेशोऽप्युपदेश्यान्तःकरणवैचित्र्याच्चतुर्धा प्रक्रियान्तरेण विभिद्याऽन्ते शून्ये पर्यवसन्नः ।'

माध्यमिकास्तावत् । घटस्तम्भादिकमर्थजातमनुमेयमिति सद्भिरुच्यते परैस्तत्किं परमाणवस्तत्समूहो वा ? परमाणव इति तु न वक्तुं शक्यते । तथा सति 'स्थूलोऽयं स्तम्भ' इति ज्ञानं न स्यात् । परमाणूनामतिसूक्ष्मत्वादने-कत्वाच्च । समूहस्तु परमाणूनन्तरा गवेषितोऽपि न मिलति सदसदेव बाह्यार्थजातम् । विज्ञानेऽपि समानैव युक्तिः । विज्ञानं सदसद्वा ? । सच्चेत्कुतः सुषुप्तौ न स्फुरति । ननु तदा तदभावो नास्ति जागरितः सुखस्वापं स्मरतीति । नेदमपि चारु । विषयविज्ञानयोः सहोपलम्भनियमात्सुषुप्तौ विषयाभावाज्ज्ञानाभावः । यत्तु सुखस्मरणमिति प्रलप्यते तदपि तथा । सुखदुःखयोस्तदानीमभावादस्फुरणाच्चेत्यर्थो विज्ञानं चाऽसत् । तथाऽसदेवेति युक्तम् । असतोऽभानात् । न चोभयमेव मन्तव्यम् । सदसतोर्विरुद्धत्वादेकत्राऽनवस्थितेः । अनुभयरूपमित्यपि न । एकस्य निषेधोऽन्यस्य विधिं ज्ञापयति विधिश्च निषेधम् । तस्माच्छून्यं विज्ञानमपि । या प्रमात्रादिचतुष्टयी परकल्पिता साऽपि शशविषाणम् । विचारासहत्वात् । तथाहि—यस्तु प्रमाता न स प्रत्यक्षेण गृहीतुं शक्यते । 'अह'मिति प्रत्ययस्तु गौरोऽहं कृशोऽहमि-त्यादिदेहविषयकप्रत्ययैर्व्यभिचरति । अनुमानमपि प्रमातरि न प्रमाणम् । तदव्यभिचारिलिङ्गाभावात् । एतेन प्रमाणान्तरं व्याख्यातम् । तस्मादसन्नेव प्रमाता । पूर्वोक्तकैवल्याद्बाह्यार्थाभावस्तु साधित एव । विषयस्य प्रमेयस्याऽभावेन प्रमाणमपि प्रमाणत्वहीनो नास्त्येव । तस्माद्विचारासहत्वादनिर्वचनीयत्वात्सर्वं शून्यमिति कथयन्ति । चत्वारोऽप्येते प्रतीत्यसमुत्पादोपसर्पणप्रत्ययाभ्यां 'कार्यं स्वयं भवतीति'कर्ता कश्चन नास्तीत्यपि वदन्ति । विज्ञानस्य निर्वाणश्च मोक्षम् ।

तदेष बौद्धमतसंक्षेपः—

यस्मिन्नेव हि सन्तान आहिता कर्मवासना । फलं तत्रैव सन्धत्ते कार्पासे रक्तता यथा ॥
सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये ॥
इदं वस्तुबलायातं यद्वदन्ति विपश्चितः । यथा यथाऽर्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा ॥
यथा यथा विचार्यन्ते विशीर्यन्ते तथा तथा । यदेतत्स्वयमर्थेभ्यो रोचते तत्र के वयम् ॥
इति ।

'सदेव सोम्येदम्—' 'यतो वा इमानि-' 'ब्रह्मविदाप्नोति परम्' 'सत्यं विज्ञानमानन्दं ब्रह्मे' त्यादिश्रुतिसहस्रनिष्पन्नार्थानमन्यमानानां सौगतानामपीदं दर्शनं मिथ्यादृष्टित्वात् 'असन्नेव स भवति असद् ब्रह्मेति वेद चेत्' इति निन्दाश्रवणाच्च दर्शनाभासं नास्तिकञ्च । एतेनार्हतमपि दर्शनं व्याख्यातम् ।

तर्कसेवाऽऽगमादपि प्रमाणं किं च वेदोऽपि न नित्य इत्यभ्युपगच्छन्तो रूपान्तरेण वेदाप्रामाण्यवचना वैशे-षिका आक्षपादाश्च, तत्त्वानां पृथक् पृथक् स्वरूपाधिगमान्मोक्षं पृथिव्यादिनित्यद्रव्याणां स्वस्वरूपेण सत्तामलौकिक-शब्दराशेर्वेदस्यानित्यताञ्चाहुरिति तेऽपि नास्तिका एव । 'एकमेवाऽद्वितीयं०' 'तस्माद्वा एतस्मात्०' 'वाचा विरू-पनित्यया' इत्याद्युक्तमप्रमाणीकुर्वन्तीति । साक्षात्कारमपि न मन्यन्ते । मन्यन्ते चेत्पदार्थानां तथापि 'एकविज्ञानेन सर्वं विज्ञातं स्या'दितिश्रुत्युक्तैकब्रह्मविज्ञानेन पदार्थान्तरविज्ञानमित्याद्युक्तदिशा नेच्छन्तीति दर्शनाभासोऽप्येत-

दर्शनम् । यद्यप्येतैः कर्तृत्वेनेश्वरोऽनुमानेन साध्यते तथापि सिध्यन्नप्यसौ जीवविशेष एव सिध्यति । ननु 'अपाणिपादो जवनो—' 'सर्वतःपाणि—' इत्यादिश्रुतिप्रतिपादितप्राकृतविलक्षणसकलधर्मवानानन्दस्वरूप ईश्वरस्ततोऽपि तथा । यच्चैतेषामास्तिकत्वेन प्रवादः स तु स्थूलदृष्ट्या वेदोक्तपरलोकेश्वरादिपदार्थाभिमानविश्वासेन वेति सर्वमनवद्यम् । यच्चैतेषां वेदस्य पौरुषेयत्वस्थापनं तत्तु निपुणमनुमानागमैः प्रक्षिप्यापौरुषेयत्वमेवाऽस्थापि चित्सुखादिभिरिति विस्तरस्तत्रैव द्रष्टव्यः ।

'नास्ति कश्चिज्जगत्कर्तेति' निर्वचनं ब्रुवाणा मीमांसकाः । एते हि 'जगत्कर्तरि स्वीकृते स्वीकृतं भवति वेदानां पौरुषेयत्व'मितिभिया कंचनेश्वरं नाङ्गीकुर्वन्ति । एतन्मतसंक्षेपस्तु—कर्मैवेश्वरः । नान्यश्चेतनरूपः । स्वर्गः परमपुरुषार्थः । मन्त्रमयी तत्सूचिताग्नीन्द्रादिदेवता यज्ञशेषा । अर्थवादश्च स्वार्थे न प्रमाणम् । वेदः स्वतःप्रमाणमपौरुषेयश्च । प्रवाहन्यायेनाऽनादितो जगत्स्वयमेवं प्रचलतीत्यसौ ।

अत्रापि यज्ञकर्तृत्वफलदातृत्वादिप्रतिपादकानां देवतोपासनादिप्रतिपादकानां श्रुतिवाक्यानां च विरोधात्तथाऽऽस्तिकतयाप्रसिद्धस्येश्वरस्य चाऽमतत्वान्नास्तिकत्वमेव । किं च जैमिनिः 'अतदर्थानां चाऽनर्थक्यं' प्रतिजानीते । एवं चेत्सर्वस्यापि परकाण्डस्योपनिषद्भागस्य सिद्धपदार्थाभिधायित्वादवेदत्वलक्षणमप्रामाण्यं स्फुटमायातीति जैमिनिरपि तथा । किं च अर्थवादानां प्रमादपठितत्वं 'तुल्यं च सांप्रदायिक'मित्यादिना निराकृत्य तत्र वेदत्वं स्थिरीकृत्यापि तान्स्वार्थेऽप्रमाणं वदतीत्यलौकिकशब्दैकदेशाऽप्रामाण्यकथनलक्षणं नास्तिकत्वमप्येतस्य । अथ मीमांसकेषु द्वेधा मतभेदः । प्राचस्तावत् 'औषधं पिब शिशो ते वर्द्धिष्यते' इत्यादिलौकिकवाक्येष्विव 'गावो वै सत्रमासत' इत्याद्यर्थवादवाक्येष्वपि 'असत्यार्थाऽवलम्बेन' केवलविधेयस्तुतिपरत्वम् । न तु स्वार्थप्रामाण्यमपि । तथा च 'तत्सामान्यादितरेषु तथात्वम्' इति न्यायेनाऽन्येषां 'वायुर्वै क्षेपिष्ठे'त्याद्यर्थवादानामपि न स्वार्थप्रामाण्यम् । किन्तु जहत्स्वार्थलक्षणया केवलविधेयस्तावकत्वमात्रम् । एवमुपनिषदां सिद्धपदार्थप्रतिपादिनीनामपीति संगिरन्ते । नवीनास्तु वार्तिककृत्प्रभृतयः सर्वेष्वप्यर्थवादवाक्येष्ववयवार्थाऽनतिक्रमेणैवाऽजहत्स्वार्थलक्षणया प्राशस्त्यपरत्वम् । 'आदित्यो यूप' इत्यादावपि, ऊर्ध्वत्वादिगुणयोगादवयवार्थस्य सत्त्वात्स्वार्थप्रामाण्यमपि । 'प्रजापतिरात्मनो वपामुदखिदत्' इत्यादौ सर्गादौ परमेश्वर एव स्वमहिम्ना पशुरूपमेकं कृत्वा तद्वपोत्कर्तनेन कर्म प्रायुङ्क्तेत्येवंप्रकारेण सर्वत्र सत्यत्वमुन्नेयम् ।

वस्तुतस्तु 'वेदेऽक्षरमात्रस्याप्यसत्यार्थप्रतिपादकत्वाभावा'दित्युक्तिदिशा क्वचिदपि वेदेऽप्रामाण्यगन्धोऽपि नास्ति । सर्वस्याऽपि स्वतःप्रामाण्यस्वीकारात् । अर्थादनधिगतार्थगन्तृत्वे सति स्वबुद्धिकाद्यैर्न कादाचित्काऽयोग्यताज्ञानाऽनपनोद्यप्रामाण्यस्वीकारात् । तथा च यद्वेदेष्वलौकिकार्थवेदकेष्वयोग्यताज्ञानं तदज्ञातृदोषादेव नतु वेदोक्तपदार्थेषु तदस्ति । एकत्र तदभावेऽप्यन्यत्र तदुपलब्धेः । यथा सेतुबन्धादौ ग्राव्णां प्लवनम् । न चैवं प्रत्यक्षादिकमनुसृत्याऽन्यथा कल्पनीयमिति परमास्तिकानां सुदृढः सिद्धान्तः ।

किंच 'विद्यया वा करोति' इति श्रुत्या ज्ञात्वैव कर्म कर्तव्यमिति सिद्धेऽर्थवादाः कर्माङ्गभूतं पदार्थज्ञानमुपदिशन्तीति न किंचिदनुपपन्नम् ।

ननु 'अग्निर्हिमस्य भेषज'मित्यादीनां कथमलौकिकार्थाऽऽवेदकत्वमवगन्तव्यम् । नैष दोषः । 'अमरेष्वमरत्ववदनादित्वेऽपि जगतः प्राथमिके सृष्टिप्रारम्भे 'वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे' इत्याद्युक्तेः प्रजापतिर्भगवानलौकिकत्वेनात्मत्वेन स्थितस्य सकलस्यापि जगतस्तदाप्रभृति वेदवाचा लौकिकत्वं क्रीडार्थं नियमितवान् । ततश्चार्वाचीनानामस्माकं दृष्ट्या वेदस्य क्वचित् लौकिकार्थवेदकत्वेऽपि न तथा । किन्तु तद्दृष्ट्याऽलौकिकार्थवेदकत्वमेवेत्यलं पल्लवेन । तदेवं जैमिनीयं दर्शनमर्धजरतीयम् । केषांचिदुक्त्या नास्तिकत्वमस्मदुक्त्या त्वास्तिकत्वमिति । तथापि 'तमेव विदित्वाऽतिमृत्युमेति' इत्यादिदेशितसाक्षात्कारदिशा साक्षात्काराभावाद्दर्शनाभासत्वं तु न मुञ्चति ।

आत्मभेदं प्रकृतिपरिणामं च सांख्या मन्यन्ते । द्वेधा हि सांख्यं, निरीश्वरं सेश्वरं च । निरीश्वरास्तावदाहुः 'त्रिगुणसाम्यावस्था प्रकृतिशब्दाभिधेयं जडं प्रधानं महदादिविशेषपर्यन्तेन प्रपञ्चरूपेण पुरुषोपभोगाय परिणमतीति' । सेश्वरवादेऽप्येवम् । इयांस्तु विशेषः—यथाहि संस्कृतक्षेत्रमधिष्ठाय तत्तत्कर्षकवशाद्बीजमंकुरादिक्रमेण महान्तं वृक्षमारभत एवं क्लेशकर्मविपाकाशयैरपरामृष्टं पुरुषविशेषमाश्रित्य प्रकृतिर्जगदारभते । पुरुषा भोक्तारश्चेतनाः । प्रकृतिरेका कर्त्री भोग्या च ।

योगोऽप्युभयविधः, सालम्बनो निरालम्बनश्च। अन्यत्सर्वं प्रायः सांख्यसामान्यमत्र। विस्तरस्त्वेतदाकरे द्रष्टव्यः। एतयोरपि 'ब्रह्मकर्तृत्वतदैक्यवाक्यैर्विरोध' इति तदेव नास्तिकत्वमापन्नम्। किन्तु प्रसिद्धिमनुसृत्य किंवा 'यथा यथोपासते तत्तदेव भवति' इति विरोधं परिहृत्याऽऽस्तिकत्वम्। भेदद्वैधेनार्धजरतीयत्वमत्रापि।

अवशिष्ट इदानीं 'मिथ्यावादी नास्तिक' इति विकल्पः। तत्राद्वैतिनो मायावादिनो मिथ्यावादित्वमङ्गीकुर्वन्ति। अद्वैतसिद्ध्यादिषु तथादर्शनात्। मिथ्यात्वं च सदसद्भ्यामनिर्वचनीयत्वमिति भाषन्ते। एवं हि ते—'संविदमेकां केवलां विहाय सर्वमन्यन्मिथ्या। अनाद्यनन्ता संविच्च स्वभावेन धर्माकारक्रियाऽत्यन्ताभाववती। निर्धर्मकं ज्ञानमिति यावत्। तदेव शुद्धं ब्रह्म। तच्चाधिष्ठानमस्य नामरूपस्यानिर्वचनीयस्याविद्या-(अज्ञान) कारणस्य मिथ्याभूतस्य कार्यजातस्य। तत्लिममायायुक्तं ज्ञानं शबलं ब्रह्म। घनमायायुक्तं तदेव जीवः। घनत्वं चाऽत्र तमोऽभिभूतत्वम्। स च कर्ता सुखदुःखभोक्ता च। अनाद्यनिर्वचनीयमज्ञानमेव मायाऽविद्येति शुद्धाशुद्धसत्त्वेन भेदकेन द्विधा भिन्नम्। भेदश्च सर्वेषामेषामनादिरेव। अवस्थाद्वयं च—व्यवहारावस्था, वास्तविकी च। व्यवहारावस्थायां 'व्यवहारे वयं भाट्टाः' इति प्रतिज्ञया वेदः, तत्प्रामाण्यं, तदुक्तसाधनफलादि, सर्वं सदिव। वास्तवं तु न वेदो न तत्प्रामाण्यं नेश्वरो न साधनफलानि न किमपीति सर्वं मिथ्येत्याहुः। तथाचाऽत्राऽपि मते वेदेश्वरादिर्व्यवहार एव न वास्तवमिति नास्तिकत्वेन नास्तिकत्वेन चार्धजरतीयत्वमेव। वस्तुतस्तु माध्यमिकाः शांकराश्चाद्वैतवादिनो न परस्परं विशेषभेदभिन्नाः। तथा हि 'सर्वं शून्यमिति' माध्यमिकाः। 'संविदेव निर्विशेषाऽविषया केवलं सतीति अद्वैतिनः।' तत्र तस्या अविषयत्वान्निर्विशेषत्वाच्च सर्वप्रमाणागोचरतया शून्यत्वमेव आयाति। न च निषेधमुखेन 'नेतिनेति' इत्यादिश्रुतयो लक्षणया पारिशेष्यात्प्रतिपादयन्त्येव सद्'स्ति सेति' वाच्यम्। अप्रयोजकत्वात्। नह्येवं प्रतिपादनं प्रयोजकं भवति। गृहे घटे सत्यपि 'अस्मिन्यदस्ति तद्वयं कथमपि निर्देष्टुं न शक्नुम' इत्युक्ते कथमस्मिन्कोष्ठके घट इति ज्ञायताम्। नेतिनेति व्यावर्तितेऽपि पदार्थान्तरे घटज्ञानं दुःशकमेव। घट इत्यस्याऽपि विशेषत्वाच्च। तस्मान्निर्विशेषे परोक्षे संविद्रूपे ब्रह्मणि ज्ञातव्ये पारिशेष्यमप्यप्रयोजकमेव। 'ब्रह्म ज्ञानं संवित्' इत्यस्याऽपि विशेषविशेषत्वाच्च। यत्र हि पदार्थः प्रत्यक्षविषयस्तत्र तु विशेषवाचकैर्निर्देष्टुमशक्यत्वेऽपि व्यावर्तने पारिशेष्यात् 'अस्ती'ति ज्ञानं संभवति। यत्र पुनरविषयत्वमेव वस्तुनस्तत्र पारिशेष्यमपि कुण्ठमेव। ननु 'जानामी'त्यनुव्यवसायात्मानसिकप्रत्यक्षाल्लोकसिद्धैव संवित्। तर्हि गतमविषयत्वमौपनिषदत्वञ्च। अवैदिकता च गले पतिता। किंच लक्षणा हि शक्यसम्बन्धे भवति। निर्विशेषे तु तस्याऽसंभवान्न लक्षणासंभवोऽपि। न च काल्पनिकः संबन्धोऽस्तीति न दोषः। तस्य तेनैवाऽसत्त्वात्। मरुमरीचिकायां काल्पनिकेनैव संबन्धेन बुद्धिमतामसत्त्वनिश्चयात्। न च मरुमरीचिकाज्ञानमनिर्वचनीयमेवास्तां नाऽसत्। लोके तथाऽप्रसिद्धेः। प्रत्युताऽसत्त्वेन निश्चयः। लोकानुसारिणी हि कल्पना भवति। तस्मादन्ततः शून्यमेवापतति। तथाच बाह्यवचनम्। 'विचारासहत्वमेव पदार्थानां तत्त्वम्'। किंच 'विचारासहत्वमनिर्वचनीयत्व'मिति द्वयमपि पर्यवसाने विचारस्य समानमेव। 'इदं न वक्तुं शक्यते इदमपि न वक्तुं शक्यते' इत्यनिर्वचनीयत्वं नाम। विचारासहत्वमपि तदेवेति। पदार्थान्तरं च तत्सदृशमेवैतेषामिति तन्मतपदार्थैः परीक्ष्य जानन्तु विद्वांसः। विस्तरत्वान्नेह तन्यते। तस्मादनुयायिबौद्धान्तरैरिव मायावादिभिरपि 'सर्वं शून्य'मिति पारिशेष्यात्सूच्यते।

किं च 'प्रकृतैतावत्त्व०' सूत्रे 'वाङ्मनसातीतमविषयान्त पाति प्रत्यगात्मभूतं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मेति केषांचिदाचार्याणां वचनम्। तत्रेदं जिज्ञास्यते ब्रह्मणो नित्यशुद्धादिस्वभावः केन प्रमाणेन ज्ञातः। वेदादिति चेद्वाङ्मनसातीतत्वमविषयत्वं चाऽपोहितम्। न केनाऽपि ज्ञातं चेच्छून्यत्वम्। न च पारिशेष्येण ज्ञातमिति वाच्यम्। विकल्पासहत्वात्। किमिदं पारिशेष्यं प्रमाणमप्रमाणं वा। प्रमाणं चेत्तद्विषयत्वादविषयत्वं नष्टमन्यथा प्रमाणाभावाच्छून्यत्वमेव। तत्रैव च 'न चाऽज्ञेय'मित्यादिना किंचिदाशङ्क्य परिहारे 'नेदं शास्त्रं प्रतिपाद्यत्वेन ब्रह्मणो रूपद्वयं निर्दिशति लोकप्रसिद्धं त्विद रूपद्वयं ब्रह्मणि कल्पितं परामृशति' इति तद्वचनम्। तत्राऽपि प्रश्नः किमिदं रूपद्वयं स्वयं कल्पितं स्वयमेव वेदेनोच्यत उत लोककल्पितमनूद्यते। वेदकल्पितं चेद्वेदे वितथवादित्वारोपादप्रामाण्यवादित्वम्। लोककल्पितमिति चेद्वेदस्य सर्वेरादिमत्त्वाच्चेद वक्तुं शक्यं 'तत्सिद्धमनुवदति परामृशतीति वा'। 'तस्मान्मूर्तप्रतिपादनेऽमूर्तस्य तत्प्रतिपादने तस्य विरोधादुभयविरोधान्नैक'मितिन्यायाच्छून्यमेव। यत्र तु विरुद्धधर्माश्रयं ब्रह्म मन्यते तत्र श्रुतत्यागादिरदोषः।

किंच 'दर्शनाद्यो' स्यत्रापि श्रुतत्वाददोष इति चेन्न एकस्याऽनेकस्वभावत्वानुपपत्तेरिति तद्दूषणम् । तत्रापि वेदाप्रामाण्यवादित्वं स्थिरीभवति । तथा हि—श्रुत्युक्तं चेदुभयलक्षणकं ब्रह्म तर्हि श्रुतिप्रामाण्यवादिना तथैव मन्तव्यम् । तत्र केयं बिभीषिका 'एकस्याऽनेकस्वभावत्वानुपपत्तिर्नाम' । एकस्याऽनेकस्वभावता हि लोके विरुद्धा । लोकश्च नालौकिकदर्शी भ्रान्तश्च भवति । वेदस्तु प्रमाणमूर्धन्य इति नैकमक्षरमप्यन्यथा ब्रूते । तल्लोकानुरोधेन श्रुत्युक्तार्थखण्डनं नाम वेदाप्रामाण्यवादित्वं न निर्वहति किम् ? । तस्मात् विचारवेलायां शांकराद्वैतवादिनोऽपि तथा । तत्रार्धजरतीयं च ।

अवशिष्टाः साम्प्रदायिकास्तु सर्वसत्यत्ववादिनो लोकमननुरुन्धाना वेदाक्षरमात्रमपि निरपेक्षप्रमाणं मन्यमाना आस्तिका एव ।

तत्र तावच्छ्रीरामानुजाचार्याः—अप्राकृतहेयप्रत्यनीकसकलकल्याणगुणाकरश्चिदानन्दसत्यपरब्रह्मादिशब्दवाच्यः परात्परं वस्तु व्यापको भगवान् श्रीपुरुषोत्तमः । स च सविशेष एव । विभागानर्हे चिदचितौ तद्विग्रहः । तयोः परिणामश्चेदं विभागार्हं नामरूपि स्थूलं जगत् । अणुर्न व्यापको जीवस्त्वविधोऽपि भगवतो दासः । परमपुरुषार्थत्वेन भगवति ज्ञाते शास्त्रपर्यवसानम् । भक्त्या च साक्षात्कारः । स्वतःप्रमाणं वेदाः । तदनुकूलानि चान्यानि शास्त्राणि । भगवन्माहात्म्याऽनपहारिण्यश्च युक्तयः । 'दुःखापहारपूर्वकानन्दावाप्तिश्च मोक्षः ।' अभेदवादिन्यः श्रुतयः शरीरशरीरिणोर्लोकेऽभिन्नत्वान्वयाः । एकाकिनं देवदत्तमानयेत्युक्ते शरीरी देवदत्त आनीयते । तत्राऽभेदस्तयोः । निर्विशेषवादिन्यश्च ताः प्राकृतेतरांस्तस्य धर्मान्वदन्तीति निराकांक्षा इत्याहुः । तदेवं तेषां मतसंक्षेपः ।

ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः । ईश्वरश्चित इत्युक्तो जीवो दृश्यमचित्पुनः ॥
द्रव्याद्रव्यप्रभेदान्मितमुभयविधं तद्विदस्तत्त्वमाहु-
र्द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ ।
अन्त्यं प्रत्यक् पराक् च प्रथममुभयथा तत्र जीवेशभेदा-
न्नित्या भूतिर्मतिश्चेत्यपरमिह जडामादिमां केचिदाहुः ॥
यदण्डमण्डान्तरगोचरं च यद्दशोत्तराण्यावरणानि यानि च ।
गुणाः प्रधानं पुरुषः परं पदं परात्परं ब्रह्म च ते विभूतयः ॥ इ० ।

श्रीमध्वाचार्याः श्रीनिम्बार्काचार्याश्च प्रायो जीवेश्वरादिविषये श्रीरामानुजसमानसिद्धान्ताः । केवलं तु भगवच्छरीरविषये विमताः । ते हि समष्टिजीवरूपं त्रिपाद्विभूति ब्रह्मैव भगवद्विग्रह इति मन्यन्ते । अभेदाभिधायिन्यः श्रुतयस्तु नियम्यनियामकभावं वा चित्सामान्यं वाऽऽमनन्तीति स्वीकुर्वन्ति ।

श्रीमद्वल्लभाचार्याश्च—न खलु जीव इव भगवति शरीरशरीरिविभागः संभवति । किन्तु सर्वकारणं स हि क्षराक्षरातीतः सच्चिदानन्दः प्राकृतेतरसकलधर्मवान्मधुरमूर्तिर्भगवाञ्छ्रीकृष्णस्तथाविध एव । यथाधिकारं यथाज्ञानमेक एव विविधतया गृह्यते । तस्मात्साकारत्वनिराकारत्वादयः सर्वेऽपि धर्मास्तस्मिन्नलौकिके उपपद्यन्ते । सर्वश्रुतीनां प्रामाण्यं च तथैवाऽनपोहितं भवति । इदमत्राकूतम्—प्राधान्येन त्रिविधा जीवाः । तत्र तामसैरसमग्रग्राहिभिर्निर्विशेषं ब्रह्म, तद्भिन्नं मिथ्याप्रत्ययश्च जगदिति गृह्यते । मध्यमैः किंचिद्ग्राहिभिः सधर्मकः परमात्मा, तद्रूपं तद्भिन्नाभिन्नं च जगदिति । उत्तमैस्तु सात्त्विकैः सकलहेयेतरस्वरूपाभिन्नपूर्णगुणविग्रहः केवलानन्दो भगवान् स एव च प्रपञ्च इति गृह्यते । यदुक्तं समाधिभाषया भगवता श्रीव्यासेन 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' 'इदं हि विश्वं भगवानिवेतरो यस्माज्जगत्स्थाननिरोधसंभवाः' । जीवश्चाऽत्रामात्रश्चिद्रूपस्तिरोहितानन्दः । तद्रूपश्च जगत् । अभेदश्च वास्तवः श्रुतिवाक्यसदादिसाध्य. भेदस्तु भगवदिच्छाकृतः स्फुटदृशो दुर्निवारः । न चैवं भेदाभेद एव प्रतिपन्नो भवति नाऽभेद इति वाच्यम् । भेदस्याऽभेदधर्मत्वात् । घृतस्य द्रवत्ववत् । स्वर्णस्याऽऽकारवत् । धर्मधर्मिणोश्चाऽभेदात् । शुक्तिरजतादौ तु 'अन्यख्यातिरेव' । तथा हि-भगवान् हि लौकिकं रजतं, स्वामिकांश्च पदार्थान् मोहिन्या मायाशक्त्या सृजतीति । इदं च 'अथ रथपथः सृजती'त्यादिश्रुतिषु 'सृजती'त्यादिशब्देभ्यो ज्ञातं भवति ।

---

१—तथाविधत्वमत्र कतिपयतद्धर्मवत्त्वम् । २—अभेदे । ३—इद हि विश्वं, भगवानितर- । इद हि विश्व भगवानिव इतरः । इद हि विश्व इतर' भगवान् इति पक्षत्रयमत्र ।

प्रमाणमूर्धन्यश्च समग्रो भगवान् वेदः । प्रामाण्यं च लोकाऽनधिगतार्थाऽवगाहित्वे सति स्वबुद्धिकार्थ-हेतुककादाचित्काऽयोग्यताऽज्ञानाऽनपनोद्यभावो नाम । भगवद्गीता, व्याससूत्राणि, समाधिभाषा 'श्रीमद्भागवतं' चेति त्रिकं संदेहवारकत्वेन वेदार्थनिर्णायकमिति प्रमाणम् । तदनुकूलान्यन्यानि शास्त्राण्यपि । अनुमानं तु युक्त्यपरपर्यायो ब्रह्मणि न प्रमाणम् । केवलं तु वादे नास्तिकपराजये कनिष्ठाधिकारिश्रवणे चोपयुज्यत इति लोक एव प्रमाणम् । न [illegible] 'यस्तर्केणानुसंधत्ते स धर्मं वेद नेतर' इति वाक्येन किंचिच्छ्रमम् । तत्र तर्को मीमांसाऽपरपर्यायो ननु प्रसिद्धन्यायरूपशुष्कतर्कपरः । तत्परस्य तु श्रुतिस्मृतिषु निन्दैवेत्यलं पक्षाश्रयेण ।

भक्तिश्च साधनम् । तदुत्तरार्द्धं प्रेमासक्त्यादयः फलमित्याहुः । अत्रत्ये केचिदेवं प्रत्यवतिष्ठन्ते 'यदेषा भगवन्मार्गमूलभूता भक्तिर्वेदे नास्ति' इति । तद्विषयेऽपि किंचिल्लिखामः । वेदे भक्तिशब्दोऽपेक्ष्यते तदर्थसदाशयो वा ? । आद्ये तु श्वेताश्वतरोपनिषदि 'श्रद्धाभक्तिज्ञानयोगादवेहि' इति । अन्यत्र च 'यस्य देवे परा भक्तिः' इति स्पष्टमेव भक्तिशब्दः । अर्थाशयो चेत् । भक्तिर्नवविधा साधनरूपा, फलरूपा च स्नेहात्मिका । उभे अपि वेदे स्तः । यथा 'अभिनोनुमः ।' ऋ. मं. ४ । 'सुष्टुतिमीरयामि' ऋ. मं. २ । 'सखायमस्त्वा साध्यः' ऋ. मं. १ । 'भर्गो देवस्य धीमहि' ऋ. मं. ३ । 'स नः पितेव सूनवे' ऋ. मं. १ । 'अस्य प्रियासः सख्ये स्याम' ऋ. मं. ४ । अलं विस्तरेण भक्तिविषयेऽन्यदा वक्ष्यामः । तदयमेतेषां वचनामृतसंक्षेपः ।

'प्रपञ्चो भगवत्कार्यस्तद्रूपो माययाऽभवत्' 'विद्याविद्ये हरेः शक्ती' 'कदाचित्सर्वमात्मैव'
'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चाऽन्यथा'
'जीवस्त्वाराग्रमात्रो हि गन्धवद्व्यतिरेकवान्' 'सच्चिदानन्दरूपं तु ब्रह्म व्यापकमव्ययम्'
सर्वशक्ति स्वतन्त्रं च सर्वज्ञं गुणवर्जितम्' 'दुःखाभावः सुखं चेति पुरुषार्थद्वयं मतम्'
'धर्मः सम्पद्यते षड्भिरधर्मो ह्यन्यथा भवेत्' 'मिथ्याप्रलोभनं वेदे न कचित् कर्हिचिद्भवेत्'
'श्रीकृष्णं पूजयेद्भक्त्या यथालब्धोपचारकैः' यथा सुन्दरतां याति यत्नैराभरणैरपि'

'कृष्णे सर्वात्मके नित्यं सर्वथा दीनभावना'

'वेदमार्गविरोधेन येषां कल्पनमण्वपि, ते हि पाखण्डिनो ज्ञेयाः शास्त्रार्थत्वेन वेषिणः'

---

## अस्मिन्नणुभाष्ये त्रिसूत्र्यां तु श्रीमद्वल्लभाचार्याणामयमाशयः ।

इह जगति सर्वस्यापि बुद्धिमतो जनस्य दुःखमनादेयमादेयं च सुखं भवति । दुःखाभावाय सुखप्राप्तये च निखिलान्यपि साधनानि लौकिकालौकिकानि । अलौकिकं साधनं नाम वेदोक्तो धर्मः । अर्थश्च पशुपुत्रधनादिर्धर्मसाधनम् । एवं च दुःखाभावो मोक्षः, सुखप्राप्तिर्निरतिशयानन्दपरब्रह्मप्राप्तिः, तत्साधनं धर्मः, तस्यापि साधनमर्थ इति चत्वारोऽपि पदार्थाः फलत्वेन साधनत्वेन च अर्थनाविषया इति साक्षात्परंपराभेदेन पुरुषार्था उच्यन्ते । ज्ञानमपि मोक्षसाधनमिति धर्म एवान्तर्भवति । आत्मसाक्षात्कारे हि दुःखाभावरूपो मोक्षो भवति । परब्रह्मवाच्यभगवत्साक्षात्कारे च निरतिशयानन्दप्राप्तिर्भवतीति विवेकः । युक्तं चैतत् । आत्मनस्तदनात्वात्परमात्मनस्तु तदंशित्वात् । यद्यपि आत्मशब्दो वेदे परमात्मभगवदादिशब्दवाच्ये परब्रह्मण्येव मुख्यस्तथापि तदंशत्वाच्चिदंशे जीवेऽपि न विरुद्धः । नच निरवयवे ब्रह्मणि विभागोऽयमंशांशिनोरप्रामाणिक इति वाच्यम् । भगवदैच्छिकत्वाद्वेदोक्तत्वाद्भगवदिच्छायाश्च पर्यनुयोगानर्हत्वात् । वेदस्यालौकिकत्वात्स्वतःप्रामाण्याच्च । अत एव भगवता व्यासेन निरवयवत्वशब्दव्याकोपमाशङ्क्य 'श्रुतेस्तु शब्दमूलत्वा' दिति समाहितम् । यत्पुनरत्र सूत्रभाष्ये कैश्चित्पूर्वं सूत्रानुसारं व्याख्यायान्ते सर्वं स्वोक्तमुपजीव्योक्तं च खण्डयित्वा निर्मूलया स्वयुक्त्या समाहितमिव तत्तु स्वबुद्धिकौशलं वा बौद्धावशिष्टकार्यं वेति न जानीमः । स्वतःप्रामाण्यवेदवादिनामिदमनुचिततममिति तु जानीमः । अस्तु प्रकृतमनुसराम । एवं च दुःखाभावपूर्वको निरतिशयाखण्डानन्दलाभः परमपुरुषार्थः । तत्साधनं च ज्ञानपूर्वको वेदोक्तो धर्म इति सिद्धम् । यच्चार्थादेरपि विहितत्वाद्धर्म एव । ततश्च तत्त्वज्ञानात्मज्ञानभगवज्ज्ञानपूर्वकेण यज्ञादिनित्यकर्मादिश्रवणान्तेन धर्मेण प्रभुस्नेहोदर्केण निरतिशयाखण्डानन्दपुरुषोत्तमप्राप्तिरिति फलितम् ।

एवं च सच्चिदात्मनः परब्रह्मणश्च स्वरूपज्ञाने, 'सर्वं ब्रह्मे'ति सर्वस्य ब्रह्मत्वज्ञाने च सति, माहात्म्यज्ञानेन भगवति भक्तिरर्दोति । वेदान्ताश्च तत्त्वात्मब्रह्मस्वरूपं सर्वस्य ब्रह्मत्वं च निरूपयन्तीति पुरुषोत्तमप्राप्तिकामेन पुरुषेण तेऽवश्यं ज्ञातव्यास्तद्विषयः सपरिकरं ब्रह्म चेति भगवान्वेदव्यास उभयं युगपदाह—'अथातो ब्रह्मजिज्ञासे'ति ।

अज्ञातानि कर्माणि मुख्यफलं न ददति ज्ञातान्येव तु ददतीति कर्मादिभ्यो ज्ञानमेव पुरुषार्थसाधकमित्यतःशब्दार्थः। ब्रह्मणो भगवतः परमपुरुषस्य, वेदान्तानां च जिज्ञासा विचारोऽधिक्रियत इत्यर्थः। जिज्ञासाशब्दो हि विचारे रूढः। तेन ब्रह्ममीमांसाशास्त्रस्यास्य समाप्तिपर्यन्तं ब्रह्मविचारविषय इति फलितोऽर्थः। ब्रह्मण इति शेषषष्ठीत्वाद्ब्रह्मसम्बन्धि सर्वमेव ब्रह्मगुणतत्साधनविरोधनिराकरणादिकं विषय इत्यपि बोद्धव्यम्। ननु शेषषष्ठीपरिग्रहे ब्रह्मणोऽविचार्यत्वं गौणत्वं वा स्यात्। नैष दोषः। ब्रह्मणः सर्ववेदान्तप्रतिपाद्यत्वात्सर्वतन्त्रप्रसिद्धत्वादात्मत्वाच्च तन्मात्रे कस्याप्यास्तिकस्य न सन्देहलेशोपीति तस्याजिज्ञास्यत्वेपि न कश्चिद्दोषलेशः। जिज्ञास्यसम्बन्धित्वेन ब्रह्मणो जिज्ञास्यत्वमपि पारिशेष्यादागतमेव। न चैवं सम्बन्धितयेन विचार्यत्वे ब्रह्मणो गौणता स्यादिति वाच्यम्। शब्दे गौणत्वेप्यर्थे मुख्यत्वमेव। 'राज्ञः सेवक' इत्युक्ते शब्देन राज्ञो गौणत्वे भासमानेऽप्यर्थतो मुख्यत्वमेव। निराधाराणां गुणादीनां वर्णनासम्भवाद्विचारासम्भवाद्ब्रह्मविचार एवेति च गृहाण।

ननु 'यतो वाच' इति श्रुत्या ब्रह्मणोऽविषयत्वोक्तेर्'यो विषयः सोऽसौ जड' इति व्याप्तेश्च कथमुच्यते ब्रह्म विचारविषय इति। उच्यते—ब्रह्मणोऽविषयत्वेऽपि स्वप्रकाशत्वेऽपि चाव्यवहार्यत्वेपि स्वेच्छया 'एकोहं बहुस्यां' 'तदैक्षत' 'स आत्मानꣳस्वयमकुरुते'त्यादिप्रामाण्यात् व्यवहार्यत्वमपि। स्वानुग्रहेण परप्रकाश्यत्वमपि। वेद्यत्वं विषयत्वमपि। न चैष दोषः। स्वेच्छायाः स्वानुग्रहस्य वेदानां स्वरूपान्तःपातित्वात्स्वप्रकाशित्वस्याव्याघातात्। सर्वथाऽविषयत्वे तु 'ब्रह्मविदाप्नोति परं' 'ब्रह्म वेद ब्रह्मैव भवति' 'सर्वे वेदा यत्पदमामनन्ति' 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' 'यमेवैष वृणुते तेन लभ्य' इत्यादिसहस्रश्रुतीनामविषयत्वापत्तिः स्यात्। तस्मादविषयो विषयश्च ब्रह्मेति मन्तव्यम्।

या तु विषयत्वेन जडत्वेन व्याप्तिरुच्यते भामतीनिबन्धे सा तु स्वकपोलकल्पितैव। अविचारनिबन्धना च। तथाहि—विषयत्वेन जडत्वेन व्याप्तिं मन्वानः पृच्छ्यते, आत्मा कश्चित्पदार्थोऽस्ति न वा ?। नास्ति चेद्धुडितमास्तिकत्वेन। अस्ति चेत्तत्सत्तायां किं नाम प्रमाणम्। कस्मिंश्चिदपि प्रमाणे स्वीकृते प्रमाणविषयतयाऽऽत्मनो जडत्वापत्तिर्दुर्वारा। ननु नात्मा वेदानां पदशक्तेर्विषयः किन्तु 'नेतिनेति' इति पारिशेष्याद्वृत्त्येति सूच्यते। अहो आत्मकत्वं भवतः। तत्रापि पृच्छ्यते। पारिशेष्यमिदं सूचना चेयं प्रमाणं न वा ?। प्रमाणं चेत्तद्विषयत्वमेव। प्रत्यगियत्तिवेद्यत्वं चात्मनः सर्वतन्त्रप्रसिद्धमेवेति कृतं साहसिकार्थेन। जडत्वेन विषयत्वेन तु व्याप्तिर्भवतु नाम न तया काचिद्धानिरस्माकम्।

किंच ब्रह्मणः सर्वव्यवहारातीतत्वे स्वीकृते सर्ववेदान्तानामनर्थकता स्यात्। वेदान्ता ब्रह्मप्रतिपादनं कुर्वन्ति, कुर्वन्तु नाम। ब्रह्मणः सर्वव्यवहाराविषयत्वात्किमस्माकं धर्मं सेत्स्यतीति सर्ववेदान्तानां निरर्थकप्रतिपादकता स्यात्। 'सप्तद्वीपा वसुमती' 'राजासौ गच्छती'तिवत्। ननु 'रज्जुरियं नायं सर्प' इति वस्तुमात्रकथनेऽपि प्रयोजनसिद्धिर्भयनिवृत्तिर्दृष्टेति ब्रह्मस्वरूपपरा वेदान्ताः केवलं सांसारिककर्मोन्मुखतायां प्रवर्तयन्ति। तस्मात्र ब्रह्म प्रवृत्तिविषयम्। नैतत्किञ्चित्। न हि 'नायं सर्प' इत्युक्तिसमनन्तरमेव भयनिवृत्तिर्भवति। किन्तु नेत्रमनोव्यापारानन्तरं रज्जुसाक्षात्कारे सति। तस्मान्नायं सर्प इति वाक्यं नेत्रमनोव्यापारादौ प्रवर्तयति न स्वयं भयं निवर्तयति। तस्मान्न ब्रह्मणः सर्वथा प्रवृत्त्यविषयत्वं सर्वव्यवहारातीतत्वं वा। नचैवं स्वयंप्रकाशताहानिः। स्वस्य स्वविषयतायां स्वप्रकाशताहानेरभावात्।

तस्मात्त्रैवर्णिकैर्वेदाधिकारिभिर्ब्रह्मसम्बन्धिनां तद्गुणादीनां, ब्रह्मणो वेदान्तानां च विचारोऽवश्यं कर्तव्यः ॥१॥

ब्रह्मशब्दो ह्यनेकार्थकः। ततश्च किंलक्षणकस्य किंप्रमाणकस्य च ब्रह्मणो विचारः प्रस्तूयत इति भवति प्रश्नः।

तदुत्तरे स्वयमाह सूत्रकारः—'जन्माद्यस्य यतः शास्त्रयोनित्वात्'। अस्य अनेककोटिब्रह्माण्डात्मकस्य चेतनाचेतनोभयात्मकविविधरचनस्य महामहतः प्रपञ्चस्य यतो यस्मात्सर्वज्ञात्सर्वशक्तेः प्राकृतगुणस्पर्शमात्ररहिताद्दुपादानभूतान्निमित्ताच्च जन्मस्थितिभङ्गा भवन्ति तत् ब्रह्मेति सूत्रार्थः। ननु ब्रह्मैवास्य निमित्तमुपादानं च कारणमित्यत्र किंप्रमाणमित्याशङ्क्य सूत्रैकदेशेनाह—'शास्त्रयोनित्वात्'। शास्त्रे योनिः कारणं प्रतिपाद्यं। तस्य भावस्तत्वं तस्मात्—शास्त्रोक्तकारणत्वादित्यर्थः। अस्येतीदमा रूपनामप्रपञ्चयोर्द्वयोरपि ग्रहणम्। प्रपञ्चत्वात्। तेन येऽत्र सूत्रविभागं कुर्वन्ति स तेषां निरर्थको निःप्रमाणकश्चेति स्पष्टम्। न च सर्वज्ञत्वसाधनाय सूत्रभेद आवश्यक इति वाच्यम्। प्रपञ्चकर्तृत्वेन, 'यः सर्वज्ञः' इत्यादिश्रुतिसहस्रैश्च ब्रह्मणः सर्वज्ञत्वस्य स्वतःसिद्धत्वात्। जगत्कर्तृत्वेनैव रूपनामकर्तृत्वस्य तेनैव च सार्वज्ञ्यस्यापि च सिद्धेरपार्थएवायं प्रयासः। निश्वासस्याबुद्धिपूर्वकत्वात्सार्वज्ञासिद्धेश्च। एतन्नाप्यटीकाकर्त्रा सार्वज्ञ्यस्याविद्यकत्वस्वीकारान्महता प्रयासेन साधितस्य तस्य दृढतरापार्थत्वासिद्धेश्च। सधर्मकस्याऽवस्तुनो ब्रह्मणः साधितमपि सार्वज्ञं निष्फलं च।

१ रज्जुरियं नायं सर्प इति वस्तुकथनमात्रेऽपि प्रयोजनस्य दृष्टत्वात्। शांकरभाष्यम्। ( १–१–४ )

कारणं त्रिविधं भवति । निमित्तं कर्तृ समवायि च । उपादानमेव समवायि । तत्र ब्रह्मणः किंविधा कारणता । यदि निमित्तमेव जातो ब्रह्म, तर्हि दण्डादिवदचेतनतापत्तिर्ज्ञानशक्तेर्निरतिशयताभङ्गो वा । यदि कुलालवत्कर्तृमात्रं तर्हि सर्वज्ञताहानिस्तन्निरतिशयताभङ्गो वा । अनाप्तकामताप्रसक्तिश्च । यदि च मृद्वत्समवायित्वं, तदाऽचेतनत्वं विकृतत्वं चापद्येत । तस्मात्किंविधं ब्रह्मणो जगत्कारणत्वमिति प्रश्ने सूत्रकार आह—'तत्तु समन्वयात्' । सर्वविधकारणत्वेऽपि न कश्चन दोषलेशोऽपीति तदर्थः । ब्रह्म जगतः समवायिकारणम् । उपलक्षणविधया सर्वविधकारणं च । सर्वत्र जगति अस्तिभातिसुखात्मना ब्रह्मैव समन्वितं दृश्यत इति हेतोरित्येष सूत्रार्थः । 'आनन्दाद्ध्येव खल्विमानि भूतानि' 'सत्यं विज्ञानमानन्दं ब्रह्मे'त्यादि श्रुतिभिर्ब्रह्मणः सत्स्वरूपविज्ञानस्वरूपानन्दस्वरूपस्वीकारात् । त्रयाणामपि धर्मिरूपत्वाद्धर्मरूपत्वाच्चैक्यम् । धर्मधर्मिणोस्तादात्म्यसंबन्धस्वीकारात् । तादात्म्यस्य च भेदसहिष्णुत्वे सत्यभिन्नत्वम् । नच सत्तादीनां त्रयाणां स्वरूपात्मकत्वमेव न तद्धर्मत्वं, न वा परस्परभिन्नत्वं किन्तु चिद्रूपत्वादैक्यमेवेति वाच्यम् । विकल्पासहत्वात् । तथाहि—एकत्वेनाभिमतानामेषां कश्चिदपि भेदोऽस्ति न वा ? । अस्ति चेद्भिन्नत्वेनाद्वैतहानिः । सर्वथा भेदो नास्ति चेत्त्रयाणां सर्वथैकरूपत्वात्पर्यायतापत्तिः । सच्चिदानन्दानामेकेनापि कार्यसिद्धेः । त्रयाणामेकतमस्य सार्थकत्वादन्ययोस्तु निष्फलत्वेनानर्थकश्रुततापत्तिर्वेद स्यात् । अनर्थकश्रुततायामप्रामाण्यं न परित्यजति । किंच सर्वथा भेदराहित्ये सामानाधिकरण्यमपि न स्यात् । ननु तादात्म्यस्वीकारे ब्रह्मणः सधर्मकत्वं सगुणत्वं च स्यात् । न स्यात् । अप्राकृते निर्गुणे ब्रह्मणि प्राकृतानां गुणानां धर्माणां च वेदेनैव निषिद्धत्वात् । अप्राकृतानां तेषां तेषां च तेनैव विहितत्वात् । अचिन्त्यशक्तौ सर्वभवनसमर्थे ब्रह्मणि दृश्यमानानां विरोधानामकिञ्चित्करत्वात् । लौकिकयुक्तीनां तत्राऽप्रवेशात् ब्रह्मणोऽनतिप्रश्न्यत्वस्वीकारात् ।

तस्मात् त्रिविधमपि ब्रह्म एकमेव । धर्माणां तद्रूपत्वात् । एकमपि निर्गुणमपि निधर्मकमपि स्वरूपात्मकनिर्दोषानन्दात्मगुणसहस्रं ब्रह्म स्वेच्छया विविधप्रकारमनेकं जगद्रूपेण भवति । अत एवाह भगवती श्रुतिः—'एकोऽहं बहु स्यां प्रजायेय' 'सदेव सोम्येदमग्र आसीत्' 'स सर्वं भवति' 'स आत्मानं स्वयमकुरुत' इति ।

सत्स्वरूपं जडाः । चित्स्वरूपं जीवात्मानः । आनन्दस्वरूपमन्तर्यामिणः । सत्स्वरूपे जडत्वभानं तु जीवस्य स्वाविद्यया । ब्रह्मणो निर्दोषत्वात् । त्रिष्वपि ब्रह्मणो विद्यमानत्वादद्वैतं न हीयते । त्रयाणामपि कार्यत्वेन भेदेपि स्वरूपत्वेनाऽभेदात् । ब्रह्मस्वरूपत्वात् ।

कटककुण्डलादीनां कार्यत्वेन भेदेपि सुवर्णरूपस्वरूपेणाऽभेदात् । न च भेद एव कुतो नेत्याशङ्क्यम् । सुवर्णग्राहिणा कार्याणां कुण्डलादीनां सुवर्णत्वेनैव गृह्यमाणत्वात् । भेदे तु तानि तेन न गृह्येरन् । सुवर्णान्यत्वात् । तस्मात् ब्रह्मणो जगद्रूपेण विविधं परिणतत्वेपि शुद्धमद्वैतमेव । शुद्धमद्वैतमेव वेदान्तानां वेदानां च तात्पर्यविषयः । ये पुनर्भामतीनिबन्धे भेदाभेदखण्डने विकल्पाः 'कः पुनरयं भेदो नामे'ति पङ्क्तिमारभ्य कृताः, ते तु परमतस्याज्ञानेन स्वचित्तकल्पितमेव खण्डनाय कृता न परस्वीकृतानामिति मन्महे । तथाहि—नहि भेदाभेदवादिनो वेदान्तिनः कार्यस्य कारणस्य च परस्परं परस्पराभावरूपं भेदं, भेदाभावरूपं चाऽभेदं स्वीकृत्य भेदाभेदं साधयन्ति, येन विकल्प्य खण्डितो भवेत् । किन्तु ते 'नानात्वं भेदः', एकत्वं चाभेद' इति भेदाभेदं गृहीत्वा कार्यकारणयोर्ब्रह्मजगतोर्भेदाभेदं साधयन्ति । दृष्टान्ते कटककुण्डलादिषु नानात्वं, सुवर्णे चैकत्वम् । हेमकुण्डलकटकग्रैवेयकानीत्यत्र हेमत्वेन सर्वेषामभेदः कुण्डलत्वकटकत्वादिना च भेद इति को नाम भेदाभेदयोर्विरोधः । एवं ब्रह्मत्वेन कार्यस्य अभेदः, कार्यत्वेन च भेदः । नानात्वमेव कार्यम् । तच्च जन्मस्थितिप्रलयसमयेषु तद्धर्मत्वेन ब्रह्मणि वर्तते । घृतद्रवत्ववत् । न च शीतोष्णवत्परस्परविरुद्धयोर्भेदाभेदयोः कथमेकत्रावस्थानमिति वाच्यम् । अननुकूलतर्कत्वात् । तथाहि—शीतत्वं भिन्नाधारवर्ति, उष्णत्वं च भिन्नाधारवर्ति । तयोरेकत्रानवस्थितौ सत्यामपि न तद्दृष्टान्तेनात्र विरोधः कर्तुं शक्यः । द्वयोरप्येकाधारवर्तित्वात् । हेमत्वं कारणत्वं, कुण्डलत्वं कार्यत्वम् । तदुभयं हेमकुण्डलमित्यत्र वर्तते । प्रकृते च नानात्वं कार्यम् । तच्च त्रिष्वपि कालेषु ब्रह्मण्यद्वैते वर्तत इति को नाम विरोधः । प्रमाणमत्र सहस्रशः श्रुतयः । यः पुनरयं 'यदि हाटकादभिन्नः कटकः, कथमयं कुण्डलादिषु नानुवर्तते' इत्यादिविकल्पः सोऽयं दृष्टानिबन्धनः । तथाहि—कटकादिषु सुवर्णमनुवर्तमानं सर्वैरेवास्फुटितनेत्रैः प्रत्यक्षमेव दृश्यते । तत्र कथमयं प्रश्नः 'कथं नानुवर्तत' इति । नानुवर्तते चेत्कथं हाटकार्थिना कुण्डलादीनि सुवर्णत्वेन गृह्यन्ते । हाटकाननुवर्तने हाटकार्थिना न तानि गृह्येरन् । न चैवम् । तस्मान्मुग्धप्रतारणमेवायं विकल्पः । यच्चात्र दृष्टान्तप्रदर्शनं तदपि भिन्नविषयकमेव । इदं तु वस्तुतो ज्ञातव्यं ब्रह्मत्वेन सर्वस्याभेदः । कार्यत्वेन च सर्वस्य भेद एव । तस्मात्सर्वस्य ब्रह्ममयत्वाच्छुद्धाद्वैतमव्याहतमेव ।

प्रकृतिपुरुषयोर्मोक्षांशस्वाद्वैतहानिः । 'परमाणूनां स्वावान्तरकारणत्वस्वीकारात्र ब्रह्मणः कारणत्वव्याहतिः । समन्वयो नामाऽनागन्तुकानारोपितरूपेणान्वितत्वम् । तेनाद्रीकरजतादौ रजतसत्ताया आरोपितत्वात्सत्ताया एवा-भावात्र तस्याः सत्यप्रपञ्चत्वम् । ननु शुद्धपदमद्वैते कुतोऽभिनिवेश्यते । केवलाद्वैतमेव कुतो नाङ्गीक्रियते । उच्यते— मायासम्बन्धराहित्यमेवाऽत्र शुद्धत्वम् । केचित् ब्रह्मकारणतायां मायासम्बन्धं स्वाज्ञानसम्बन्धं वा कल्पयन्ति । ब्रह्म निर्धर्मकं निर्विशेषं मन्यन्ते । तच्च न परिणमति । माययैव परिणतमिव दृश्यत इति वदन्ति । तेन तन्मत-भ्रमोऽस्मन्मते मा भूदिति शुद्धपदं निवेश्यते । अस्मन्मते केवलं ब्रह्मैवास्य जगतः परिणाम्युपादानम् । नच तद्विकृतं भवति । अलौकिकत्वादचिन्त्यशक्तित्वाच्च ।

न च समवाय्युपादानं वा कारणं सर्वत्र विकृतमेव दृष्टं यथा मृदादि कथं पुनर्ब्रह्म समवायि न विकृतं चेत्युच्यत इति शङ्क्यम् । युक्त्या तथासिद्धेः । वेदेनैव तथासिद्धेश्च । तथाहि—स्वरूपान्तरापत्तिर्हि विकारः सा च मृदो न दृष्टा । स्वर्णस्य वा । सिद्धेऽपि घटे कृष्णवर्णगुरुत्वादिमती सा तादात्म्येन लभ्यत इति । संस्थानविशेषस्तु तस्या एव धर्मः । स च तद्रूप एव । पृथगस्थितेः । सुवर्णमपि समवाय्यप्यविकृतमेव । अन्यथा शुद्धसुवर्णग्राही शुद्धसुवर्ण-मुद्रां तन्मुद्रिकावलयादिकं वा न गृह्णीयात् । तदन्यत्वात् । गृह्णाति । तस्मात्सुवर्णमुपादानमप्यविकृतमेव । 'तुष्यतु' न्यायेन लभ्येत वा कश्चिल्लोके समवायि विकृतम् । न तेन दृष्टान्तेन ब्रह्मणि विकार आपादयितुं शक्यः । 'स सर्वं भवती'तिश्रुत्या तस्योपादानत्वेपि 'अपहतपाप्मे'त्यादिश्रुतिभिर्विकाररहितत्वप्रतिपादनात् । न च लोकविरुद्धं वेदोपि कथं प्रतिपादयेदित्याशङ्क्यम् । ब्रह्मणो व्यापकत्वमिवाविकृतत्वमपि लोकविरुद्धं समानमिति गृहाण ।

वस्तुतस्तु ब्रह्मणोऽलौकिकत्वादचिन्त्यैश्वर्यत्वादुपनिषन्मात्रवेद्यत्वाच्च विशेषतो लौकयुक्तीनां तत्राऽप्रवेश एवेत्युक्तम् । तस्माच्छुद्धं ब्रह्मैव जगदुपादानमिति सिद्धम् ।

केचिदत्र 'शास्त्रयोनित्वा'दिति सूत्रतुर्दि निराकर्तुकामाः वेदान्तानां ब्रह्मणि समन्वय प्रतिपाद्यत इति वदन्ति, पूर्वपक्षे च 'आम्नायस्य क्रियार्थत्वादि'त्यादिसूत्रस्याम्नायस्य क्रियार्थत्वमिति जैमिनीयाशयं परिकल्प्य सर्वस्यापि वेदस्य क्रियापरत्वं स्वीकुर्वन्ति ।

तेषां मते समन्वय एव न सिध्यति । सर्वस्य वेदस्य क्रियापरत्वाभावात् । पूर्वकाण्डमात्रस्य क्रियापरत्वात् । सर्ववेदस्य क्रियापरत्वे ब्रह्मजिज्ञासाया निरर्थकत्वापत्तेः । सिद्धे ब्रह्मणि साध्यत्वाभावाज्जिज्ञासाप्रवृत्तेरेवाशक्यत्वात् । किञ्च सर्ववेदान्तानां निर्धर्मके ब्रह्मणि समन्वय एवाशक्यतमः ।

वस्तुतस्तु वेदान्ताः पूर्वकाण्डश्चोभयमप्येकशास्त्रमेव । परब्रह्मप्रतिपादकत्वादिति जिज्ञासासूत्र एवाचार्यैरो-क्तम् । कर्मज्ञानरूपस्य ब्रह्मण एव प्रतिपादनं वेदे दृश्यते । पूर्वकाण्डे क्रियारूपस्य ब्रह्मणः प्रतिपादनम् । उत्तरकाण्डे च ज्ञानरूपस्य ब्रह्मण प्रतिपादनम् । ननु क्रियायाः क्रियाफलस्य च लौकिकत्वात्कथमलौकिकब्रह्मरूपत्वम् । 'यज्ञेन यज्ञमयजन्त देवा' इत्यादिश्रुतिभि'र्ब्रह्मार्पण' मित्यादिभिः स्मृतिभिश्च कर्मणोऽप्यलौकिकत्वस्वीकारात् । 'यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तर'मिति वाक्यशेषेण स्वर्गादेः क्रियाफलस्याप्यलौकिकत्वाच्च ।

तस्मात्पूर्वोत्तरकाण्डयोरन्योन्योपकारित्वादुभयोश्च परब्रह्मप्रतिपादकत्वादैकशास्त्र्यम् । ब्रह्मरूपेण ज्ञातान्येव कर्माणि फलं ददति नाज्ञातानीति पूर्वकाण्डस्योत्तरशेषित्वम् । न साधनमन्तरा ज्ञानमात्रेण फलं भवतीत्युत्तरकाण्डस्य पूर्वशेषित्वम् । शेषत्वमङ्गत्वमुपकारित्वमिति यावत् । हठात्पूर्वकाण्डस्य जघन्यफलत्वस्वीकारे तु ब्रह्मणोपि परि-त्याज्यत्वमापत्स्यति । 'य एवं वेद प्रतितिष्ठति' 'अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्ये'ति श्रुतिभिर्ब्रह्मज्ञानफलस्यापि लौकिकत्वश्रावणात् । इदं हि कर्म, यज्ज्ञानपूर्वकं कृतं तदाधिदैविकं भवति । अग्निष्टोमाधिदैविकयज्ञस्वरूपिणो भगवतो नारायणस्याविर्भावः । यथा पृथुप्रचेतःप्रभृतीनां यज्ञे । न च कर्मकरणे देहाध्यासस्य कारणत्वादात्मनश्च देहादिव्यतिरिक्तत्वात्कुतः कर्मावश्यकता । तदवावश्यकतायां च ,व्यर्थमेव साधित-मप्यैकशास्त्र्यमिति चेत् । न । 'ब्रह्मार्पणं ब्रह्महवि'रित्यादिदिशाऽनध्यस्तैरपि तैः कर्मकरणसंभवात् । अत एवोपाख्या-नेषु ब्रह्मविद्भिः कृतं कर्म श्रूयते । अत एव चाह श्रुतिः 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति' । भेदबाधकेन ज्ञानेनाऽऽत्मिकबुद्ध्या स्वरूपविषयकरहस्यज्ञानेन च यत्कर्म कृतं तदेव वीर्यवत्तरमनश्वरं ब्रह्मप्राप्तिजनकं भवतीति श्रुत्यर्थः ।

ननु द्वयोः काण्डयोरन्योन्योपकारित्वेऽन्योन्याश्रयः स्यात्? । न स्यात् । एकत्र ज्ञानं शाब्दमनन्तरं कर्मकरणेऽपरोक्षमिति नान्योन्याश्रयः । साधनफलक्रमं श्रीसुबोधिन्यां श्रीमदाचार्यचरणा यथाऽऽहुः—'तच्च साक्षात्कार इति पर्यवसितम् । तत्र विचारसहितप्रमाणेन यद्यपि निर्विचिकित्सं शाब्दज्ञानं भवति तथाप्यन्तःकरणदोषात्र साक्षात्कारः सिद्ध्यति । तदर्थं प्रथमं धर्मः । ततोऽन्तःकरणशुद्धौ वेदादिसत्प्रमाणे श्रद्धा । ततस्तदर्थस्य मननम् । ततो निदिध्यासनेन साक्षात्कार इव ज्ञानम् ।' इत्यादि ।

तस्मात् द्रव्यदेवतामन्त्रप्रमानहविरादीनां ब्रह्मात्मकज्ञानेन कर्मकरणे न कश्चिद्दोष इति द्वयोः काण्डयोरन्योन्योपकारित्वमैकशास्त्र्यं च । न त्वात्ममात्रमेव ब्रह्मेत्यन्यत्र विस्तरः । तस्मात् प्रपञ्चस्याभिन्ननिमित्तोपादानकारणं व्यापकत्वादिस्वरूपात्मकसर्वगुणशोभि प्राकृतत्वादिदोषास्पृष्टं वेदैकवेद्यं श्रीकृष्णपुरुषोत्तमादिपदवाच्यं सपरिकरं ब्रह्म, तच्छुद्धाद्वैतं च, वेदानां वेदान्तानां सूत्रादिशास्त्राणामस्य चाणुभाष्यस्य प्रतिपाद्यो विषय इति सिद्धम् ।

एतच्छास्त्रेऽधिकरणादिलक्षणं तु लीलाप्रविष्टमुम्बईबृहन्मन्दिराधिपतिभिर्विद्वत्प्रकाण्डैः कविकुलमौलिमालालालितपदारविन्दैर्गोस्वामिश्रीजीवनेशमहाराजचरणैः स्वकृतब्रह्मसूत्रवृत्तावेव निरूपितमिति सा वृत्तिरेव त्रिसूत्र्याद्यवेक्षणपूर्वलाभाय निवेदिता ततोऽवधेयम् ।

वेदान्तसूत्राणि श्रीमता वेदव्यासमहर्षिणा कदा निर्मितानीति भूतवृत्तत्वाद्यद्यपि निश्चयेन न वक्तुं शक्यते, तथापि तु श्रीमद्भागवतप्रथमस्कन्धोपाख्यानेन ज्ञायते श्रीमद्भागवतनिर्माणतः किञ्चित्पूर्वमेवारचितानीति । श्रीमद्भागवते च भगवतः श्रीकृष्णस्य लीला विषयः । भगवाञ्छ्रीकृष्णस्त्वितः पञ्चसहस्राब्दपूर्वतमे काल आसीदिति श्रीवेदव्यासमहर्षेरपि स एव काल इत्यनुमीयते ।

इदं पञ्चटीकासमलंकृतं चाणुभाष्यं श्रीमद्वैश्वानरापरावतारश्रीमद्वल्लभाचार्यैः प्रकटीकृतमित्यपरोक्षमिदानीं प्रेक्षावताम् । ते च वैक्रमे पंचत्रिंशोत्तरपंचदशशतके चंपारण्ये तैलङ्गवेल्लनाटिविप्रवंशावतंसस्यैकशतसोमयागपवित्रितात्मनः श्रीलक्ष्मणभट्टस्य पत्न्या श्रीइल्लमागारुनाम्न्याः कुक्षेः प्रादुरासन्निति सम्प्रति निखिलभारतीयजनकर्णपरंपरागतमेव । श्रीमदाचार्यचरणैर्यथैवमङ्गलाचार्येणोपहारीकृतं विष्णुस्वामिपरंपरागतमाचार्यपदं स्वीकृत्य, स्वयं च विजयनगरे श्रीकृष्णदेवराजः सभायां विवदमानान्मायावादिगणान्विजित्य राज्ञा सर्वैश्च विद्वद्भिः सहर्षमुपहारीकृतं शुद्धाद्वैतपुष्टिमार्गाचार्यपदं चोररीकृत्य भगवता श्रीपुरुषोत्तमेनाज्ञप्तं मन्त्रराजद्वयं च शिरसा संगृह्य पृथिवीमण्डलं त्रिःपर्यक्रामि । परिक्रमणसमय एव ब्रह्मसूत्राणां भाष्यं, जैमिनीयसूत्रभाष्यं, श्रीमद्भागवतभाष्यं, तत्त्वदीपनिबन्धः सप्रकाशः, प्रकरणग्रन्थाश्चेति बहुशो वादक्षमा रहस्यप्रकाशिनो ग्रन्था व्यरच्यन्त । श्रीमदाचार्यचरणानां श्रीविट्ठलनाथपरमानुग्रहेण सर्वत्र वैदुष्यादिगुणेष्वात्मनः प्रतिबिम्बाविव दीक्षितश्रीगोपीनाथचरणाः दीक्षितश्रीविट्ठलेशप्रभुचरणाश्चेति द्वौ सुतावभूताम् । उभाभ्यामाभ्यामाविर्भाविता बहुश एव शुद्धाद्वैतपुष्टिमार्गविषयका साधनदीपिकाविद्वन्मण्डनादयो ग्रन्थमणयः सम्प्रति विराजन्त इति न तिरोहितमिदानीम् ।

एतयोर्दीक्षितश्रीविट्ठलनाथप्रभुचरणानां वंशः सम्प्रति परंपरां लभमानः शोभतेतमाम् । अत्र सर्वेऽपि गोस्वामिचरणाः सकलशास्त्रेषु पारदृश्वानः पण्डितमण्डलाखण्डल एवासन्निति गणनातीतमतिगता एतत्कृता ग्रन्था एव निपुणमवसाययन्ति विदुषो जनान् । तत्र पञ्चसु टीकाकृत्सु प्रथमतो गोस्वामिश्रीमुरलीधरचरणा आसन् ।

अपरे विवरणकारा गोस्वामिश्रीगिरिधरचरणाः काश्यां गोपालमन्दिरे श्रीमन्मुकुन्दरायप्रभोश्चरणलालितलालनकृतार्था वैक्रम एकोनविंश एव शतकेऽष्टादशशतकान्ते वाऽभवन्निति साम्प्रदायिका अवगच्छन्त्येव । तृतीये वेदान्तचन्द्रिकानिर्मातारोऽपि केचनाचार्यचरणा एव । किन्तु पुस्तकद्वितयेऽपि तन्नामनिर्देशाभावाद्विशेषतस्तान्परिचाययितुमक्षमोऽस्मि । सम्प्रदायतत्त्वबुभुत्सुजनजीवातवः कारणिकाः श्रीबालकृष्णभट्टमहोदयाः (लालूभट्टजी) श्रीपुरुषोत्तमचरणसामयिका इत्यस्माभिर्वादावल्यामुक्तमेव । पञ्चमा भगवदीयइच्छारामशर्माणः प्रदीपकर्तारः । एतैर्भाष्याक्षराणि पर्यायशब्दप्रदानेन संप्रदायानन्तःपातिनामपि सरलानीव कृतानि ।

---

# उपकारस्मरणम् ।

भगवतो यशोदोत्सङ्गविहरणशीलस्य श्रीबालकृष्णप्रभोः परमोयमनुग्रहो यदहं प्रत्यूहशतैरनुपलं प्रतिहन्यमानोपि परमगहनस्याऽस्याणुभाष्यहिमगिरेरनुस्रवन्तीं त्रिपथगामिव त्रिसूत्रीमपि शोधनकर्मणाऽवातरम् । सैषा पुनः संप्रदायस्य परमामुन्नतिमाकाङ्क्षमाणानां विपश्चिदपश्चिमसंसेवितसन्निधानानामात्मना च विद्वद्धुर्याणामस्मत्सर्वस्वभूतानां गोस्वामिकुलकौस्तुभश्रीगोकुलनाथचरणानामसीमोत्साहौदार्यानुग्रहफलमिति तदनुग्रहः सर्वैरेवास्मदादिभिः साम्प्रदायिकैः सम्मान्यः । अपरंच, महाराजचरणैर्यदाहं पुस्तकस्यास्य शोधन आज्ञप्तस्तदा मत्सविधे श्रीमद्बालकृष्णपुस्तकालयस्थमेकं गोस्वामिश्रीमद्गिरिधरपादरचितं शुद्धप्रायं विवरणपुस्तकं विहाय नासीट्टीकान्तरम् । तत्समयेऽस्मत्सुहृद्भिर्विविधोपपदालंकृतैर्विद्वद्वर्यैर्भट्टश्रीवल्लभद्रशर्मभिः श्रीमुरलीधररचितैका शुद्धाऽपरा च श्रीलालूभट्टरचिता शुद्धभूयिष्ठेति टीकाद्वयं प्रथमतः प्रदत्तमिति तेषु शतशो धन्यवादानुपहरामः । तदुपकारं च चिराय न विस्मरिष्यामः । मुम्बईस्थश्रीवल्लदेवमन्दिराधिपतिभिर्विद्योत्तेजनाशयैर्गोस्वामिश्रीद्वारकेशलालमहाराजैर्वेदान्तचन्द्रिकानाम्नी टीका प्रदत्ता । अतस्तच्चरणयोर्धन्यवादानर्पयन्त उपकारं स्मरामः । प्रदीपपुस्तकं तु श्रीमद्बालकृष्णपुस्तकालयस्यमासीत् । किन्तु तद्शुद्धिभूयिष्ठमिति पंडितवर्यश्रीमिश्रलालगणपतिरामशास्त्रिमुद्रापितं प्रदीपं, यद्यपि तन्मुद्रितमपि बहुतरमशुद्धं तथापि प्रेसप्रतिफलकस्थाने बहुशो व्यवाहरमिति तेषामप्युपकारः । किन्तु नैकैकपुस्तकेन भाष्यटीकासदृशो ग्रन्थाः शोधितुं शक्या इति भारतमार्तण्डश्रीगट्टूलालपुस्तकालयव्यवस्थापकः सम्प्रदायग्रन्थसंशोधनप्रकाशनपरमोत्साहो श्री. पु. वकीलाद्युपपदधारी मूलचन्द्रतुलसीदासगुप्तोऽन्यटीकाप्रतिफलकदान उक्तः । ते च तत्पुस्तकालयाध्यक्षस्य सकाशात्श्रीमुरलीधरव्याख्याद्वयं श्रीगिरिधररचितं च विवरणं शुद्धिभूयिष्ठमदात् । ततश्चास्मै धन्यवादः । तत्र च पं० श्रीगट्टूलालमहोदयपुस्तकालयादिसंस्थानसर्वाधिकारिभिर्धर्माग्रहिभिर्माननीयश्रेष्ठित्रिभुवनदासवरजीवनदासमहाशयैरपि पुस्तकप्रदानाज्ञापनैरुपकृतमिति तेपि धन्यवादार्हाः । निर्णयसागराश्रितानां पत्रशीकरोपाह्वश्रीवासुदेवशास्त्रिणामस्मत्सुहृदामुपकारातिशयमपि स्मरामि । यैर्दृष्टिदोषावदिष्टा अशुद्धीरदृष्टपूर्वाः श्रुतीश्च संशोध्य मयि महदुपकृतम् ।

एतत्पुस्तकमस्मन्महाराजचरणैः संगृहीतेन संबद्रव्येण लब्धावतारम् । अन्ततस्तु—

> गच्छतः स्खलनं क्वापि भवेदेव प्रमादतः ।
> हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इति विद्वत्सु विज्ञापयन्विरमामि पल्लवात् ।

विदुषां प्रणयवशंवदो

देवर्षिभट्टश्रीरमानाथशास्त्री

शारदीपूर्णिमा सं० १९७८

पुष्टिमार्गीयसिद्धान्तकार्यालयः

बड़ामंदिर—मुम्बई.

श्रीमद्वल्लभाचार्यविरचितं

# ब्रह्मसूत्राणां अणुभाष्यम् ।



पञ्चभिष्टीकाभिः संवलितम् ।

तत्र प्रथमं जिज्ञासाधिकरणम् ।

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

इदमत्र विचार्य्यते–वेदान्तानां विचार आरम्भणीयो न वेति ।

---

श्रीकृष्णाय नमः ।

गोस्वामिश्रीमन्मुरलीधरविरचिता श्रीमदणुभाष्यव्याख्या ।

योऽनन्तोऽनन्तरूपः सृजति जगदिदं पाति हन्ति स्वशक्त्या
तद्रूपोऽपि द्विरूपः सकलगुणनिधिर्निर्गुणो वश्यमायः ।
संयद्वामो गृहीता करपदरहितो वामनो विश्वतःपात्-
सोऽयं मे वाचि भूयान्निजपदनलिनासक्तभक्तानुकम्पी ॥ १ ॥

श्रीगिरिधारी तनोतु कुशलानि ।

श्रीबालकृष्णोपनामश्रीलालूभट्टकृता गूढार्थदीपिका ।

फलं वेदान्तानां भवति परमेतत्सुखमयं विनिर्णीतं गीताशुकवचनसारोऽपि तदिदम् ।
इदं जीवातुः श्रीव्रजवरवधूनां गिरिधर! त्वदीयं लावण्यं नयनयुगले मे विलसतु ॥ १ ॥

श्रीहरिः ।

केशिद्विरचिता वेदान्तचन्द्रिका ।

नमामि गोपिकाधीशं नन्दसूनुं कृपानिधिम् । गोवर्धनधरं श्रीमत्कृष्णं मत्प्राणवल्लभम् ॥ १ ॥
अधीशं सर्वविद्यानां स्वाचार्यं कृष्णवाक्प्रभुम् । श्रीमद्वल्लभ इत्याख्यं प्रणमामि मुहुर्मुहुः ॥ २ ॥

श्रीहरिः ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

श्रीश्रीनाथमुकुन्दरायरसिकस्वानन्दवेषोज्ज्वलश्रीमद्वल्लभविठ्ठलेशसुभगश्रीशैलराजास्सदा ।
अत्राऽऽगत्य मदीयमूर्द्धनि कृपावश्या मुदा स्वासते लीलारासपरास्त्वदीयचरणाम्भोजे नमाम्यर्थदे ॥ १ ॥

श्रीकृष्णाय नमः ।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

श्रीवल्लभकृपासिन्धो श्रीविठ्ठलदयानिधे ।
श्रीगोपालगुरो युष्मत्कृपालेशोऽस्तु मे सदा ॥ १ ॥

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

रूपप्रपञ्चासक्तांशवारणे शक्तमव्ययम् । शाश्वतं वेदकल्पद्रुमाश्रये तापतापितः ॥ २ ॥

यद्वेदान्तरहस्यमेव निखिलं सूत्रेषु संसूचितं
नानाभ्रान्तितमःकपाटपिहितं ज्ञातुं न शक्यं जनैः ।
तच्छ्रीमन्मुखनिर्गताक्षरपदैः संसेवितैः सूरिभि-
र्विज्ञातं भवति ध्रुवं भगवतो वक्त्राम्बुजं तं स्तुमः ॥ ३ ॥

कृत्वा चतुर्धा शब्दाख्यं ब्रह्म वेदं तु व्यापिनम् । यश्चक्रे तमजं कृष्णद्वैपायनमहं भजे ॥ ४ ॥

जीवा दुष्टस्वभावास्तव पदनलिनासक्तिमात्रात्स्वकीयं
त्यक्त्वा दुष्टस्वभावं सपदि गुणगणैस्त्वत्पदाब्जं भजन्ते ।
यद्वाचश्चाप्यवद्यास्तव वदनवचःसङ्गमात्रेण दोषं
संत्यज्य स्वं महात्मंस्तव गुणकथने सानुरागा भवन्तु ॥ ५ ॥

श्रीव्रजनाथभट्टकृता गूढार्थदीपिका ।

वेदबोधितशृङ्गारस्थायिभावात्मकं महः । सुखाकारं परं ब्रह्म बालकृष्णाभिधं भजे ॥ २ ॥
श्रुतिगीताब्रह्मसूत्रश्रीमद्भागवतस्थितम् । तत्त्वार्थं योऽवदद्भाष्ये तं श्रीवल्लभमाश्रये ॥ ३ ॥
श्रुत्यादीनि प्रमाणानि चत्वारि गिरिधारिणम् । गायन्तीत्यवदद्भाष्ये तं वन्दे विट्ठलेश्वरम् ॥ ४ ॥
ब्रह्मसूत्राणि जीवानां कृष्णैकनामभृद्धये । कथयामास तं कृष्णद्वैपायनमुनिं स्तुमः ॥ ५ ॥

कश्चिद्विरचिता वेदान्तचन्द्रिका ।

वन्दे श्रीकृष्णवागीशसूनुं श्रीविट्ठलेश्वरम् । यत्कृपातोऽणुभाष्यीयसिद्धान्तो हृदि भासते ॥ ३ ॥
स्वाचार्यचरणाम्भोजमकरन्दरतं सदा । तातं श्रीरघुनाथाख्यं वन्देऽहं कृष्णरागदम् ॥ ४ ॥
श्रीमद्रघुकुले रत्नं गुरुं श्रीवल्लभाभिधम् । नत्वाऽणुभाष्यविवृतिं प्रभां विस्तारयाम्यहम् ॥ ५ ॥

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

श्रीश्रीनाथं नमामि श्रीनवनीतप्रिय तथा । नौमि श्रीमथुरेशं श्रीविठ्ठलेशं दयार्णवम् ॥ २ ॥
नौमि श्रीद्वारिकाधीश सर्वकामार्थदायकम् । श्रीमद्गोकुलनाथ च नौमि कारुण्यविग्रहम् ॥ ३ ॥
तथा नमामि त श्रश्वः श्रीगोकुलचन्द्रमाः । श्रीमन्मुकुन्दरायाख्यं नौमि भक्तार्थपूरकम् ॥ ४ ॥
नमामि लीलाललितं श्रीमन्मदनमोहनम् । नमामि श्रीबालकृष्णं श्रीमन्नटवर तथा ॥ ५ ॥
यः स्वीयान्गतसाधनानगणयन्नानापराधान्परानेकैनैव कृपासुधाजलधरासारेण संसिञ्चति ।
श्यामत्वं निजशोभयाऽपरवपुर्ध्यानेन यद्गौरतां, त रायोत्तरशब्दमुद्धृतनिज श्रीमन्मुकुन्दं भजे ॥ ६ ॥
श्रीमन्मुकुन्दराय त्वच्चरणसरोजे हि मन्मनो भृङ्गः । वासं करोतु सततमति(?)स्त्वां पतिं प्रभु नौमि ॥७॥

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

अथ खलु भगवान्वेदव्यासकर्त्ता बादरायणनामा महामुनिस्तत्त्वज्ञानमन्तराऽऽत्मस्वरूपाऽज्ञानाऽन्यथाज्ञानाभ्यामिष्टनिवृत्त्यनिष्टप्राप्तिरूपाभ्यां खिद्यमानान् जीवान्निरीक्ष्य कृपाभिः परीतस्तत्प्राप्तिनिवृत्त्युपायं विचारयं'स्तमेव विदित्वाऽतिमृत्युमेति' 'आत्मलाभान्न परं विद्यते' 'तरति शोकमात्मवित्' 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितमि'त्यादिश्रुतिभिरात्मतत्त्वज्ञानमेव तत्साधनत्वेनावगत्य तस्य पुरुषतन्त्रस्याऽविधेयत्वा'दात्मा वा रे द्रष्टव्य' इत्यात्मदर्शनमनूद्य तदुपायत्वेन श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नामाङ्गि विधीयत इति कश्चित् । वस्तुतस्तु शब्दादपरोक्षज्ञानस्याग्रे निराकरिष्यमाणत्वाच्छ्रवणादीनां पूर्वपूर्वस्योत्तरोत्तरसाधकत्वात्स्वतन्त्रा एवैते विधय इति मन्तव्यम् । तथा च सिद्धे निदिध्यासने ततो द्रष्टव्य इत्यनेन मानसीक्रियारूपमुपासनमेव विधीयते, न त्वात्मदर्शनमनूद्यते ।

श्रीकाल्लभट्टकृता गूढार्थदीपिका ।

अथाऽतो ब्रह्मजिज्ञासा । १ । ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभाविति वाक्यादथशब्दप्रयोगेन मङ्गलमाचरितुं निखिलाचार्यवर्याः श्रीवल्लभाचार्यचरणाः सूत्रमेवाऽऽदौ पठन्ति—'अथातो ब्रह्मजिज्ञासे'ति । सूत्रार्थस्तु-यतः कर्मादिभ्यो ब्रह्मज्ञानमेवाऽधिकमिष्टसाधनमतो ब्रह्मजिज्ञासा ब्रह्मविचारोऽथाऽधिक्रियते प्रारभ्यत

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

अथ ब्रह्मसूत्रभाष्यचिकीर्षवः श्रीमत्स्वीयशिक्षार्थमाचार्यप्रभुचरणाः सर्वमङ्गलरूपत्वात्सूत्रोपन्यासेनैव मङ्गलमाचरन्ति । 'अथाऽतो ब्रह्मजिज्ञासे'ति । सूत्रलक्षणं तु-'लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च । सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिण' इति । 'स्वल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

श्रीमद्गोपाललालं मृगमदविलसद्भालमालं कृतस्व-
स्वामिन्या सुस्मितास्यं ललितगतिलसन्मालगोपालबालम् ।
वेणौ विन्यस्तहस्तं रतिपतिमदहृत्स्वर्णगात्रं सुनेत्रं
रासक्रीडादिलोलं सुललितवसनं राधिकेशं नमामि ॥ ८ ॥
आनन्दरूपिणं देवं विश्वाविर्भावकारणम् । श्रीगोपालमहं वन्दे श्रीगोपीजनवल्लभम् ॥ ९ ॥
नानामतेषु प्रविवेककारि श्रीपुष्टिमार्गप्रवहप्रदर्शि ।
श्रीवल्लभाचार्यपदारविन्दं सुपट्पदीभूतमना नतोऽस्मि ॥ १० ॥
सुखेनैव परावाप्तिसाधिकायाश्च पद्धतेः । बोधकौ श्रीमदाचार्यचरणौ प्रणतोऽस्म्यहम् ॥ ११ ॥

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

चक्षुष्मतां प्रकाशाय भाष्यार्थस्य विना श्रमम् ।
इच्छारामः करोतीमं दीपं दिव्यं सुखावहम् ॥ ४ ॥

अथशब्देन मङ्गलमाचरन्तो ग्रन्थारम्भमाहुः । अथेत्यादि । अथशब्दोऽर्थचतुष्टये वर्तते । मङ्गलेऽधिकारे आनन्तर्ये अर्थान्तरोपक्रमे च । 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्मा-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

**'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते सर्वमिदं विदितमि'**त्यत्र हि दर्शनानन्तरं सर्वविज्ञानोक्तेः । ततः पश्चाद्भक्तिविद्यासम्पत्तौ ब्रह्मापरोक्षानुभव इति सम्भवत्येकवाक्यत्वे वाक्यभेदस्याऽन्याय्यत्वात् । अत एव समासेनेति वाक्यसन्दर्भे ब्रह्मभावाऽनन्तरं भक्तौ सत्यां भगवज्ज्ञानमित्युक्तम् । तत्र कश्चित्पुण्यपुञ्जपरिपाकवशान्निरतिशयपुरुषार्थप्रेप्सायां तदुपायं वेदेऽन्विष्यमाण **'आत्मनस्तु कामाय सर्वं प्रियं भवतीत्या'**दि पश्यन्नात्मशेषतयैवाऽस्य सर्वस्य प्रियत्वोक्तेरात्मज्ञानमेव, **'तरति शोकमात्मविदि'**त्येकवाक्यतायां तदुपाय इति निश्चिनोति । आत्मव्यतिरिक्तं सर्वमेवाऽसदिति बुध्वा, तस्मात्सर्वस्मादेव विरक्तोऽधिकारीति च ।

तत्र श्रवणं नामोपक्रमादिभिर्लिङ्गैर्वेदान्तवाक्यानामाचार्यमुखाच्छक्तितात्पर्यनिर्णयः । **मननं** नाम वाक्यानुग्राहकन्यायशीलनम् । निदिध्यासनं च श्रवणे मनने चेतरानुसन्धानराहित्येन तत्र मनो-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

**सूत्रं सूत्रविदो विदु'**रिति च । **'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदु'**रिति भाष्यलक्षणम् । अत्र वार्तिकेऽतिप्रसङ्गवारणाय सूत्रानुसारिभिरिति वाक्यविशेषणम् । वार्तिके सूत्रप्रतिकूलार्थवर्णनस्याऽपि सत्त्वात् । वृत्तावतिव्याप्तिनिरासाय स्वपदानि च वर्ण्यन्त इति । अथ खलु भगवान्व्यासोऽस्याऽऽरम्भसूत्रस्यादावेव जिज्ञासापदेनैतदधिकरणपञ्चाङ्गानि, वेदान्तशास्त्रानुबन्धचतुष्टयं चार्थतः प्रदर्शयन्नधिकर-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

रासादिलीलारसपूरिताङ्गं निजान्तरङ्गानुजराजहंसम् ।
मायीन्द्रकुम्भीन्द्रहरीन्द्रमीशं श्रीविठ्ठलेशं प्रणमामि नित्यम् ॥ १२ ॥

श्रीहरेः प्रीतिनिष्ठानां सतां स्वान्ते नियोजकौ । श्रीविठ्ठलेशचरणौ प्रणमामि पुनः पुनः ॥ १३ ॥
वन्दे श्रीयदुनाथांश्च भाष्यार्थस्याऽवबोधकान् । सर्वेषामनुकम्पार्थं निजमार्गप्रदर्शकान् ॥ १४ ॥
गुरोर्गोस्वामिनः श्रीमद्द्वारकानाथशर्मणः । पादारविन्दयुगलं प्रणमामि स्मरामि च ॥ १५ ॥
श्रीमत्प्रभुचरणात्मजगोस्वामीन्द्रो महाराजः । यत्कृपया मयि राजनि पुष्टिफला राज्यवरलक्ष्मीः ॥१६॥

तत्सूनोर्मधुसूदनस्य चरणौ प्रद्युम्ननामा विभु-
र्योऽभूत्तत्तनयस्तदीयचरणौ नौम्यर्थदौ सन्ततम् ।
श्रीमद्विठ्ठलनाथनामतनयो योऽभूत्तु सर्वार्थद-
स्तत्पादौ प्रणमामि तस्य तनयः प्रद्युम्ननामा विभुः ॥ १७ ॥
तत्पादाब्जयुगं नमामि तनयो यस्तस्य सेवार्थभूः
श्रीमद्विठ्ठलनाथनामपुरुषस्तत्पादयुग्मे नतिः ।
तस्याऽऽसीत्तनयो मदीयजनको गोपालनामा विभु-
र्गोस्वामी कुलवारिधौ हिमकरस्तत्पादपद्मे नतिः ॥ १८ ॥

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीपः ।

ठिकौ स्मृता'विति वाक्याच्छ्रवणमात्रेणैवाऽथशब्दस्य माङ्गल्यसम्पादकत्वाच्छास्त्रचरणैर्मङ्गलार्थं तस्यैवादौ प्रयोगादथ शब्दानुशासन'मित्यत्र महाभाष्यकारैरपि मङ्गलार्थमथशब्दस्यादौ निबन्धात्स्वयमपि भाष्य-

१ श्रवणमनने चेति खपुस्तकम् ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

निवेशनम् । तथा चोक्तशक्तितात्पर्यनिर्णयरूपस्य श्रवणस्य वेदान्तविचारापरपर्यायस्याऽसर्वज्ञेन कर्तुमशक्यत्वात्स्वयमेव जिज्ञासापदेन सन्देहप्रयोजने सूचयन् वेदान्तवाक्यविचारलक्षणां ब्रह्मजिज्ञासां प्रतिजानीते—'**अथातो ब्रह्मजिज्ञासे**'ति सूत्रेण । चुरादौ सूत्रशब्दो वेष्टनग्रथनविमोचनार्थः पठित इति, सूत्र्यते वेष्ट्यते ग्रथ्यते सन्देहाद्विमोच्यतेऽर्थोऽनेनेति सूत्रम् । पुंसि संज्ञायां घः प्रायेणेति घः । भूयानर्थोऽल्पाक्षरैर्यत्र वेष्ट्यत आच्छाद्यते ग्रथ्यते, सन्देहाद्विमोच्यते वेति सूत्रमित्यर्थः पर्यवसति । अत एव '**लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च । सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिण**' इति सूत्रलक्षणमपि सङ्गच्छते । ततश्च भाष्यकारः सूत्रकारसर्वज्ञतां ख्यापयितुं, जिज्ञासापदसूचिते सन्देहप्रयोजने च दृढीकर्तुमादौ तत्कृतं जिज्ञासापदवाच्यं विचारमेवाक्षिपति—'**इदमत्र विचार्यते**' इत्यारभ्य '**पूर्वः पक्ष**' इत्यन्तेन सन्दर्भेण । भाष्यलक्षणं तु '**सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदु**'रिति । **यत्रार्थो वर्ण्यते तद्भाष्यमि**त्युक्ते सागरादिवर्णनस्य भाष्यत्वं स्यात्तद्व्यावृत्त्यर्थं सूत्रेति । पदवृत्त्यादावतिव्याप्तिवारणाय वाक्यैरिति । वार्तिके सूत्रप्रतिकूलवर्णनस्यापि सम्भवात्तद्व्यावृत्त्यर्थं सूत्रानुसारिभिरिति ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

कृष्णपादाम्बुजद्वन्द्वप्रेममूर्त्योः शिवोदयम् ।
श्रीमन्मातुः पादयुगं कृष्णावत्या नतोऽस्म्यहम् ॥ १९ ॥
श्रीकृष्णस्य कृपाप्राप्तसुखो गिरिधरः सुधीः ।
कुर्वे विवरणं श्रीमदणुभाष्ये यथामति ॥ २० ॥
क्वाहं मन्दमतिः क्वेदमणुभाष्यार्थचिन्तनम् ।
अत्रार्थे श्रीमदाचार्यचरणौ शरणं मम ॥ २१ ॥
भाष्यस्याक्षरगुम्फोऽयं न बुद्ध्या कलितुं क्षमः ।
तथापि श्रीमदाचार्यकृपयाऽत्र कृतिर्मम ॥ २२ ॥

अथ खलु परमकारुणिका भगवन्तो बादरायणा अनेकपरिवत्सरसमयादारभ्य भगवद्वियोगजनितानन्दतिरोभावाऽनधिगतसाङ्गस्वाध्यायान्प्रेक्षावतांस्त्रैवर्णिकान्प्रवाहमार्गपतितान्समीक्ष्य केवलं विचारमात्रेणैव तेषां मननादिद्वारा नित्यलीलायां परात्परपुरुषोत्तमप्राप्तिं विधातुं विचारशास्त्रं प्रारिप्सितवन्तः प्रथमं जिज्ञासाधिकरणं रचयाञ्चक्रुः—**अथातो ब्रह्मजिज्ञासा** । अथशब्दस्तु, श्रीमदाचार्यचरणैर्भाष्ये अथयेत्यादिनाऽधिकार एव सिद्धान्तितः । व्याकरणभाष्ये त्वथेत्ययं **शब्दोऽधिकारार्थः** प्रयुज्यत इत्युक्तम् । तत्राधिकारः प्रस्तावो द्योत्यत्वेनास्य प्रयोजनमिति कैय्यटः । तत्र प्रस्तावः प्रारम्भ इति विवरणम् । एवं च अथेतिशब्दः प्रारम्भार्थे प्रयुज्यमानः स्वरूपतो मङ्गलार्थमपि

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

काराः शिष्यशिक्षार्थं मङ्गलमाचरन्तो मङ्गलार्थमथशब्दमुपनिबध्नन्तोऽथशब्दघटितसूत्रमेवादौ निबध्नन्ति—**अथातो ब्रह्मजिज्ञासा** इति । सूत्रलक्षणं तु 'लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च । सर्वतः-

१ प्रयोजनमिति क्वचित्पुस्तकम् ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

वृत्तिव्यावृत्त्यर्थं स्वपदानीति । 'इदमि'ति । बुद्धिस्थमित्यर्थः । 'अत्रे'ति । व्यासकर्तृके वेदान्तविचार इत्यर्थः । बुद्धिस्थमेवोद्घाटयन्ति । **'वेदान्तानां विचार आरम्भणीयो नवे'**ति । व्यासेनेति शेषः । तत्र प्रथमं पूर्वपक्षमुद्दिशन्ति–**'नारम्भणीय'** इति । हेतुं पृच्छन्ति **'कुत'** इति । तत्रोपप-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

इति । 'इदमत्रे'ति । **विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । सङ्गतिश्चेति पञ्चाङ्गं शास्त्रे**ऽधिकरणं स्मृतमिति लक्षणाद्विषयादिपञ्चकघटितं वाक्यमधिकरणमतोऽस्मिन् सूत्र इदं वक्ष्यमाणमुपोद्घाततया चिन्त्यते । जन्मादिसूत्रप्रभृतिषु वेदान्तानां विचारणीयत्वात् । **चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधा** इति लक्षणात् । **'वेदान्तानां विचार'** इत्यादि । वेदान्तानां विचारो विषयः ।

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

रणमिदं सूत्रं प्रणीतवान्न तु ब्रह्मविचारप्रतिज्ञामात्रार्थमिदम् । ततस्तत्सर्वं प्रदर्शनीयमित्याशयेनाहुः- **'इदमि'**ति । वक्ष्यमाणेतदधिकरणपञ्चाङ्गं शास्त्रानुबन्धचतुष्टयं चेति सर्वमिदमोऽर्थः । सर्वनाम्नो बुद्धिस्थपरामर्शकत्वात् । 'अत्रे'ति । अस्मिन्नेव सूत्रे । **विचार्यत** इति । अग्रिमसूत्रेषु वेदान्ता एव विचारणीया इत्युपोद्घातसङ्गत्या चिन्त्यत इत्यर्थः । अत्राऽस्मामिति शेषो ज्ञेयः । सा च प्रकृतिसिद्ध्यनुकूलार्थस्मृतिः । तादृशार्थनिरूपणेच्छाविशेषो वा । प्रकृतसिद्ध्यनुकूलचिन्ताविषयत्वं वा । तत्र **'विष-**

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

भवति । मृदङ्गध्वनिवत् । यथाऽन्यार्थं नीयमानस्य दध्यादेर्मङ्गलार्थत्वमपि । यद्यप्यधिकारो नाम **त्रिप्रकारक** इति **षष्ठीस्थानेयोगेति** सूत्रे व्याकरणभाष्य उक्तम् । तथाऽपि प्रकृतेऽथपदसमभिव्याहारे प्रारम्भाऽपरपर्याय एवाधिकारो ह्यत्र गृह्यत इति । आरभ्यत इत्यत्राङ्पूर्वकरभधातोराद्यकृतिरर्थः । तस्य च विषयतासम्बन्धेन विचारार्थैकदेशे व्यापारेऽन्वयः । आद्यकृतित्वं च स्वविषयकृतिध्वंसासमानकालीनस्वविषयककृतित्वम् । स्वं विचारस्तद्विषयिणी या कृतिस्तादृशकृतेर्ध्वंसस्तृतीयादिक्षणे वर्तते । तदसमानकालिका या विचारविषयिणी कृतिः सा प्रथमद्वितीयक्षणे वर्तत इति कृत्वा तत्राऽऽरभ्यत इति व्यवहारः । अत इति चतुर्थ्यन्तम् । **आद्यादिभ्य उपसङ्ख्यानमित्यनेनै**तच्छब्दात्सार्वविभक्तिकस्तसिः । एतदर्थमित्यर्थः । अज्ञानार्थं विचार इत्यस्मिन्नर्थे तात्पर्यग्राहकत्वम् । इदं चाग्रुपदमेव भाष्ये स्फुटीभविष्यति । जिज्ञासापदस्य रूढ्या विचारार्थकत्वं श्रीमदाचार्यचरणैर्भाष्य एवाग्रे, श्रीपुरुषोत्तमैः प्रकाशेऽपि प्रतिपादितम् । अथ श्रीमदाचार्यचरणैर्विचारितं मन्दबुद्धीनां तु सूत्राणां स्वल्पाक्षरपदवत्त्वेन दुरूहत्वादर्थज्ञानाऽभावादुद्धारो न भविष्यतीत्यधिकरणानां पञ्चावयव-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

सारभूतानि सूत्राण्याहुर्मनीषिण' इति । 'स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुरि'ति च । भाष्यलक्षणं च 'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुरि'ति । एतल्लक्षणस्य वाक्येतिव्याप्तिवारणाय सूत्रानुसारित्वमुक्तम् । वृत्तावतिव्याप्तिवारणाय स्वपदानि च वर्ण्यन्त इत्युक्तम् । अधिकरणमवतारयन्ति **'इदमत्रे'त्यादिना** । नन्वधिकरणस्य पञ्चाङ्गत्वात्पञ्चाङ्गानि च 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । संगतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृत'मित्यत्र विचाररूपविषयस्यानिर्णीतस्य सूत्रादुपस्थितावपीतराङ्गानां सूत्रा-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

**यो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । प्रयोजनं च पञ्चाङ्गं शास्त्रेऽधिकरणं मतमि**'त्यधिकरणलक्षणादधिकरणशरीरघटकपञ्चाङ्गान्येवादावाहुः—'**वेदान्तानामि**'त्यारभ्य '**बोधयन्ती**'त्यन्तेन । आपाततः प्रतिपन्नः सन्दिग्धार्थो विषयः । तादृशश्चाऽत्र वेदान्तविचार एव । वेदान्तशब्दवाच्या उपनिषदः । तदर्थनिर्णायकानि ब्रह्मसूत्रतद्भाष्यादीनि च । विचारो नाम साधकबाधकप्रमाणादिभिस्तदर्थचिन्तनमननाऽपरपर्यायरूपः । तथा तदर्थसमर्थनं वा तत् । ननु सौत्रब्रह्मजिज्ञासामपलप्याऽसौत्रवेदान्तजिज्ञासाविषयकाणि तान्युपन्यस्तुं कथं युक्तानीति चेत् । सत्यम् । शब्दतोऽर्थतो वा सन्दिग्धं खलु विचार्यम् । वेदान्ताश्चार्थतस्तथेति तद्विचारविषयकाणि तानि युक्तान्येवेति न दोषः । नहि ब्रह्मण्यस्ति नास्तीति सन्देहः समुचितः । न च तज्जिज्ञास्यं न वेतिरूपः स उचित इति वाच्यम् । '**तद्विजिज्ञासस्वे**'ति श्रुत्या तन्निश्चायनात् ।

वस्तुतस्तु ब्रह्मजिज्ञासेत्यत्र शेषषष्ठ्यैव ब्रह्मसम्बन्धितज्ज्ञानोपयोगिवेदान्तविचारोऽपि प्रतिज्ञातस्तत्रैवेति नाऽसौत्रत्वं ब्रह्मविचारस्य । विहितत्वेनाऽसन्दिग्धत्वात् । अग्रे च वेदान्तैरेव ब्रह्मविचारस्य करिष्यमाणत्वात्तद्विचारविधेश्चाऽनुपलम्भेन सन्दिग्धत्वात्तद्विचारविषयकाण्येव तानि प्रदर्शयितुं युक्तानीति न कश्चिद्दोषलेशः । न च ब्रह्मविचारः सौत्रो वेदान्तविचारस्त्वर्थाक्षिप्त एवेति व्यर्थं तद्विषयपरत्वप्रदर्शनमिति वाच्यम् । विनिगमकाऽभावात् । राजदृष्टान्ताऽसिद्धेश्च । शेषषष्ठ्यन्तब्रह्मपदेनैव तस्याऽपि प्रतिज्ञातत्वादर्थाक्षिप्तत्वस्य वक्तुमशक्यत्वाच्च । न चेयं कर्मषष्ठी । तदग्रे निराकरिष्यन्ति भाष्यकृत एव । न च वेदान्तविचारस्याऽवैधत्वमिति शङ्क्यम् । पूर्वतन्त्र एवाऽध्यापनाऽदिविधिनैव विहितत्वस्य स्थापितत्वात् । वेदान्तविचारविषयकसंशयादिप्रदर्शनरूपो विशयो वेदान्तविचारः कर्तव्यो न वेत्याकारकस्तमेवाहुः—

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

वर्णनद्वारा यावत्सूत्रार्थो भाष्यरीत्याऽल्पो वर्णितः । तत्र प्रथमसूत्रेऽधिकरणाङ्गपञ्चकविचारं कर्तुं प्रतिज्ञामाहुः—'**इदमग्रे**'ति । इदं बुद्धिस्थम् । अधिकरणाङ्गपञ्चकमिति शेषः । **विशयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेधिकरणं स्मृतमिति** लक्षणात् । अत्र पञ्चाङ्गतात्पर्यकेऽस्मिन् सूत्रे । अथ सूत्रस्य स्वल्पाक्षरपदवत्त्वात् कथं तेन पञ्चाङ्गावयवरूपमधिकरणं बोद्धव्यमिति चेत् । मैवम् । विचारे प्रसक्ते कर्तव्याकर्तव्यसंशयस्यापि प्रसक्तिः । एवंरीत्या पूर्वपक्षादीनां प्रसक्तौ पञ्चकतात्पर्येण बोधकत्वं सूत्रस्य बोध्यम् । विचार्यते । उपोद्घातसङ्गत्येति शेषः । एतेन पञ्चावयवमध्ये चरमा सङ्गतिर्दर्शिता । अथ साधारणधर्मवद्धर्मिज्ञानस्य संशयजनकत्वाद्विचाररूपधर्मिज्ञानं विना संशयो न भविष्यतीति विचाररूपविषयं यत्प्रथममङ्गं तदाहुः—'**वेदान्तानामि**'ति । विषयमाहुः—

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

दनुपस्थितत्वात्कथमिदमधिकरणात्मकं सूत्रमित्याकाङ्क्षायां, सौत्राण्येव सर्वाण्यङ्गानीति बोधयितुं बुद्धिस्थसकलपदार्थबोधकमिदंपदघटितं वाक्यमाहुः—**इदमग्र विचार्यत इति** । इदंपदप्रयोगेणापि कथं तावदधिकरणाङ्गानां लाभ इति चेदित्थम् । तथाहि—निर्गुणं ब्रह्म सधर्मकं निर्धर्मकं वेति संशये निर्गुणं ब्रह्म निर्धर्मकमेवेतिपूर्वपक्षे प्राप्ते, तादृशं ब्रह्म सधर्मकमेवेति निर्णयो यतो व्यासमीमांसातिरिक्तशास्त्रेण भवत्यतो ब्रह्मविचारो ब्रह्मजिज्ञासापदबोध्योऽथशब्देनाधिकारार्थेनाविक्रियते आरभ्यते इति. सूत्रार्थे

किं तावत्प्राप्तम् ? नारम्भणीय इति । कुतः ?

साङ्गोऽध्येयस्तथा ज्ञेयो वेदः शब्दाश्च बोधकाः ।
निःसन्दिग्धं तदर्थाश्च लोकवत् व्याकृतेः स्फुटाः ॥

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

त्तिमाहुः–'**साङ्गोऽध्येय**' इति । विचारस्य पुरुषार्थपर्यवसायित्वे तदारम्भो युक्तो न चात्र किञ्चिदपि तद्दृश्यते । तथाहि । अस्ति तावत्स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिः । तव्यप्रत्ययस्य विधौ विधानात् । सोऽपि नित्य एव । काम्यत्वे त्वर्थावबोधे, कामनायां तदुपेततदध्ययने प्रवृत्तस्यार्थावबोध इत्यन्योन्याश्रयः प्रसज्येत ।

तथाच विधिविषयीभूतस्याध्ययनस्य धर्मत्वम् । वेदे हि प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्मशब्देनोच्यत इत्यत्रापि धात्वर्थभावनायां किं केन कथमित्यंशत्रयोपेतायां, 'दृष्टे सम्भवत्यदृष्टकल्पनाया

श्रीलालुभट्टकृता गूढार्थदीपिका ।

**आपाततः प्रतिपन्नः सन्दिग्धोऽर्थो विषय** इति लक्षणात् । '**आरम्भणीयो नवे**'ति । विशयः संशयः । '**नारम्भणीय**' इति पूर्वपक्षः । '**आरम्भणीय**' इति उत्तरः पक्षः । सिद्धान्त इति बोध्यम् ।

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

'**वेदान्तानामि**'ति । प्रतिवादिमतं पूर्वपक्षस्तमाहुः–'**नारम्भणीय**' इति । अनारम्भे हेतुं प्रदर्शयन्ति–'**साङ्ग**' इत्यादिना । '**शिक्षा कल्पो व्याकरणं छन्दो ज्योतिर्निरुक्तमि**'ति षडङ्गानि । गुरुमुखोच्चारणानूच्चारण त्वध्ययनम् । अक्षरग्रहणे गुरूच्चारितानामेव शब्दानामनूच्चारणम् । अर्थग्रहणे तु वाक्यान्तरेणाऽपि वाक्यार्थानूच्चारण ज्ञेयम् । साङ्गाध्ययने हि '**स्वाध्यायो ध्येतव्यः**' '**साङ्गो वेदोऽध्येय**' इत्यादिविधिर्ज्ञेय. सर्वाक्षरग्रहणमात्रपर्यवसायी । न च तावतैवाऽर्थज्ञानं विनाऽकृतार्थता मन्तव्याऽनर्थज्ञस्य स्थाणुरयमिति निन्दाश्रवणात् । '**ज्ञेयश्चे**'त्यर्थज्ञानविधानाच्चार्थज्ञानमपि सम्पाद्यमित्याह–'**ज्ञेय**' इति । एतेनाऽर्थज्ञानसमभिव्याहारादध्ययनस्य विनियोगो वाक्यार्थ इति प्रदर्शितम् । यथा श्रवणादिविधिसन्निहितो दर्शनादिविधिदर्शनफलकत्व श्रवणादिविधीनां ज्ञापयति तथा साङ्गाऽध्ययनविधिसन्निहितोऽर्थज्ञानविधिः साङ्गाध्ययनस्यार्थज्ञानपर्यवसायित्व प्रत्याययतीत्यर्थज्ञानमपि सम्पाद्यमित्याहुः–'**ज्ञेय**' इति । तथा च साङ्गाध्ययनसामर्थ्यादेवार्थज्ञानसम्पत्तेर्विचारस्याऽनुपयुक्तत्वान्नारम्भणीय एव ।

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

'**नचे**'ति । पूर्वपक्षमाहुः—'**नाऽऽरम्भणीय**' इति । वेदान्तविचारस्य श्रुत्यर्थबोधे कारणत्वे, **वेदान्तविज्ञानसुनिश्चितार्था** इति श्रुत्या प्रतिपाद्यत इत्याशयेन पृच्छति–'**कुत**' इति । कारिकया

भगवदीयश्रीमदिच्छारामप्रणीत· प्रदीप ।

क्रियमाणे विचारकर्तव्यताप्रतिज्ञानात् 'सन्दिग्धे न्यायः प्रवर्तेत' इतिन्यायात्, विचाररूपविषये विचारः कर्तव्यो न वेति संशये प्राप्ते, विरुद्धयुक्तिभिर्न कर्तव्य इति पूर्वपक्षे प्राप्ते, तन्निरासेन वेदानुकूलयुक्तिभिर्विचारकर्तव्यतानिर्धारणमेव सौत्रविचारकर्तव्यताप्रतिज्ञया लभ्यत इति सूत्रविचारकर्तव्यताप्रतिज्ञाबलादेव पञ्चाङ्गानां लाभ इति बोध्यमिति न कापि पूर्वोक्तानुपपत्तिरिति । अग्रिमसूत्रेषु वेदान्तविचारस्य कर्तव्यत्वाद्विचारे उपोद्घातसङ्गतिरपि लभ्यते । तथाहि–'चिन्तां प्रकृतसिद्ध्यर्थामु-

**अर्थज्ञानार्थं विचार आरम्भणीयः, तस्य च ब्रह्मरूपत्वात्तज्ज्ञाने पुरुषार्थो भवतीति**

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

अन्याय्यत्वादुपस्थितत्वाच्चाध्ययनविषयीभूतस्वाध्यायार्थज्ञानमेव किमित्यंशो योजनीयम् । ततस्तदंशस्य फलत्वेन तत्कारणजिज्ञासायां धात्वर्थरूपमध्ययनमेव तत्त्वेन वक्तुमुचितम् । एकपदोपात्तत्वात् । तस्य तु विषयं विनात्मलाभाऽसम्भवात्केवलतद्विषयकस्य तत्र कारणत्वाऽसम्भवाधाद्दशेन तदुपपत्तिर्भवति तादृश एव तत्र विषयत्वेन निवेशनीय इत्यङ्गसहित एव तत्त्वेन निवेशनीयः । गुरूपसत्त्यादिकं चेतिकर्त्तव्यतात्वेनेति । तदेतत्सर्वमनुसन्धाय भाष्यकारैः **साङ्गोऽध्येय** इत्युक्तम् । अन्यथा विधिवाक्ये केवलस्यैव स्वाध्यायस्य तद्विषयत्वोक्तेरत्र तत्साहित्यकथनमप्रमाणमेव स्यात् । नन्वेवं सति प्रकृते किमायातमित्यत आहुः—'**अर्थज्ञानार्थं विचार आरम्भणीय**' इति । तथा च तेनैव तत्सिद्धौ विचारस्याऽन्यथासिद्धत्वादनारम्भ-

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

पूर्वपक्षं समर्थयति—'**साङ्गे**'ति । वेद इति पूर्वान्वयी । व्याकृतेः व्याकरणात् । कारिकार्थमाहुः—'**अर्थे**'ति । **तस्य च** वेदार्थस्य च । '**तज्ज्ञान**' इति । ब्रह्मज्ञाने सतीत्यर्थः । '**पुरुपार्थ**' इति । '**ब्रह्मविदाप्नोति परमि**'ति श्रुतिप्रतिपाद्यो मोक्षो भवतीति हेतोर्भेद न मन्तव्यं न विचार्यमित्यर्थः ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

अथवा साङ्गमधीत्याऽपि गुरोरेवार्थज्ञानमपि सम्पादनीयं न तु विचारसहकृतादध्ययनयत्नादित्याहुः—'**ज्ञेय**' इति । गुरुमुखादेव ज्ञातार्थो वेदः पुरुषार्थाय भवति नाऽन्यथेति नियमविधिरयम् । ननु तथाऽप्यध्ययनकालाऽन्यदापि सन्दिग्धार्थत्वाच्छब्दानां विचारं विना कथमर्थनिश्चय इत्यत आहुः—'**शब्दाश्चे**'ति । **निःसन्दिग्धमिति** क्रियाविशेषणम् । नन्वेवमपि '**सर्वे सर्वार्थवाचका**' इति वाक्यादनिश्चितसङ्केतानां तेषां विचारमन्तराऽयमेवार्थो नान्य इति कथमर्थनिश्चय इत्यत आहुः—'**तदर्थश्चे**'ति । स्वोक्तकारिकार्थविशेषबोधनाय स्वयमेव प्रदर्शयन्ति—'**अर्थज्ञानार्थमि**'ति । ननु '**वेदोऽखिलो धर्ममूलं**' '**आम्नायस्य क्रियार्थत्वा**'दितिवाक्याद्धर्मत्वेन वेदार्थो ज्ञात एवेति न तदर्थविचारापेक्षेत्यत आहुः—'**तस्य चे**'ति । '**यज्ञो वै विष्णुः**' '**धर्मो यस्यां मदात्मकः**' '**सर्वे वेदा यत्पदमामनन्ति**' '**वेदैश्च सर्वैरहमेव वेद्यः**' इत्यादिश्रुतिस्मृतिवाक्येभ्यः सर्ववेदप्रतिपाद्यत्वाद् ब्रह्मरूप एव सर्ववेदार्थ इति । '**तज्ज्ञाने**' ब्रह्मरूपवेदार्थज्ञाने । **पुरुपार्थो** '**ब्रह्मविदाप्नोति परमि**'ति श्रुत्या परप्राप्तिरूपो भवतीति तादृशार्थज्ञानाय विचार आवश्यक इत्यभिप्रायः । तमिमं निषे-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

'**अर्थज्ञानार्थमि**'ति । वेदान्तार्थज्ञानार्थमित्यर्थः । **तस्य चेति** । वेदान्तार्थस्य ब्रह्मरूपत्वादित्यर्थः ।

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीपः ।

पोद्घातं विदुर्बुधा' इत्यभियुक्तानां वाक्याद्वेदान्तार्थः कथं सिध्येदितिप्रकृतवेदान्तार्थसिद्धेरनुकूलत्वं विचारेऽस्तीति उपोद्घातसंगतिलाभात् । इदंशब्देनैतावानर्थो बुद्धिस्थः प्रतिपाद्यत इति तमेव सर्वमर्थं प्रकटीकुर्वन्ति—**वेदान्तानां विचार आरम्भणीयो न वेत्यादिना** । किं तावत्प्राप्तम् ? । कोटिद्वयमध्ये किं सिद्धम् ? ।

वाद्यभिप्रेतां पूर्वपक्षकोटिमाहुः—**नारम्भणीय इत्यादिना** । तत्राऽनारम्भणे हेतुप्रश्नः—**कुत**

१ जिज्ञासायां इति मधुलयम् ।

**न मन्तव्यम् । विचारं विनापि वेदादेव साङ्गादर्थप्रतीतेः । न चार्थज्ञानमविहितमविचारिताश्च शब्दा नार्थं प्रत्याययन्तीति वाच्यम् । ज्ञेयश्चेति विधानात् ।**

---

गोस्वामिश्रीपुरुषोत्तमविरचिता अणुभाष्यव्याख्या ।

णीयत्वमित्यर्थः । ननु वेदान्तेषु ब्रह्मण एव प्रतिपाद्यत्वेनाऽर्थो ब्रह्मरूप एवेति तज्ज्ञानं कर्मज्ञानापेक्षयाप्यतिदुरूहमभ्यर्हितं चामृतत्वसाधकत्वेनेति न षडङ्गेतदध्ययनमात्रात्तत्सिद्धिः, किन्तु विचारसहकृतेनेति विचारेण तज्ज्ञाने तत्साधनत्वाद्विचारोऽपि पुरुषार्थरूपो भवतीति तस्य कर्तव्यत्वमावश्यकमेवेत्याक्षेपाभिप्रायस्तमिमं निषेधति–'**न मन्तव्यमि**'ति । तत्र हेतुमाहुः–'**विचारं विनाऽपी**'ति । न हि शाब्दं ज्ञानममृतत्वसाधकं किन्त्वपरोक्षमेव । अन्यथा मनननिदिध्यासनादिविधीनामानर्थक्यप्रसङ्गात् । तथा च शाब्दमर्थज्ञानमात्रं तु पूर्वकाण्डार्थज्ञानसाधारणमिति तत्समानयोगक्षेमत्वादुक्तेनैवाऽध्ययनेन तदुपपत्तिर्भविष्यतीति विचारस्याऽप्रयोजकत्वमित्यर्थः । पुनः किञ्चिदाशङ्क्य समाधत्ते—'**न चार्थज्ञानमि**'ति । अर्थज्ञानस्य फलत्वेनान्वयादविहितत्वं कारणान्तरानपेक्षत्वं चेति वेदान्तवाक्यस्थानामेव शब्दानां तत्र कारणत्वम् । उपस्थितत्वा'त्त्वौपनिषदं पुरुषं पृच्छामी'ति श्रुतेस्तस्य श्रुत्येकसमधिगम्यत्वाच्च । तथा चोक्ताध्ययनेनाऽऽपाततस्तदर्थबोधेऽपि विचाराऽभावेऽविचारितैस्तैर्न निश्चयात्मकं ज्ञानमुत्पत्स्यत इति तदर्थं विचार आवश्यक इत्याशङ्कां निराकर्तुमाहुः—'**न च वाच्यमि**'ति । तत्र हेतुमाहुः—'**ज्ञेयश्चेति विधानादि**'ति । अध्ययनानन्तरं हि ज्ञेयत्वमुपदिश्यते । तच्च मननमे-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

ब्रह्मज्ञानं मोक्षसाधनं न तु ब्रह्मविचारः । तत्तु साङ्गवेदाध्ययने सति व्याकरणादेव भविष्यतीति भावः । **स्वाध्यायोऽध्येतव्य** इति विधिनाऽध्ययनमेव विहितं नार्थज्ञानम् । केवलं व्याकरणेन विना शब्दा

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

धन्ति–'**न मन्तव्यमि**'ति । न सिद्धान्तयितव्यमित्यर्थः । तत्र हेतुः–'**विचारमि**'ति । अत्राऽधीतादिति शेषः ।

ननु साङ्गाऽध्ययनभावनायां फलत्वेनाऽन्वयादध्ययनवदविधानाच्चार्थज्ञानस्याऽविहितत्वेनतैर्विचारं नार्थनिश्चय इति स आवश्यक इत्यत आहुः–'**न चार्थज्ञानमि**'ति । तत्र हेतुः–'**ज्ञेय**'श्चे-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

इति । तत्र विनैव विचारं वेदार्थनिर्णयसम्भवरूपं हेतुमाहुः—**साङ्गोऽध्येय इत्यादिना** । **शब्दाश्च बोधकाः** । वैदिकशब्दाः स्वार्थबोधकसामग्रीसहिताः विचाररूपव्यासमीमांसां विनैव स्वार्थबोधका इत्यर्थः । वैदिकशब्दानां शक्तिग्राहकं प्रमाणमुपन्यस्यन्ति—'**निःसन्दिग्ध**'मित्यादिना । **लोकवत्** धातुप्रकृतिप्रत्ययादिशब्दानामिवेत्यर्थः । **व्याकृतेः** व्याकरणात् । **स्फुटाः** तत्तद्धर्मावच्छिन्नशक्तिग्रहविषयाः । एवं निघण्टुनिरुक्तादितोऽपि बोध्याः । उक्तकारिकार्थं स्फुटीकुर्वन्ति–'**अर्थज्ञानार्थ**'मित्यादिना । **तस्य च** । वेदार्थस्य चेत्यर्थः । **तज्ज्ञाने** ब्रह्मज्ञाने । **वेदादेव साक्षात्** । अधीतादिति शेषः । **अविहितं**, केन सम्पादनीयं कथं संपादनीयं, किमर्थं संपादनीयमित्यंशत्रयविशिष्टभावनाविषयीभूतं न भवतीत्यर्थः । **अविचारिताः** मीमांसातर्केण निर्णीताः । '**अक्ताः शर्करा उपदधाति**' '**सक्तून् जुहोती**'तिवदित्यर्थः । तत्रार्थज्ञानविधिमाहुः—ज्ञेयश्चेत्यनेन ।

---

१ तज्ज्ञानेनेति कपुस्तकम् । २ विचारमित्यपेक्ष्यते ।

गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥

इति बाधोपलब्धिश्च । शब्दश्चक्षुरादिवन्न सन्दिग्धार्थप्रतिपादकः । तदर्थश्च व्याक-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

येति तेनैव तन्निश्चये विचारस्याऽप्रयोजकत्वमित्यर्थः । न च ज्ञेयश्चेत्यत्र मननोक्तौ किं विनिगमकमिति वाच्यम् । षडङ्गो वेदोऽध्येय इत्युक्त्वाऽनुपदमेव ज्ञेयत्वमुपदिश्यते । तच्च ज्ञेयत्वं न ज्ञानमेव तज्जन्यम् । षडङ्गोपेताध्ययनविधिबलादेव तत्सिद्धेः, तथा चैतदुक्त्यन्यथानुपपत्तिरेवैतस्य मननपरत्वं गमयतीति विनिगमनायाः सत्वात् । ननु मननस्य न्यायशीलनरूपत्वेन विचारेणाऽभेदात्कथं तन्निराकरणमिति चेन्न वयं सर्वथैव विचारं व्यासेधामः, किन्तु शब्दशेषत्वमेव । वेदान्तानामित्युक्तेः । पुनस्तत्रैव साधकान्तरमाहुः—'गीती'ति । अथमस्येऽर्थज्ञानाभावमात्रमेव प्रयोजकं न तु निश्चयाभाव इत्यर्थज्ञानदशायां षडङ्गोपेतस्यैवाऽपेक्षितत्वान्न कारणान्तराऽपेक्षास्तीति नात्र विचारस्यावकाश इति सिद्धम् । द्वितीयो हेतुर्विपक्षबाधकत्वेन भाष्यकारैरुपन्यस्त इति ज्ञेयम् । अस्ति तावद्भाव्यकरणेतिकर्तव्यतालक्षणांशत्रयोपेता भावना । किं केन कथमित्यंशत्रयपूर्णा हि भावनेति भट्टाचार्यैरुक्तत्वात् । सा च द्विविधा । अर्थभावना, शब्दभावनेति । तत्र पुरुषप्रवृत्तिरर्थभावना । पुरुषप्रवर्तनसामर्थ्यलक्षणा शब्दभावनेति । उभयोरपि प्रत्येकमंशत्रयविशिष्टत्वम् । तद्यथा—यजेतेत्यत्र लिङ्प्रत्ययगम्याया अर्थभावनाया धात्वर्थ एव भाव्यत्वेन वाच्यः । एकपदोपात्तत्वेन सन्निहितत्वात् । स च क्लेशात्मकोऽतोऽर्थभावनायाः पुरुषार्थविषयत्वाऽन्यथानुपपत्त्या धात्वर्थं विहायाऽन्यपदोपात्तमप्यधिकारिविशेषणं स्वर्गं भाव्यत्वेन कल्पनीयम् । तथा च स्वर्गादिकं भाव्यं, धात्वर्थः करणं, प्रयाजादय इतिकर्तव्येत्येवमंशत्रयमर्थभावनायाः सम्पद्यते । तस्यां भाव्यस्वरूपायां पुरुषप्रवृत्तिलक्षणायामर्थभावनायां पुरुषं प्रेरयन्ती शब्दभावना चोदनेत्युच्यते । चुद प्रेरण

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

अपि नार्थबोधका भविष्यन्तीत्याशयेनाऽऽहुः—'न चे'ति । 'बाधोपलब्धिरि'ति । अधमे विधिर्न प्रवर्तत इत्यध्ययनविधिबाधोपलब्धिरित्यर्थः[1] । 'न सन्दिग्धार्थप्रतिपादक' इति । दृष्टादृष्टे

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

तीति । किञ्चाऽनर्थत्वे बोधकमप्यस्तीत्याहुः—'गीती'ति । तथा च गुरुमुखादेवार्थज्ञानं संपाद्यमिति बाधयान्याशयाद्विचारो व्यर्थं एवेति सिद्धम् । अन्यथा साङ्गाऽध्येतुर्विचारेण सर्वस्याऽप्यर्थज्ञानसिद्धेरधर्मत्वेन जुगुप्सा निरवकाशैव स्यात् । ननु निर्दोषाणामेव प्रमाणानां प्रमापकत्वात्संदिग्धार्थप्रतिपादकत्वेन सदोषत्वाच्च शब्दानां कथं तेभ्योऽर्थनिश्चयस्तदत इत्यत आहुः—'शब्द' इति । न हि

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

तथा च पदार्थज्ञानकरणिका गुरूपसत्त्यादीतिकर्तव्यताका दृष्टफलिका भावना । तयाऽर्थज्ञानस्य लब्धेर्विज्ञानविधिसिद्धिः । अन्यथाऽनुपपत्तिप्रसूतार्थापत्त्या ससामग्रीकमर्थज्ञानसम्पादनमाहुः—'गीती'त्यादिना । बाधोपलब्धिः अर्थज्ञानं विना—वेदाध्ययनेऽधमत्वापत्तेरर्थज्ञानं विनाऽध्ययनस्यैवाऽसम्भवाद्ध्ययनविधेर्बाधापत्तिरतोऽर्थज्ञानमर्थाक्षिप्तमिति बोध्यम् । न च ज्ञानस्य संशयात्मकस्यापि सम्भवाद्विरुद्धकोट्यपसारणाय विचार आवश्यक इति वाच्यमिति वदन्ति—शब्देत्यादिना । न सन्दिग्धार्थ-

१ तत्सिद्ध इति कपुस्तकम् ।

रणादिना निश्चीयते । यथा लौकिकवाक्ये । तथा वेदेऽपि । न च तद्विरुद्धं निर्णेतव्यम् ? । अप्रामाणिकत्वप्रसङ्गात् । तस्माद्वेदार्थज्ञानार्थं विचारो नारम्भणीयः ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

इत्यस्माद्धातोश्चोदनाशब्दव्युत्पत्तेः । तदेवमर्थभावनैव भाव्यम् । शब्दभावनाप्रत्यायकं ज्ञानमेव करणम् । स्तुतिनिन्दार्थवादादिज्ञानमितिकर्तव्यतेत्यंशत्रयं शब्दभावनाया अपि सम्पद्यते ।

ननु(?) शब्दभावनाया वाचकाभावात्कथं प्रतीतिः । लिङादिप्रत्ययान्तस्य त्वाख्यातत्वसामान्याऽऽकारेणाऽर्थाभिधायित्वादिति वाच्यम् । पार्थक्येन वाचकाऽभावेऽपि तस्यैव लिङादिरूपविशेषाऽऽकारेण शब्दभावनाभिधायित्वस्याऽप्यङ्गीकारात् । तदुक्तम् ।

अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावनात्वन्या सर्वाख्यातेपु गम्यते ॥

इत्यलं प्रसक्तानुप्रसक्त्या । प्रकृतमनुसरामः । नन्वेवं साङ्गाध्ययनबलादेव शब्दैरापाततोऽर्थज्ञानसिद्धावपि न निःसंदिग्धं तत्सिद्धिः । इन्द्रियाणां हि चक्षुरादीनां दोषरहितानामेव निःसन्दिग्धार्थप्रकाशकत्वेन तत्समानयोगक्षेमत्वाच्छब्दानामपि केवलानां कथं निःसन्दिग्धार्थप्रतिपादकत्वमित्यत आह—'शब्द' इति । न हि चक्षुरादिवच्छब्दानां सन्दिग्धार्थप्रतिपादकत्वं केनाऽपि वक्तुं शक्यम् । चक्षुरादीनामिन्द्रियत्वाद्भ्रमप्रमादादिदोषाणां तत्र सम्भवात्तदभावोऽपि तत्र प्रतिबन्धकाभावत्वेन कारणमस्तु । न चेह तथा । शब्दानामिन्द्रियाविषयत्वेनाऽतीन्द्रियत्वात्तद्दोषाणामत्राऽसम्भवात् । अन्यथा निर्दुष्टैरपीन्द्रियैः भ्रमानुत्पत्तिः स्यात् । ननु शब्दानामर्थप्रत्यायकत्वेऽगृहीतसङ्केतानामपि शब्दानां श्रवणादर्थप्रतीतिः स्यादत आह—'तदर्थे' इति । न हि शब्दः

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

उच्चैस्त्वविशिष्टे 'अयं स्थाणुर्वा पुरुषो वे'ति सन्देहे केनचिदाप्तेनाऽयं पुरुष इति शब्दप्रयोगे क्रियमाणे 'अयं पुरुष' इति निश्चय एव जायत इति भावः । **तद्विरुद्धं** व्याकरणविरुद्धम् ।

वैश्विद्विरचिता वेदान्तचन्द्रिका ।

गौरित्युक्ते सत्वान्तरबोधः सम्भवति । यश्च ततो नाऽर्थप्रलयः स तु प्रमात्रादिदोषादेव । ननु शब्दानामेव तथार्थप्रत्यायकत्वे विनैव विचारमज्ञातशक्तिकेभ्योऽपि वैदिकेभ्यस्तेभ्योऽर्थप्रत्ययः स्यादित्यत आहुः—'तदर्थश्चे'ति । वैदिकशब्दानां मुख्यवृत्तिप्रतिपाद्योऽर्थः । दृष्टान्तेन तदेव द्रढयन्ति—'यथे'ति । आदिशब्देन वैदिकव्यवहारपारम्पर्यपरिग्रहः । एतेनैव वैदिकलौकिकशब्दयोर्भेदोऽपि ध्वनितः । व्याकरणाद्यननुरुध्याऽनुरुध्य च लौकिकव्यवहारं, लोके कचिद्विचारेणैवाऽर्थनिश्चयस्तथा वेदेऽप्यस्त्वित्यत आहुः—न चेति । उपसंहरन्ति—'तस्मादि'ति । अत्रैकदेशिमतेन समादधते—

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

**प्रतिपादकः** परोक्षं ज्ञानं निश्चयात्मकमेवेतिसिद्धान्तान्न सन्दिग्धार्थप्रतिपादक इत्यर्थः । **तदर्थश्च** वैदिकशब्दार्थश्च । आदिशब्देन निघण्टुनिरुक्तादि ग्राह्यम् । **तद्विरुद्धं** व्याकरणादिविरुद्धम् । **निर्णेतव्यं** विचारेण निर्णेतव्यम् । **अप्रामाणिकत्वप्रसङ्गात्** तादृशनिर्णयस्याप्रामाणिकत्वप्रसङ्गादित्यर्थः ।

---

१ तदेवान्यार्थभावनेति रापुस्तकम् । २ भ्रमत्वादिति खपुस्तकम् ।

स्यादेतत् । न वेदार्थज्ञानमात्राय विचारः । किन्तु ब्रह्मज्ञानाय । तस्य चाऽऽत्मरूपत्वा-

गोस्वामिश्रीमन्मुरलीधरविरचिता श्रीमदणुभाष्यव्याख्या ।

स्वरूपेणैवोच्चार्यमाणोऽर्थप्रत्यायको भवति । शक्तिग्रहस्यापि तत्र सहकारित्वात् । तद्ग्रहस्तु व्याकरणादिसाध्यः । तद्यथा भ्वादिशब्दानां सत्तादिवाचकत्वं व्याकरणादिनैवाऽवगम्यते । न हि लोके वेदे वा शब्दानां तत्तदर्थवाचकत्वं व्याकरणादेरन्यतः सिद्धं भवति । तदुक्तं '**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः**' इति । एतेषामुदाहरणानि ग्रन्थान्तरेषु द्रष्टव्यानि । विस्तरभयान्नाऽत्र लिख्यन्ते । ननु व्याकरणादेर्भ्वादिशब्दार्थप्रत्यायकत्वेऽपि न तन्निश्चायकत्वमस्तीति चेत् । न । न हि व्याकरणेन पदानां सन्दिग्धार्थः प्रतिपाद्यते । तथा सति महता प्रयासेन तत्करणं व्यर्थमेव स्यात् । किञ्च । व्याकरणस्य किं प्रयोजनमित्याकाङ्क्षायां '**रक्षोहागमलघ्वसन्देहाः प्रयोजनमि**'ति भाष्यकारैर्निःसन्दिग्धार्थप्रतिपादकत्वस्य स्वयमेवोक्तत्वाच्च । एवमेवोपमानादीनामपि निःसन्दिग्धार्थप्रतिपादकत्वे विपक्षबाधकत्वेन तर्काः स्वयमूह्याः । नन्वस्तु नाम व्याकरणादीनां निःसन्दिग्धार्थप्रतिपादकत्वं तथापि लौकिकानामेव तेषां तदस्तु नाऽलौकिकानामित्यत आह—'**यथे**'ति । न ह्यथशब्दानुशासनमित्यत्र लौकिका एव शब्दा अधिक्रियन्ते नाऽलौकिका इत्यत्र किञ्चिन्नियामकमस्ति शब्दसामान्यग्रहस्य लौकिकवैदिकोभयसाधारणत्वात् ।

किञ्च । '**अथ शब्दानुशासनमि**'ति शब्दानुशासनमधिकृत्य लौकिकानां वैदिकानां चेति स्वयमेवाग्रे भाष्यकारैर्गूढाभिसन्धेरुद्घाटितत्वाच्च । किञ्च '**मयड्वैतयोर्भाषायां**' '**छन्दसि**' '**सर्वत्र विभाषा गोरि**'त्यादिसूत्रेषु लौकिकवैदिकशब्दविवेचनस्य स्वयमेव कृतत्वाच्च । तस्माद्यथा लौकिकवाक्ये व्याकरणादिभिरर्थनिर्णयस्तथा वैदिकेऽपीति सिद्धम् । ननु व्याकरणादेर्निःसन्दिग्धार्थप्रत्यायकत्वेऽपि विचारस्य तद्विलक्षणार्थप्रतिपादकत्वात्तदर्थं विचारः कर्तव्य इत्याशङ्कानिरासायाऽऽह—'**न च तद्विरुद्धमि**'ति । सङ्केतवैलक्षण्येन बोधजननेऽप्रामाणिकत्वमन्यथा त्वन्यथासिद्धत्वमिति हृदयम् । उक्तमर्थमुपसंहरन्ति—'**तस्मादि**'ति । तस्माद्विचारस्य केनाप्यंशेनाऽनन्यथासिद्धत्वायोगान्नारम्भणीय एव विचार इति सिद्धम् ।

अत्रैकदेशी किञ्चित्समाधत्ते—'**स्यादेतदि**'ति । यदुक्तमर्थज्ञानार्थं विचारो नारम्भणीय इति

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

अत्रैकदेशी स्वमतेन सिद्धान्तं वक्ति—'**स्यादेतदि**'ति । एतत् अग्रिमरीत्या विचारकर्तव्यत्वं स्यात्तर्हि उपपद्यताम् । तस्य ब्रह्मणः । विशेषणस्यैव तच्छब्देन परामर्शः । पटोलपत्रं पित्तघ्नं

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

'**स्यादेतदि**'ति । वक्ष्यमाणप्रकारेणाऽऽरम्भणीयत्वं स्यादित्यर्थः । तदाहुः—'**न वेदार्थे**'ति । किं तावत्तेत्याकाङ्क्षायामाहुः—'**तस्य चे**'ति । ब्रह्मणः । '**पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहे**'त्यादौ

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीपः ।

एकदेशी स्वमतेन व्याससूत्रात्मकविचारस्य कर्तव्यतामुपपादयति—**स्यादेतदिति** । एतत् वक्ष्यमाणम् । स्यात् विचारप्रयोजकं स्यात् । वेदार्थज्ञानमात्राय वेदघटकपदानामर्थज्ञानमात्रायेत्यर्थः ।

स्तस्य चाऽविद्यावच्छिन्नत्वाद्देहात्मभावदृढप्रतीतेस्तदतिरिक्तस्य ब्रह्मणोऽभावान्न वेदमात्रा-

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

तत्तु स्यादेव। ननु ■ तदा विचारस्योपयोगस्तत्राऽऽह—'**न वेदार्थज्ञानमात्राये**'ति। न हि वेदार्थज्ञानमात्राय विचार आरभ्यते येन सूत्रकारः पर्यनुयोगार्हः स्यात्किन्तु ब्रह्मज्ञानाय। तथा हि—बृहत्त्वाद्बृंहणत्वाद्वा ब्रह्मैव खल्वाऽऽत्मशब्देन सर्वत्र वेदान्तेषु गीयते। तज्ज्ञानस्य '**चाऽऽत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते विज्ञातमिदं सर्वं विदित**मि'त्युपक्र'**मैतावदरे खल्वमृतत्वमि**'त्युपसंहारेण परमपुरुषार्थभूताऽमृतत्वसाधनत्वं प्रतिपाद्यते। तस्य पुरुषतन्त्रस्याविधेयत्वात्तदुपायत्वेन '**आत्मा वारे श्रोतव्यो मन्तव्यो निदिध्यासितव्य**' इति मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह विधीयते श्रवणम्। तच्च वेदान्तवाक्यानामाचार्यमुखादुपक्रमादिलिङ्गैः शक्तितात्पर्यावधारणम्। तच्च विचारं विना न सम्भवतीति विचारस्य श्रवणादिद्वारा ब्रह्मज्ञानसाधकत्वात्तत्प्रतिज्ञोचितेति चेत्। न। य एवाऽऽत्मा सर्वत्र वेदान्तेष्वात्मशब्देन गीयते स एवायमाकीटपतङ्गेभ्य आ च देवर्षिभ्यः प्राणिभृन्मात्रस्येदंकारविषयेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो विविक्ततयाऽहमित्यसन्दिग्धाऽविपर्यस्ताऽपरोक्षानुभवसिद्ध इति न तत्साधनत्वेन वेदान्तवाक्यानि विचारणीयानि। न हि जातु कश्चिदत्र सन्दिग्धेऽहमनहं वेति। नापि विपर्यस्यति नाहमेवेति। नहि सर्वतोधिकप्रत्यक्षप्रमाणसिद्धेऽर्थे प्रमाणान्तराऽपेक्षा लोके क्वचिद्दृष्टचरी।

नन्वहंप्रत्ययस्य देहादिमिश्रविषयत्वात्कथं विविक्ततद्विषयत्वमिति चेत्। न। तद्विषयत्वे तु 'य एवाऽहं कौमारे पितरावन्वभूवं स एव वार्द्धके पौत्रादीननुभवामी'ति प्रतिसन्धानं न भवेत्। बालस्थविरशरीरयोः परिणामभेदेन भिन्नत्वात्। न चाऽवयवोपचयाऽपचयजन्यपरिणामभेदेन बालस्थविरशरीरयोर्भिन्नत्वेऽपि न वस्तुतो भेदोऽस्तीति न विविक्ततद्विषयत्वमिति वाच्यम्। स्वप्नदशायां हि य एव दिव्यं शरीरमास्थाय तदुचितान् भोगान् भुञ्जान एवा'ऽहं भोक्ताऽहं कर्ते'ति मन्यते स एव

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

**नाडी तस्य कफापहे**त्यत्र दर्शनात्। **तस्य** आत्मनः। अयं भावः—एकदेशिनोच्यते यदि विचारो न क्रियते चेद्देदाजीवात्मस्वरूपत्वं ब्रह्मण इति ज्ञानं भविष्यति। जीवात्मनस्त्वविद्यावच्छिन्न-

केनचिद्विरचिता वेदान्तचन्द्रिका।

विशेषणमात्रस्याऽपि तत्पदेन ग्रहणात्। '**सर्वव्यापी सर्वभूतान्तरात्मे**'त्यादिश्रुतेरात्मत्वम्। '**तस्य चे**'ति आत्मनः। '**अविद्ये**'ति। देहाद्यध्यासलक्षणाऽविद्यायुक्तत्वात्। अध्यासो नाम पूर्वदृष्टस्य परत्राऽवभासः। '**देहे**'ति। देहादावात्मत्वस्य दृढज्ञाना यदहमिति प्रतीतिरध्यस्तसकलदेहादिधर्मोपप्लुतात्मविषयत्वेनाऽविद्यासम्बन्धरहितशुद्धात्मस्वरूपज्ञानाय विचार आवश्यकः (?)।

श्रीलालूभट्टकृता गूढार्थदीपिका।

'**तस्य चाऽऽत्मरूपत्वादि**'ति। तस्य ब्रह्मणः। आत्मरूपत्वादित्यर्थः। तच्छब्देन ब्रह्मज्ञानशब्दान्तर्गतब्रह्मशब्दवाच्यं ब्रह्म परामृश्यते। '**पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहे**'त्यत्र तच्छब्देन पटोलपत्रशब्दान्तर्गतपटोलशब्दवाच्यपटोलवत्। '**देहात्मभावदृढप्रतीतेरि**'ति। देहात्मप्रत्ययस्य प्रत्यक्षत्वान्न, वेदमात्रादसम्भावनाविपरीतभावनानिवर्तकं ब्रह्मज्ञानमुत्पद्यते। अतो ब्रह्मज्ञानाय

दसम्भावनाविपरीतभावनानिवर्तकं ज्ञानमुत्पद्यते । प्रत्युत देहात्मभावदृढप्रतीतेः श्रुतेरुपचरितार्थत्वं स्तुतित्वं वा कल्पयिष्यतीति, मैवम् ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

स्वप्नान्ते प्रतिबुध्य 'नाहं देवः किन्तु मनुष्य एवे'ति निश्चिनोति । तत्रोभयोरपि शरीरयोः सर्वथा भेदेऽप्यहमिति प्रत्ययस्याऽबाध्यमानत्वान्न देहालम्बनोऽयं प्रत्यय इति । बुद्धिमनसोश्च करणत्वेन नाहमितिकर्तृप्रतिभासविषयत्वम् । विषयेभ्यस्तु सर्वीयानेव विवेकः । नन्वेवं कृशोऽहं स्थूलोऽहमन्धोऽहमित्यादयः प्रयोगाः कथमिति चेन्मञ्चाः क्रोशन्तीत्यादिवदौपचारिका एवेति बुध्यस्व । तस्मादिदंकारविषयेभ्यो देहेन्द्रियादिविषयेभ्यो व्यतिरिक्तः स्फुटतरमहमित्यनुभवसिद्ध एवाऽऽत्मेति न तस्य जिज्ञास्यत्वमिति चेत् । उच्यते । नहि य एवाऽऽत्मा सर्वेषु वेदान्तेषु सर्वेषु च स्मृतीतिहासपुराणेषु समस्तोपाधिरहितनित्यशुद्धबुद्धमुक्तस्वभावत्वेन गीयते स एवाऽहमिति प्रतीतेर्विषयो भवति । तस्याऽध्यस्तसकलदेहेन्द्रियादिभावापन्नप्रादेशिकानेकविधशोकदुःखादिप्रपञ्चोपप्लुतात्मविषयत्वेन विविक्तत-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

त्वेन मनुष्योऽहमित्यहंप्रत्ययेन, देह एवाऽऽत्मप्रतीतिर्दृढा भविष्यति । ततश्चाऽहं सार्धवितस्तिकायोऽल्पः परममहत्परिमाणवदचिन्त्यगुणगणवदेतादृशं ब्रह्म न भवामीत्यसम्भावना, देह एवाऽऽत्मेतिविपरीतभावना, च निवृत्ता न भविष्यति । देहाद्विलक्षणो नित्यशुद्धबुद्धमुक्तस्वभाव आत्मा इत्याद्यर्थप्रतिपादकानां श्रुतीनामारोपितार्थकत्वरूपौपचारिकत्वं स्तुत्यर्थत्वं वा कल्पयिष्यतीति विचारे क्रियमाणे निश्चयात्मकं ज्ञानं भविष्यतीति विचार आवश्यकः । दूषयति—'मैवमि'ति । पूर्वपक्षी विचाराकर्तव्यतां

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

नतु जीवात्मनोऽविद्यावच्छिन्नत्वाद्देहात्मभावदृढप्रतीतेस्तत्र प्रतिबन्धकतया न साङ्गाध्ययनमात्रेण विविक्तशरीराऽऽत्मज्ञानमुत्पाद्यतां, ब्रह्म तु नित्यशुद्धबुद्धमुक्तस्वभावमिति 'नाहंप्रतीतेर्विषय'-'स्तं त्वौपनिषदं पुरुषमि'ति च श्रुत्यैकसमधिगम्यत्वेन साङ्गाध्ययनमात्रेणैव तदवगतेः सत्त्वाद्विचारोऽजागलस्तनप्राय एवेत्यत आहुः—'तदतिरिक्तस्ये'ति । अहमितिप्रतीतिविषयशरीरात्मनोऽति-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

विचारः कर्तव्य इति भावः । ननु देह आत्मबुद्धौ तु न जीवज्ञानं यथास्थितं भवेत् । ब्रह्मज्ञाने तु देहात्मबुद्धेरतिरिक्तस्य ब्रह्मणोऽभावादिति । यद्यप्यधिकं तु भेदनिर्देशादिति सूत्रेण जीवात्मनोऽधिकतमं ब्रह्मास्ति । तथापि मतान्तरे जीवस्याऽऽत्मामानं ब्रह्मेति स्वीकाराद्देहात्मबुद्धेर्ब्रह्मज्ञानेऽपि प्रतिबन्धकत्वान्न वेदमात्रादसम्भावनाविपरीतभावनानिवर्तकं ज्ञानमुत्पद्यत इति तादृशज्ञानोत्पत्त्यर्थं विचारः कार्य इति भावः । 'देहात्मभावदृढप्रतीतेरि'ति । देहेऽहन्ताबुद्ध्या देह आत्मेति दृढप्रत्ययादित्यर्थः । ननु देह आत्मबुद्धिः शास्त्रश्रवणनिवर्त्येति तन्निवृत्तौ वेदमात्रादसम्भावनाविपरीतभावनानिवर्तकं ज्ञानमुत्पत्स्यत इत्याशङ्क्याऽऽह—'श्रुतेरुपचरितार्थत्वमि'ति । वेदे ह्यात्मनः प्रशंसा—'सर्वस्य वशी

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

तस्य ब्रह्मणः । आत्मरूपत्वात् जीवात्मस्वरूपत्वात् । तस्य जीवात्मनः । देहात्मभावदृढप्रतीतेः देह एवात्मा इति दृढप्रतीतेरित्यर्थः । तदतिरिक्तस्य देहातिरिक्तस्य । अभावात् विचारशून्यानां ज्ञानाभावात् । वेदमात्रात् वेदघटकप्रत्येकपदार्थज्ञानमात्रात् । असम्भावना 'न तस्य कार्यं करणं

गोस्वामिश्रीपुरुषोत्तमविरचिता अणुभाष्यव्याख्या।

द्विपनत्वस्याऽसम्भवात्। तथा च प्रत्यक्षसिद्धः सर्वोऽपि प्रमाणप्रमेयव्यवहार उपपद्यते। स च पूर्वपूर्वमिथ्याज्ञानोपदर्शितबुद्धीन्द्रियशरीराद्यध्यासमन्तरेणानुपपद्यमानः स्वकारणमध्यासलक्षणमविद्यामाक्षिपति। ननु कोऽयमध्यासो नामेति चेत्। उच्यते। परत्र पूर्वदृष्टस्यासंनिहितस्य प्रतीत्यन्तराबाधितोऽवभासः। तथा चाऽऽरोपणीयमसदेवेति तस्य दर्शनमात्रमत्रोपयुज्यते न वस्तुसत्त्वमिति। अधिष्ठानं तु परमार्थसदेव। अवभासस्त्वसंनिहितविषय एव ग्राह्यः। अन्यथा काश्यां दृष्टस्य देवदत्तस्य पत्तनेऽन्यस्मादवभासः प्रत्ययान्तरबाधित एव स्यात्। नीलस्याऽवभासः पीतस्याऽवभास इत्यादौ सर्वार्वाचीनेऽपि प्रत्ययेऽवभासपदप्रयोगदर्शनाच्च।

ननु सर्वोऽपि पुरोऽवस्थितविषय एव विषयान्तरमध्यस्यति। परमात्मनस्तु पराञ्चि खानीत्यादिश्रुतिभिरविषयत्वात्कथमत्र पूर्वदृष्टस्य प्रतीतिरिति चेत्। उच्यते। न हि सर्वात्मनाऽऽत्मनोऽविषयत्वम्। अध्यस्तसकलदेहेन्द्रियादिभावाऽऽपन्नविविधदुःखोपभुक्तात्मविषयिण्यां कृशोऽहं स्थूलोऽहमन्धोऽहमित्यादिप्रतीतावात्मनोऽपि विषयत्वात्। किञ्च नाप्ययं नियमोऽस्ति पुरोवर्तिविषय एव विषयान्तरमध्यसितव्यम्। अप्रत्यक्षेऽपि हि वियदादावाकाशनीलता च पङ्कितं मलिनमिदमिति प्रतीतेरनुभवसिद्धत्वात्। तथा च प्रत्यगात्मन्यपीदंकारविषयाणां देहेन्द्रियाणामध्यासस्तद्विवेकाऽग्रहनिबन्धन उपपद्यते। कृशोऽहं स्थूलोऽहमन्धोऽहमित्यादिप्रतीतौ तद्विवेकाऽग्रहस्य प्रत्यक्षसिद्धत्वात्। तदेवमात्मन उक्तलक्षणोऽध्यासरूपाऽविद्याऽवच्छिन्नत्वात्तं पुरस्कृत्यैव सर्वे प्रमाणप्रमेयव्यवहारा लौकिकाः प्रवृत्ताः। सर्वाणि च शास्त्राणि

केशवसूरिविरचिता वेदान्तचन्द्रिका।

रिकस्य। अद्वैतश्रुतिविरोधस्तत्र हेतुत्वेन ज्ञेयः। साङ्गाधीतादपि वेदादनपेक्ष्यैव विचारं शारीर एवाऽयमात्मा न पर इति चक्षुरादीन्द्रियवान्, तत्र 'सर्वकर्मा' 'असङ्गो ह्ययं पुरुषः' 'न तस्य कार्यं करणं' चेति श्रुत्यात्मकार्यासम्भावनां, सुखदुःखादिभोगवानयमात्मा न तद्रहित इति, 'नाऽहं कर्ता नाऽहं भोक्ते'ति श्रुत्यात्मकार्यविपरीतभावनां च न निवर्तयितुं शक्नुयात्। प्रत्युत शब्दापेक्षया प्रबलप्रमाणेन प्रत्यक्षेण देहात्मभावस्य प्रतीत्या विविक्तशुद्धात्मस्वरूपबोधिकायाः श्रुतेः कल्पनोपदेशपरोपचरितार्थत्वमुखावगाहितया स्वावकत्वं सर्वप्रमाणमूर्धन्ये वेदे उपचरितार्थत्वं स्वावकत्वं वा

श्रीबालकृष्णभट्टकृता गूढार्थदीपिका।

सर्वस्येशान' इत्यादिरूपां श्रुत्वा, देह आत्मभावस्य प्रत्यक्षप्रमाणसिद्धस्य प्राबल्याद्भोगापवर्गसर्वसाधनानां देहाधीनतया तद्धर्मानादाय देहेऽपि सर्ववशित्वं सर्वेशानत्वमुपपद्यत इति सर्वस्य वशित्वादीनामुपचरितार्थत्वं कल्पयिष्यति। प्रत्यक्षप्रमाणेन सर्वेशानत्वस्य मुख्यतया कल्पयितुमशक्यत्वेन बाधात्। प्रत्यक्षापेक्षया शब्दस्य निर्बलत्वात्। 'स्थाणुर्नित्यं वे'त्यादि। आरोपितोत्कर्षाधायकगुणव-

भगवदीयश्रीनिर्दिष्टाशयप्रकाशसमेतः प्रदीपः।

च विधत्ते 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी' 'अणोरणीयान् महतो महीयान्' 'समो नागेन समो मशकेन' इत्यादिविरुद्धधर्माणां ब्रह्मणि सम्भावितत्वज्ञानरूपासम्भावना। विपरीतभावना सर्ववेदान्तानामेकवाक्यतया प्रामाण्यनिश्चयं 'अथात आदेशो नेति नेती'त्यनेनापवादार्थमध्यारोप, 'सर्वं खल्विदं ब्रह्म

१ वियदादावेव पाठुरत्वम्। २ कल्पयिष्यतीत्यन्वयः। ३ पठन्तीति देव. स्यात्।

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या ।

विधिप्रतिषेधमोक्षपराणि । तद्यथा—देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्तिः सम्भवति । न हीन्द्रियाण्यनुपादाय प्रमाणप्रमेयव्यवहारः सम्भवति । न चानध्यस्तात्मभावेन देहेन्द्रियादिना कश्चिद्व्याप्रियते । तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि—तथा शास्त्राण्यपि तथाभूतात्मविज्ञानाव्यावप्रवर्तमानान्यविद्यावद्विषयत्वं नातिवर्तन्ते । 'ब्राह्मणो यजेते'त्यादीनि हि शास्त्राणि वर्णाश्रमवयोवस्थादिविशेषाध्यासमात्मन्याश्रित्य प्रवर्तन्ते । तथा च व्यवहाराणां शास्त्राणां चोक्तरूपाध्यासपुरस्कारेण प्रवृत्तत्वान्नाध्ययनमात्रेणोक्तरूपतज्ज्ञानसिद्धिरिति तदर्थं विचारः कर्तव्य इति सिद्धम् ।

ननु जीवात्मनोऽविद्यावच्छिन्नत्वाद्देहादावात्मभावस्य दृढत्वेनाहमिति प्रतीतेरध्यस्तसकलदेहादिधर्मोपप्लुतजीवात्मविषयत्वेन न षडङ्गोपेतस्वाध्यायाध्ययनमात्रेणाऽसम्भावनाविपरीतभावनानिवर्तकं शारीरात्मज्ञानमुत्पद्यतां, देहात्मभावदृढप्रतीतेस्तत्र प्रतिबन्धकत्वात् । ब्रह्म तु नित्यशुद्धबुद्धमुक्तस्वभावमिति नाहमितिप्रतीतेर्विषयीभवितुमर्हतीति 'तं त्वौपनिषदं पुरुषं पृच्छामी'ति श्रुतेस्तस्य श्रुत्येकसमधिगम्यत्वेन षडङ्गोपेताध्ययनमात्रादेव तदवगतौ किं विचारेणेत्याशङ्क्याऽऽह—'तदतिरिक्तस्य ब्रह्मणोऽभावादि'ति । न हि सर्वत्र वेदान्तेष्वात्मब्रह्मशब्दाभ्यां यदुच्यते तदतिरिक्तः कश्चिदहंप्रत्ययविषय आत्मेति वक्तुं शक्यम् । अद्वैतश्रुतेस्तद्व्यतिरिक्तस्य सतोऽभावात् । तथा च य एव श्रुतौ शुद्धबुद्धमुक्तस्वभावत्वेन प्रतिपाद्यते स एवाहमितिप्रतीतेरपि विषयो भवतीति देहात्मभावप्रतीतेस्तत्र प्रतिबन्धकत्वेन न साङ्गाऽधीतवेदमात्रादसम्भावनाविपरीतभावनानिवर्तकं ज्ञानमुत्पद्यते । असम्भावना तु 'अस्थूलं' 'न तस्य कार्यं करणं च विद्यते' 'समो मशकेन समो नागेने'त्यादिश्रुतिभिः । एकस्मिन्नेवात्मन्यणुत्वव्यापकत्वदेहेन्द्रियादिराहित्यसर्वसमत्वादिप्रतिपादनेनाऽविद्यात्मकदोषसहितस्याऽऽत्मन्यसम्भावना निष्प्रत्यूहैवोदेति । न ह्येतादृश आत्मा कदाचिदपि दृश्यत उपपद्यते चेति ।'ततो वेदस्य सर्वप्रमाणापेक्षयाभ्यर्हितत्वेनैकवाक्यतासिद्ध्यर्थमध्यारोपापवादस्वीकारो विपरीतभावनेति । किञ्च न हि साङ्गाऽधीतवेदमात्राद्ब्रह्मविषयकाऽसम्भावनाविपरीतभावनानिवर्तकं ज्ञानं कदाचिदपि भवितुमर्हति । किन्तु सर्वप्रमाणमूर्द्धन्यो वेदः कथं विरुद्धधर्मवत्त्वं प्रतिपादयतीति तस्य यथाकथञ्चित्प्रामाण्यार्थं श्रौतार्थस्य बाधादौपचारिकेऽप्यर्थे तात्पर्यं कल्पयिष्यति ।

तस्मा'च्छान्तो दान्त' इत्यादिश्रुतौ विधिं परिकल्प्य तच्छेषत्वेन वेदान्तानां स्तुतौ वा तात्पर्यं कल्पयिष्यति । न ह्येतावता तत्प्रतिपादितार्थस्य कदाचिदपि श्रौतत्वं सम्भवति । कृते तु विचारे सर्वप्रमाणमूर्द्धन्ये वेद उपचरितार्थत्वं कथं भविष्यति कथं वा स्तावकत्वमिति सर्वज्ञे सर्वशक्तिमत्यलौकिकार्थस्य सर्वस्योपपत्तेर्न मुख्यार्थस्यान्यथाकल्पनमिति तस्मान्नार्थज्ञानमात्राय विचारः क्रियते किन्तु ब्रह्मज्ञानायेति तस्याऽऽरम्भणीयत्वं सिद्धमिति स्थिते पुनः पूर्वपक्षी समाधत्ते—'नैवमि'ति । यदुक्तं ब्रह्मज्ञानाय विचारः कर्तव्यो, न वेदार्थज्ञानमात्रायेत्येवं न वक्तव्यं भवति ।

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप. ।

तज्जलानि'त्याद्यध्यारोपो विपरीतभावनाशब्देनोच्यते । तस्या विपरीतभावनायास्तत्त्वज्ञानदशायामप्रे बाधनात् । देहात्मभावदृढप्रतीतेः । अहं ब्राह्मणः काणः सुखी क्षुधित इत्यादिरूपाया देहादीनामात्मत्वेन दृढप्रतीतेः । श्रुतेः । 'नित्यशुद्धबुद्धमुक्तस्वभावमे'वमित्यादिश्रुतेः । उपचरितार्थत्वं मिथ्या-

१ नेत्यपेक्ष्यते । २. अभ्यर्हितत्व इति पुस्तकम् । ३ हेतुत्वबोधक इतिशब्द. । ४ निवर्तकज्ञानमिति पुस्तकम् ।

अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते ।
तपसा वेदयुक्त्या तु प्रसादात्परमात्मनः ॥

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

तत्रोपपत्तिमाह—'अलौकिके'ति । भगवानधिष्ठानादिपञ्चात्मको रूपप्रपञ्चं विचित्रं कृतवान् । जीवास्तु तदंशा आराग्रपरिमाणा अल्पाः । अल्पानां विचित्रे भ्रमो भवत्येवेति रूपप्रपञ्चासक्तानां तेषामासक्तिनिवारणार्थमात्मरूपमेव वेदं कृतवान् । 'वेदो नारायणः साक्षादि'त्यादिवाक्यात् । तदर्थस्तु भगवानेवेति सर्वोऽपि वेद एकमेव वाक्यम् । एकार्थप्रतिपादकत्वात् । तदुक्तम्—'अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादि'ति । ननु वेदे सर्वत्राप्यन्यार्थप्रतिपादनस्य स्फुटतरं दृष्टत्वात्कथमेकार्थप्रतिपादकत्वमिति चेत् । न । 'एकमेवाऽद्वयं' 'सन्मूलाः सोम्येमाः प्रजाः' 'यत्र हि द्वैतमिव भवती'त्यादिश्रुतिभि'रेकत्वेन पृथक्त्वेने'त्यादिस्मृतिभिश्च ब्रह्मातिरिक्तस्य पदार्थस्याऽभावाद्ब्रह्मण एव तत्तद्रूपेण 'बहु स्यामि'तीच्छया प्रादुर्भावात् । तथा च वेदवेदार्थयोरुभयोरप्यलौकिकत्वेन न स्वबुद्ध्या वेदार्थं परिकल्प्य विचारेण लौकिकयुक्तिरूपेण तन्निर्द्धारः कर्तुं

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

कारिकया साधयति—'अलौकिके'ति । लौकिकेऽर्थे युक्त्यादिप्रसरः । अलौकिकेऽर्थे तपआदीनाम् ।

श्रीभिक्षुविरचिता वेदान्तचन्द्रिका ।

कथं सम्भवेदिति निर्वस्त्रमत्यक्षप्रमाणं बाधित्वाऽसम्भावनां विपरीतभावनाञ्च सन्निवृत्त्या कल्पयिष्यतीति । कृते तु विचारे चाऽध्यारोपापवादाभ्यां शुद्धात्मस्वरूपं ज्ञास्यतीति तदर्थं विचारो नाऽजागलस्तनप्राय इत्येवं प्राप्ते समादधते पूर्वपक्षिमतेन—'मैवमि'ति । 'अलौकिक' इति । 'वेदो नारायणः साक्षादि'ति वाक्याद्वेदस्याऽलौकिकत्वम् । 'वेदैश्च सर्वैरहमेव वेद्य' इत्यादिवाक्याच्च वेदार्थस्याप्यलौकिकत्वम् । हिर्हेतौ । तथा चाऽलौकिकवेदप्रतिपाद्यार्थस्य यतो न लौकिकत्वमतो न लौकिकविचारा-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

र्णनं स्तुतिरिति लक्षणादात्मोपासनसिद्धय आत्मन्यविद्यमानानपि धर्मानारोप्य स्तुतिः क्रियते, न त्वात्मा वस्तुतस्तादृश इति रीत्या स्तुतित्वं वाक्यानां कल्पयिष्यति । एवं श्रुतिबोधितानां धर्माणामात्मन्यसम्भावना दुर्निवारेति विचारशास्त्रमसम्भावनाविपरीतभावनानिवृत्तये कर्तव्यमिति हार्दम् । एवं जिज्ञासाशास्त्रकरणस्याऽऽवश्यकत्वं शृण्वन्नसहमानो ब्रूते—'मैवमि'त्यादिना । तपस एवोपदेश इति । 'तपसा ब्रह्म विजिज्ञासस्वे'त्यादिना ब्रह्मबोधार्थं तपस एवोपदेश इत्यर्थः । ननु तप आलोचन इति

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

र्थप्रतिपादकत्वम् । स्तुतित्वं सकलपदार्थानां ब्रह्मत्वेन प्रतीकोपासनाया वेदोक्तत्वेन तस्यास्तत्त्वज्ञानफलकत्वेन चोपासनार्थं 'वाचं धेनुमुपासीत' 'धन्वन्निव प्रपासी'त्यादिश्रुतीनामिव 'तत्त्वमस्या'दिवाक्यानामपि स्तुतित्वं वा मुक्त्यधिकारी कल्पयिष्यतीत्यर्थः । इति हेतोः । प्रमाणमूर्धन्यवेदार्थस्य व्याससूत्रानुसारेण विचारे कृतेऽध्यारोपापवादाभ्यां सर्वस्य मिथ्यात्वेऽवगते 'तत्त्वमस्या'दिवाक्यैस्तत्त्वज्ञानं भविष्यतीति विचार आवश्यक इति भावः ।

एकदेशिमतं दूषयन्ति 'मैवमि'त्यादिना । अलौकिकः, अलौकिकसाधनगम्यः । युक्त्या

१ वेदार्थस्याऽपीति पदं कदाचित्स्यात् ।

न हि स्वबुद्ध्या वेदार्थं परिकल्प्य तदर्थं विचारः कर्तुं शक्यः । ब्रह्म पुनर्यादृशं वेदान्तेष्ववगतं तादृशमेव मन्तव्यम् । अणुमात्रान्यथाकल्पनेऽपि दोषः स्यात् ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

शक्यवचनः । लौकिकं हि लौकिकयुक्त्याऽवगन्तुं शक्यं, ब्रह्म तु वैदिकमित्यलौकिकेनैव तपसेत्यादिनोक्तेन साधनत्रयेण । तत्र तपः पूर्वाङ्गम् । वेदयुक्तिः सहकारिणी । भगवत्प्रसादो मुख्यं कारणम् । एतत्त्रितयसम्पत्तावेव वेदार्थबोधो भवति । अन्यथा 'कं ब्रह्म खं ब्रह्मे'त्यादौ कथमुपदेशमात्रेणैव बोधः । कथं वेदानीन्तनानामबोध इति ।

नन्विदानीन्तनानामपि बोधो भवतीति चेत् । न । यदि तेषां बोधः स्यात्तदा सर्वज्ञत्वमलौकिकं तेजश्च तत्कार्यं स्यादेव । कारणे सति कार्योत्पादस्याऽऽवश्यकत्वात् । तथा च ब्रह्म यादृशं वेदान्तेषु

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

कारिकार्थमाहुः—**न हि स्वबुद्ध्या वेदार्थं परिकल्प्ये**'ति । **'अपाणिपादो जवनो ग्रहीता'** इति । अस्थूलमनण्वित्युपनिषद्वाक्यं निर्विशेषब्रह्मप्रतिपादकम् । **'यतो वा इमानि भूतानि जायन्त'** इत्युपनिषद्वाक्यं सविशेषब्रह्मप्रतिपादकम् । एवं चोभयोरेकवाक्यतासिद्ध्यर्थं किञ्चित्कल्पनीयमिति स्वबुद्धिः । तया परिकल्प्यो यो वेदार्थः । अध्यारोपापवादौ स्वीकृत्य विरोधपरिहाररूपोऽर्थः । तं परिकल्प्य तदर्थं विचारो न कर्तव्यः । अध्यारोपापवादयोः खण्डितत्वात् । इदं च श्रीमत्प्रभुचरणै-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

परपर्याययुक्तिविषयत्वम् । नन्वेवं ज्ञातुमशक्यत्वे **'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिरि'**ति श्रवणादिविधीनामानर्थक्यं स्यादित्यत आहुः—**'तपसे'**त्यादि । एतत्त्रितयसम्पत्तावेव वेदार्थबोधो भवति । नाऽन्यथेत्यर्थः । नन्वेवमपि श्रवणादिविध्याऽऽनर्थक्यम् । तपआदिभिरेव तत्प्रतिपत्तेः सम्भवादिति चेत् । न । तपआदीनां श्रवणादिकर्तुर्योग्यताऽऽपादकत्वात् । कारिकोक्तमर्थं संगृह्णते—**'न ही'**त्यादि । **'वेदार्थमि'**ति । अहंप्रत्ययविषय आत्मैव ब्रह्म, न ततोऽतिरिक्तमिति रूपम् । **'तदर्थ'**इति । कल्पितवेदार्थस्य विचारे । **'वेदविदेव चाहमि'**त्यादिवाक्यैर्भगवदेकवेद्यत्वाद्वेदस्य विचारवैयर्थ्यात् । लोकयुक्तिगोचरत्वे ब्रह्मणो लौकिकत्वापत्तेश्च । तदर्थमितिपाठे कल्पितवेदार्थदार्ढ्याय । तज्ज्ञानार्थमित्यर्थः । ननु ब्रह्माऽतिरिक्तो नात्मा, नात्मातिरिक्तं हि ब्रह्मेत्याकारकं तु ज्ञानं श्रेयः साधनीभूतं, नाऽनपेक्ष्यैव विचारं भवतीति न वैयर्थ्यम् । नाऽपि तादृशविचारविषयत्वे ब्रह्मणो लौकिकत्वमिति चेन्नेत्याहुः—**'ब्रह्म पुनरि'**ति । **यादृशं** जडजीवात्मकं सर्वप्रपञ्चरूपम् । ततोऽप्यधिकश्च । वेदान्तेषु **'सन्मूलाः' 'सर्वं खल्विदं तज्जलान्' 'एतावानस्य महिमा' 'अतो ज्यायांश्च पूरुष'** इत्यादिश्रुतिवाक्येषु । ननु **'तरति शोकमात्मवित्'** । **'आत्मलाभान्न परं विद्यत'** इत्यादि-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

लौकिकयुक्त्या । प्रतिपद्यते ज्ञातुं शक्यते । वेदार्थज्ञानालौकिकसाधनान्याहुः—**'तपसे'**त्यादिना । **तपसा** 'तपसा ब्रह्म विजिज्ञासस्वे'त्युक्ततपसेत्यर्थः । **युक्त्या** 'न्यग्रोधफलमाहरे'त्याद्युक्तवैदिकयुक्त्येत्यर्थः । **प्रसादात्** 'भक्त्या तुतोष भगवान् गजयूथपाये'त्याद्युक्तप्रसादादित्यर्थः । स्वोक्तकारिकार्थं स्फुटीकुर्वन्ति—**'नही'**त्यादिना । स्वबुद्ध्या वेदाप्रतिपाद्यया । **वेदार्थं परिकल्प्य** सर्ववेदानामे-

---

१ 'तदार्थ' इति वेदान्तचन्द्रिकासंमत- पाठ ।

योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥

'नैषा तर्केण मतिरापनेये'तिश्रुतेश्च ।

न च विरुद्धवाक्यानां श्रवणात्तन्निर्धारार्थं विचारः । उभयोरपि प्रामाणिकत्वेनै-

गोस्वामिश्रीपुरुषोत्तमविरचिता अणुभाष्यव्याख्या ।

प्रतिपाद्यते तादृशमेव मन्तव्यं, युक्त्यगोचरत्वादित्याशयेनाऽऽह–'ब्रह्म पुनरि'ति। ननु लौकिकयुक्ते-रनिष्टप्रसञ्जनरूपत्वेन तद्विरुद्धार्थकल्पनेऽनिष्टप्रसक्तिरेव स्यादतो लौकिकयुक्तियुक्तमेव मन्तव्यं तदिति चेत्तत्राऽऽह–'अणुमात्रे'ति । न हि लौकिकयुक्त्या तत्राऽनिष्टप्रसङ्गः कर्तुं शक्यः । तस्य श्रुत्येकसम-धिगम्यत्वात् । ततोऽणुमात्रेणाप्यन्यथाकल्पने दोषः स्यात् । तत्र प्रमाणमाह–'योऽन्यथे'त्यादिना 'श्रुते-श्चे'त्यन्तेन । ननु वेदे सर्वत्र 'तदेजति तन्नैजति' 'तद्दूरे तदन्तिके' 'स वा एष महानज आत्मा' 'एषोऽणुरात्मा चेतसा वेदितव्य' इत्यादिश्रुतिषु परस्परं विरोधश्रवणात्तत्परिहारार्थं विचारः कर्तव्य इत्याशङ्कायामाह–'न चे'ति । तत्र हेतुमाह–'उभयोरपी'ति । न हि विचारेणै-कतरपक्षस्य निर्धारः कर्तुं शक्यः । उभयोरपि श्रुतिसिद्धत्वेनैकतरनिराकरणाऽसम्भवात् ।

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

विद्वन्मण्डने विस्तरेणोक्तमित्यत्रोपरम्यते । विरुद्धयोर्वाक्ययोरेक एवार्थो मन्तव्य इत्याहुः—'ब्रह्मे'ति । 'अणुमात्रे'ति । स्वल्पमात्रेत्यर्थः । दोषः स्यात् । श्रोतुर्वक्तुरपीति शेषः । श्रोतुर्दोषमाहुः—'योऽन्य-थे'ति । वक्तुर्दोषमाहुः–'नैषे'ति । मतिरपनेयेत्यपपाठः । मतिरापनेयेत्येव पाठः । अर्थस्त्वेक एव । वेदत्वात्पाठ एव मुख्यः । विचारेण निर्द्धारो न भविष्यतीत्याहुः—'उभयोरपी'ति । ननु

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

श्रुतिवाक्यादात्मज्ञानमात्रप्रयोजनं शास्त्रमिति, येनैव विचारेणाऽऽत्मज्ञानं सिद्ध्येत्स एव सिद्धान्त इ-त्यत आहुः—'अणुमात्रे'ति । तत्र प्रमाणं 'योऽन्यथे'ति वाक्यद्वयम् । ननु परस्परविरुद्धार्थवा-क्यानां श्रवणात्सन्देहान्निराकरणपूर्वकमर्थं निश्चेतुं विचार इत्यत आहुः–'न चे'ति । तत्र हेतुमाहुः—'उभयोरि'ति । विचारेणाऽर्थनिश्चये ह्येकस्य बाधः कार्यस्तत्र चोभयोरपि वाक्ययोः समबलत्वेनैक-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

धातो रूपमिदमिति तपसा ब्रह्मविजिज्ञासस्वेत्यत्राऽऽलोचनेन विचारेण ब्रह्म विजिज्ञासस्वेत्येवं तपःशब्देन

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप. ।

कवाक्यतासिद्ध्यर्थं वेदतात्पर्यविषयीभूतावध्यारोपापवादौ वेदार्थ इति परिकल्प्येत्यर्थः । तदर्थं तयो-रध्यारोपापवादयोर्निर्वाहार्थम् । विचारः स्वकल्पितनिर्वाहार्थं सूत्रात्मको विचार इत्यर्थः । ननु ब्रह्मणि पूर्वोक्तरीत्याऽसम्भावनाविपरीतभावनानां सम्भवाद्ब्रह्मस्वरूपनिर्णयार्थमेवाध्यारोपापवादपूर्वको विचारः कर्तव्य इत्यत आहुः । 'ब्रह्म पुनरि'त्यादि । यादृशं 'अणोरणीयानि'त्याद्युक्तनानाप्रकारकैकधर्मि-विशेष्यकज्ञानविषयीभूत, तादृशमेवेत्येवकारेणान्याद्यशाङ्गीकारव्यवच्छेदः । अन्यथाकल्पने वेदो-क्तादन्यथाकल्पने । दोषज्ञोधिकां श्रुतिमाहुः 'योऽन्यथे'त्यादिना । एषा श्रुतिवाक्येभ्यः सम्पन्ना ।

तन्निर्धारार्थं विरुद्धवाक्यानामर्थनिर्वाहार्थम् । उभयोरपि 'आसीनो दूरं व्रजति शयानो

कतरनिर्धारस्याऽशक्यत्वात् । अचिन्त्यानन्तशक्तिमति सर्वभवनसमर्थे ब्रह्मणि विरोधाभावाच्च । अत एवोपनिषत्सु तत्तदुपाख्याने बोधाऽभावे औपाधिकबोधे च तपस एवोपदेशः । नच तपःशब्देन विचारः । तस्य पूर्वानाधिक्यात्तप एव ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

हेत्वन्तरमप्याह–'अचिन्त्ये'ति । न हि तदेजतीत्यादिभिर्विरुद्धार्थप्रतिपादनं क्रियत इति वक्तुं शक्यम् । विरोधो हि सहाऽनवस्थानलक्षणः । ब्रह्म तु वैदिकमिति वेदेनोभयोरपि तत्र प्रतिपादितत्वेन सहाऽनवस्थानलक्षणविरोधाऽभावात् । तत्र हेतुगर्भं विशेषणद्वयमाह–'**अचिन्त्यानन्तशक्तिमति सर्वभवनसमर्थे**' इति । '**न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च**'त्यादिभिरचिन्त्या मनसाप्याकलयितुमशक्या अनन्ताः परिच्छेदरहिता नित्याश्च शक्तयो यत्र । सर्वभवनसमर्थं च तत् । '**सर्वं खल्विदं ब्रह्म**' '**ऐतदात्म्यमिदं सर्वं**' '**सच्च त्यच्चाभवत्**' '**निरुक्तं चानिरुक्तं च निलयनं चाऽनिलयनं च विज्ञानं चाविज्ञानं च**' '**सत्यं चानृतं च सत्यमभवद्यदिदं किञ्च तत्सत्यमित्याचक्षते**' '**एकोऽहं बहु स्यामि**'त्यादिभिस्तस्यैव सर्वरूपत्वोक्तेः । न ह्येकस्याऽनेकरूपत्वेन भवनं तादृक्सामर्थ्यं विना सम्भवति ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

विरोधपरिहारस्याऽशक्यत्वेऽपि '**यावदाशङ्कं तर्कानुसरणादि**'ति न्यायाद्विरोधपरिहारार्थं विचारः कर्तव्य इत्यत आहुः–'**अचिन्त्ये**'ति । ननु मास्तु परब्रह्मणि विरोधः, परन्तु मन्दबुद्धीनामेकधर्मिविशेष्यकं विरुद्धोभयप्रकारकं ब्रह्मज्ञानं, निश्चयात्मकं विचारं विना कथं भविष्यतीति चेत् । न ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

तरार्थनिश्चयः । कर्तुमशक्य एवेत्यर्थः । ननु नैकस्यापि बाधोऽभिप्रेतः किन्तु सहानवस्थानलक्षणो विरोधः समाधेयो व्यवस्थयेत्यत आहुर्हेत्वन्तरं–'**अचिन्त्ये**'ति । '**अत एवे**'ति । विचारस्याऽकिञ्चि-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

विचारः कुतो न ग्राह्य इत्याशङ्क्याऽऽहुः–'**न चे**'त्यारभ्य '**तप एवे**'त्यन्तेन । **तस्य पूर्वानाधिक्यादि**ति । यदि तपःशब्देन विचारो ग्राह्यस्तदा विचारेण प्रमेयप्रतिपत्तेः सर्वज्ञानविषयत्वेनाऽपूर्वस्याऽभावेन पूर्वानाधिक्याद्युपदेशवैयर्थ्यमित्यर्थः । तथा च सिद्धमाहुः–'**तप एवे**'ति । विचारस्य पूर्वाऽनाधिक्यादपूर्वत्वाऽभावात्तप एव । '**वैराग्यं साङ्ख्ययोगौ च तपो भक्तिश्च केशव**'इत्यादिवैष्णवत-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

याति सर्वेश' इत्यादिश्रुतिप्रतिपादितयोर्विरुद्धत्वेन प्रतीतिगोचरयोर्द्वयोरप्यर्थयोरित्यर्थः । एकतर उभयोर्मध्ये एकमात्ररूप इत्यर्थः । ननु विरुद्धयोरेकधर्मिवृत्तित्वाङ्गीकारे शीतोष्णत्वयोरपि तथात्वापात इत्यत आहुः । '**अचिन्त्ये**'त्यादि । तथा च यतोऽचिन्त्यानन्तशक्तिमानतः सर्वभवनसमर्थः । यतः सर्वभवनसमर्थोऽतो विरोधाभाव इत्यर्थः । शीतोष्णादिस्तु नैवंविध इति तत्र विरोध एवेतिभावः । अत एव वेदार्थब्रह्मणो लौकिकयुक्त्या निर्णयाऽसम्भवादेव । तत्तदुपाख्यान इत्यादि । भृगुवरुणसंवादे भृगोर्बोधाभावे वरुणेन 'तपसा ब्रह्म विजिज्ञासस्वे'त्युक्तम् । एवं छान्दोग्ये इन्द्रप्रजापतिसंवादे इन्द्र-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

तस्मान्न कुत्रापि तदेजतीत्यादौ विरोधसम्भावनाप्यस्तीति न तत्परिहारार्थं विचारः कर्तव्यः किन्तु पूर्वोक्तमेव साधनत्रयमित्यभिप्रायेणाऽऽह–'अत एवे'ति । यतोऽलौकिकमेव ब्रह्म, तच्च वेदार्थ इति न साङ्गाऽध्ययनेन विचारादिना चाऽलौकिकेन साधनेनाऽवगन्तुमशक्यम्। अत एवोपनिषत्सु तत्तदुपाख्याने तदज्ञानाऽन्यथाज्ञानसम्भावनायां तपःप्रभृतीनां चोपदेशः श्रूयते। भाष्ये एवकारो बोधाभाव औपाधिकबोधे चेत्यनेन योजनीयः। तपःशब्दोऽपि तदतिरिक्तसाधनानामुपलक्षको ज्ञेयः । तद्यथा, तैत्तिरीयोपनिषदि हि **'भृगुर्वै वारुणि'**रित्यस्य **'सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिते'**त्यन्तेन सन्दर्भेण ब्रह्मज्ञानाभावे पुनः पुनर्वरुणान्तिके गमनं, तत्र च प्रतिगमनं, 'तपसा ब्रह्म विजिज्ञासस्वे'त्यन्नमयाद्यानन्दमयान्तबोधे वेदानुकूलमीमांसातपसोरेवोपदेशः। तथा तत्रैव **'अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशमि'**त्यादौ धातुः प्रसादात्पश्यतीत्युक्तेर्भगवत्प्रसादस्यापि स्फुटतर-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

तपसैव सर्वकार्यसिद्धेः । ननु सर्वान्तर्गतं ब्रह्मज्ञानमित्यत्र किं प्रमाणमित्यत आहुः–**'अत एवे'**ति । उपनिषत्सु तैत्तिरीयछान्दोग्यादिषु । तैत्तिरीये भृगोर्बोधाभावे, **तपसा ब्रह्म विजिज्ञासस्वेति** वरुणेन कृतः। छान्दोग्ये इन्द्रप्रजापतिसंवाद इन्द्रस्यौपाधिके देह एवाऽऽत्मेति विपरीतबोधे जाते तपस एवोपदेशः कृतः । अत्र पूर्वपक्षी तप आलोचनेत्यनेन तपःपदस्य विचारार्थकत्वं स्वीकृत्याऽऽग्रहेण शङ्कते–**'न चे'**ति । तप आलोचन इत्यत्र सर्वधातुभ्योऽसुन् इत्यनेन, तप इत्यस्मादसुन् । उक्ता-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

स्फुरत्वादेव । तैत्तिरीये भृगूपाख्याने भृगोर्बोधाऽभावे, छान्दोग्ये हीन्द्रप्रजापतिसंवाद इन्द्रस्यौपाधिकबोधे च, वरुणेन प्रजापतिना च साधनान्तरस्य तपस एवोपदेशः कृतः । **'तपसा ब्रह्म विजिज्ञासस्वे'**ति **'वस द्वात्रिंशद्वर्षाणि ब्रह्मचर्यमि'**ति च । ननु तप आलोचन इत्यस्माद्धातोर्निष्पन्नेन

श्रीबालकृष्णभट्टकृता गूढार्थदीपिका ।

प्रोक्तायाः पञ्चपर्वात्मिकाया विद्यायाः पर्वरूपं तप एव तपःशब्देनोच्यत इति भावः । ननु **'भृगुर्वै वारुणि'**रिति तैत्तिरीयोपनिषत्सु भृगूपाख्याने **'तपसा ब्रह्म विजिज्ञासस्वे'**त्युक्तम् । तन्नूपाख्यानानां स्वार्थे प्रामाण्याऽनङ्गीकारात्तत्रोक्त तपोऽप्रयोजकमेवेत्याशङ्क्य स्वार्थे प्रामाण्यमङ्गीकुर्वंस्तदनङ्गीकारं दूषयति–

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

स्यौपाधिकबोधे प्रजापतिना 'वस द्वात्रिंशतं वर्षाणि ब्रह्मचर्य'मिति तपस एवोपदेशः कृतो न तु लौकिकयुक्तेरित्यर्थः ।

ननु 'तप आलोचने' इति धर्मामिनिष्पन्नस्तपःशब्दोऽपि विचारार्थक एवेत्यत आहुः । **'न च तप'** इत्यादि । तस्य यौगिकतपःशब्दार्थविचारस्य । **पूर्वानाधिक्यात्** लौकिकयुक्तिरूपपूर्वोक्तापेक्षयातिरिक्तत्वासम्भवादित्यर्थः । **तप एव** रूढ्या वृत्त्या तपःशब्देन बोधितोऽर्थो विचारातिरिक्ततपो-

१. तपःप्रभृतीनामेवेति रापुस्तकम् ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

मेव कारणत्वोक्तेः । तथा बृहदारण्यके प्रश्नोपनिषद्यपि '**सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौशिल्यश्चाश्वलायनो भार्गवो वैदर्भी कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह स वैतत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नास्तान् ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ यथाकामं प्रश्नान्पृच्छथ यदि विज्ञास्याम**' इत्यारभ्य '**स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवती**'त्यन्तेन सन्दर्भेण कात्यायनादीनां ब्रह्मज्ञानार्थं पाणौ समिदुपहारं गृहीत्वा पिप्पलादसमीपे गमनम्। ततः स ऋषिः पूर्वं तपःप्रभृतीनि साधनान्येवोपदिष्टवांस्ततः प्रश्नोत्तराणीति तत्रापि पूर्वं तपः प्रभृतीनामेवोपदेशः श्रूयते । उपसंह्रियते च तैरेवेति । एवमन्यत्रापि तदुपदेशस्तत्तदुपाख्यानेषु द्रष्टव्यः ।

ननु तप आलोचन इत्युक्तेस्तपःशब्देन विचार एवोच्यत इत्याशङ्क्य नेत्याह—'**न चे**'ति । तत्र हेतुमाह—'**तस्ये**'ति । यदि तपःशब्देनालोचनरूपो विचार एवोच्येत तदा '**तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति स तपोतप्यत स तपस्तप्त्वे**'त्यादिना पुनःपुनस्तदुक्तिर्व्यर्थी स्यात्। तस्य पूर्वस्मादविशिष्टत्वात् । तस्मादुपनिषत्सु तपःशब्देनैकाग्रतया स्थितिरेवोच्यत इति सर्वं सुस्थम् । वेदे सर्वत्रोपाख्यानेषु तत्तत्संवादानां दृष्टत्वात्तावतो भागस्य ब्रह्ममात्रप्रतिपादकत्वाऽभावादप्रामाण्यं माऽस्त्वि-

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

रनकारयोर्लोपः । रुत्वविसर्गौ । तप इति सिद्धम् । **तस्य** तपःशब्दस्य । '**पूर्वानाधिक्यादि**'ति । अयम्भावः—ब्रह्मणि परस्परविरुद्धानामर्थानामुपनिषद्वाक्यात्प्रतिभानं भवतीति कृत्वा विचारेणाऽध्यारोपापवादेन परमते, स्वमते तु ब्रह्मणः सामर्थ्यप्रदर्शनेन वा विरोधपरिहारं कृत्वा वाक्यार्थः सम्पादनीयः। स च *पूर्वमेव साङ्गवेदाध्ययनानन्तरं भविष्यति । गुरुसमीपगमनानन्तरं गुरुणा विचारार्थकतपउपदेशे* कृते पूर्वोक्तमेवोक्तं गुरुणा, नाधिकं किञ्चिदुक्तमित्युपेक्षणीयत्वं स्यादित्ययमर्थो पूर्वानाधिक्यादित्यनेन बोध्यत इति । '**तप एवे**'ति । छान्दोग्य **इन्द्रस्य द्वादशशतं वर्षाणि ब्रह्मचर्य**मित्यर्थकतपःशब्दस्य उपदेशात्तप एवोच्यते । एवकारेण विचारव्यवच्छेदः ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

विचारापरपर्यायभूताऽऽलोचनार्थकत्तपःशब्देन विचार एवोपदिष्टः साधनतयेत्यत आहुः—'**न चे**'ति । उपदिष्टतपःशब्देन । तत्र हेतुः '**तस्ये**'ति । उपदिष्टविचारस्य पूर्वतनीनाद्विचाराद्विशेषाऽभावात् । तस्य शिष्यस्य वा पूर्वाऽधिकाराद्विशेषाभावात् । तपःशब्देन भगवत्परतया चित्तैकाग्र्येण स्थितिरूपं तप एवेत्यर्थः ।

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीपः ।

त्तरूप एव ग्राह्य इत्यर्थः । **तप** एवेत्येवकारेण निर्धारणार्थकत्वं तपःशब्दे बोधितम् । तेन छान्दोग्ये 'वस द्वात्रिंशतं वर्षाणि ब्रह्मचर्य'मित्यस्य विचारार्थकता न सम्भवतीत्यपि बोध्यम् । एवं चैकत्र ब्रह्मबोधे तपोहेतुत्वसिद्धौ तपःशब्दप्रयोगस्थलेऽपि तदेव ग्राह्यं न तु विचार इत्यर्थः ।

नचोपाख्यानानां मिथ्यात्वम् । तथा सति सर्वत्रैव मिथ्यात्वं भवेत् । विशेषाभावात् । न ह्यप्रामाणिकोक्ते विधौ वा उपाख्याने वा ब्रह्मस्वरूपे वा कस्यचिदपि विश्वासो, यथा लोके । तस्माद्वेदेऽक्षरमात्रस्याप्यसत्यार्थज्ञानस्याऽभावात् वैदिकानां न सन्देहोऽपि, किं पुनर्विरुद्धार्थकल्पना ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

त्यत आह—'न चे'ति । उपाख्यानानि हि वेदमध्यपातीनि न तदतिरिक्तानि । तथा च तेषां मिथ्यात्वे सर्वत्रैव मिथ्यात्वं को वा निवारयेत् । न ह्यनाप्तोक्ते विधौ वोपाख्याने वा ब्रह्मस्वरूपे वा कस्यचित्कदाचिदपि विश्वासः सम्भवति । यथा लोके भ्रमप्रमादादिदोषसहितानां पुरुषाणां वाक्ये कस्यचिदपि विश्वासो न भवति । तन्न्यायेनाऽत्रापि तथा । उक्तदोषाणामत्रापि सम्भवेनाऽनाप्तत्वात् ।

उक्तमर्थमुपसंहरति—'तस्मादि'ति । यस्माद्वेदस्य सर्वस्यापि भगवच्छ्वासत्वेन 'स यथा सैन्धव

गोस्वामिश्रीमत्पुरुषोत्तमविरचितं विवरणम् ।

ननूपाख्यानार्थवादरूपत्वेन स्तावकत्वात्क्वचिदविद्यमानार्थबोधकत्वेनाऽप्रामाण्यम् । इति कुतः? । विद्यमानगुणानुवादोऽविद्यमानगुणानुरूपो वोभयोरपि स्तुतित्वादित्यत आहुः—'न चे'ति । न हीत्यर्थः । कुत इत्यत आहु—'तथा सती'ति । वेदैकदेशस्याऽप्रामाणिकत्वे सर्वत्र विश्वासो गच्छतीत्याहुः—'न ही'ति । विश्वास इत्यनेनान्वितोऽप्रामाणिकोक्त इति । उपाख्यानरूपे किञ्चिदंशेऽप्रामाणिको यो वेदस्तदुक्त इत्यर्थः । इदं च विशेषणविध्यादित्रयेऽन्वितम् । 'यथा लोक' इति । प्रामाणिकपुरुषस्य किञ्चिदंशे प्रामाण्यापगमे सर्वत्रैव गच्छतीत्यर्थः । विद्यास्तु वेदाङ्गविद्यासु । अन्यथा मीमांसायाश्चतुर्द-

केशिद्विरचिता वेदान्तचन्द्रिका ।

ननूपाख्यानानि 'वायुर्वै क्षेपिष्ठा देवते'त्याद्यर्थवादवदन्वयं विधावलभमानानि प्रामाण्यं न प्राप्नुवन्तीति निरर्थकत्वाऽपरपर्याय मिथ्यात्वं स्वात्मनि साधयन्तीति तत्प्रतीताऽर्थज्ञानसाधनक्रममनुरुध्य तपःप्रभृतीनां न ज्ञानहेतुत्वमुररीकार्यमिति दूषयन्ति—'न चोपाख्यानानामि'ति । तत्र हेतुमाहुः—'तथा सती'ति । मिथ्यात्वे सति । 'सर्वत्रे'ति । श्वेतकेतूपाख्याने, त्रिवृत्करणादौ च बाधितार्थत्वं स्यात् । भृगूपाख्यानाद्विशेषविरहात् । तथा सति सर्वोऽपि वेदमार्ग उच्छिद्येतेत्याशयेनाऽऽहुः—'न ही'ति । अत्राऽपि तथा स्यादिति शेषः । उपसंहरन्ति—'तस्मादि'ति । यतो वेदविदो वेदे विश्वस्य वेदोक्तसाध-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

ननु तपसो ब्रह्मज्ञानसाधनत्वमुच्यते परमुपाख्यानेषूच्यते, न तु तपसो ब्रह्मज्ञानसाधनताबोधकः कश्चिद्विधिरस्ति । उपाख्यानानां तु विधिस्तावकत्वेनार्थवादतया स्वार्थे प्रामाण्याभावान्मिथ्यार्थप्रतिपादकत्वमेवेति तपसो ब्रह्मज्ञानासम्भवाद्वेदार्थब्रह्मज्ञानाय व्यासविचार आवश्यक इत्यत आहुः । 'न चोपाख्यानाना'मित्यादि । तथा सति, उपाख्यानानामवास्तवार्थप्रतिपादकत्वरूपमिथ्यात्वाङ्गीकारे सति । सर्वत्रैव वेदवाक्यमात्र इत्यर्थः । विशेषाभावात् ब्रह्ममूलकत्वातिरिक्तस्य वेदे प्रामाण्यप्रयोजकस्याभावात् । तस्य चोपाख्यानेष्वप्यविशिष्टत्वादिति भावः । विधौ 'श्रोतव्यो मन्तव्य' इत्यादिरूपे । उपाख्याने श्वेतकेतूपाख्यानस्थत्रिवृत्करणनिरूपणादौ । ब्रह्मस्वरूपे 'सत्यं ज्ञानमनन्तं ब्रह्म' 'निष्कलं शान्तमनवद्य'मित्यादिवाक्यप्रतिपादितब्रह्मस्वरूपे । लोके एकदाऽप्रामाणिकशब्दप्रयो-

विद्यासु च तदश्रुतेः । यदि वेदार्थज्ञाने विचारस्योपयोगः स्यादङ्गत्वेन व्याकरणस्येव विद्यासु श्रवणं स्यात् । स्वातन्त्र्ये च पुराणादेरिव मीमांसाया अपि प्रकारभेदेन प्रतिपाद-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

**घन**' इति न्यायेनैकरूपत्व तस्मात्तनाक्षरमानस्याप्यसत्यार्थप्रतिपादकत्वाभावाद्वैदिकाना तदुक्तेऽर्थे विश्वास एवैतदुक्त सर्वथासत्यमित्येनरूपो भवति, न सन्देहोऽपि । विरुद्धार्थकल्पना तु दूरे सुतराम् । तस्मान्न वेदार्थरूपब्रह्मज्ञानाय विचारः कर्तव्य इति सिद्धम् । अत्र विनिगमकान्तरमप्याह—'**विद्यासु चे**'ति । तदेव विशदयति—'**यदि वेदार्थज्ञान**' इति । विद्या हि द्विविधा । अङ्गभाव प्राप्ता, स्वतन्त्रा चेति । तत्र वेदार्थज्ञानेऽङ्गत्वेन यदि विचार उपयुज्येत तदा तस्य व्याकरणवद्वेदाङ्गत्वेन विद्यासु श्रवण स्यात् ।

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

शसु विद्यासु पाठात्तदश्रुतेरित्यसङ्गतम् । **तदश्रुतेः** विचाराऽश्रुते. । तदेवाऽऽह—'**यदी**'ति । ननु माऽस्त्वङ्गत्वेनोपयोग, पार्थक्येन तु चतुर्दशविद्यासु श्रवणादुपयोगोऽस्त्वित्यत आहु·—'**स्वातन्त्र्ये**' इति । '**प्रकारभेदेने**'ति । उपनिषत्प्रतिपाद्यपुरुषबोधकप्रकारभिन्नप्रकारेणेत्यर्थ· । ननु प्रका-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

नानि विधाय पशुपुत्रस्वर्गापवर्गरूपफलानि लभन्ते, तस्मात् । प्रकारान्तरेणाऽपि विचाराऽनर्थक्य दर्शयन्ति—'**विद्यासु चे**'ति । चरणव्यूहादौ 'शिक्षा कल्पो व्याकरण निरुक्त छन्दो ज्योतिषमि'ति, षडङ्गविद्यासु श्रवणाभावात् । एतदेव विशदयन्ति—'यदी'ति । नन्वङ्गभावाऽभावेऽपि '**पुराणन्यायमीमांसे**'ति स्वतन्त्रविद्यासु पाठात्स्वातन्त्र्येणैवाऽऽरम्भणीयो विचार इत्याहु·—'**स्वातन्त्र्ये चे**'ति । मीमासाया पुराणादिवत्स्वातन्त्र्येण ब्रह्मज्ञानसाधनत्वे पुराणादिवदेव वेदान्तप्रकाराऽतिरिक्तप्रकारेण ब्रह्म-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

'**न चोपाख्यानानां मिथ्यात्वमि**'तीत्यादिना । '**विद्यासु च तदश्रुतेरि**'ति । तस्य विचारस्य विद्यास्वश्रुतेरश्रव॰ ात् । शिक्षा कल्पो व्याकरण निरुक्त छन्दो ज्योतिषमित्यत्र षडङ्गोक्तिरिव न जिज्ञासोक्तिरिति भाव । तदेव विभजति—'**यदि वेदार्थे**'त्यादिना । ननु जिज्ञासाशास्त्रस्य पुराणादि-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

कृत्येन निर्णीतपुरुषप्रयुक्तशब्दे । **वैदिकानां** वैदिकशब्दमाने प्रामाण्यवादिनाम् । **सन्देहोऽपि** वेदे अप्रामाण्यसन्देहोऽपीत्यर्थ । **विरुद्धार्थकल्पना** उपाख्यानाना मिथ्यार्थत्वकल्पना ।

विचारस्याऽकर्तव्यतायां हेत्वन्तरमाहु —'**विद्यास्वि**'त्यादि । **विद्यासु** चतुर्दशविद्यान्त·पातिमुख्यवेदाङ्गेषु परिगणितेष्वित्यर्थ· । **श्रवणं स्यात्** 'शिक्षा कल्पो व्याकरण निरुक्त छन्दो ज्योतिषमि'ति षडङ्गान्युक्त्वा 'तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते' इतिवद्व्याससूत्ररूपविचारस्यापि ब्रह्मज्ञानसाधकत्वेनाऽङ्गरूपविद्यासु श्रवण स्यादित्यर्थ ।

**स्वातन्त्र्ये च** उपनिषदतिरिक्तपुराणादिप्रकारेण व्यासविचारस्य ब्रह्मज्ञानोपयोगित्वे चेत्यर्थ· । **प्रकारभेदेन** अनौपनिषज्ज्ञानसाधनत्वेन । **प्रतिपादकत्वं** व्याससूत्राणा ब्रह्मप्रतिपादकत्वम् । तुश-

१ वेदार्थज्ञानाङ्गत्वेनेति खपुस्तकम् ।

कत्वं स्यात्। 'तं त्वौपनिषदं पुरुषं पृच्छामी'ति तु तेषां निषेधः। अन्यथाज्ञानं नोपनिषदुक्तं फलं समर्पयति। तस्मादारम्भणीय एव ब्रह्मविचारः। अनेन धर्मविचारोऽप्याक्षिप्त एव। न ह्येतन्निराकर्तुः सोऽयमतिभार इति पूर्वः पक्षः।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

स्वातन्त्र्ये च पुराणादिवद्ब्रह्मकारभेदेनापि ब्रह्मप्रतिपादकत्वं स्यात्। एवमस्त्विति चेन्नेत्याह–'तं त्वौपनिषदमि'ति। 'तं त्वौपनिषदं पुरुषं पृच्छामी'त्यत्र ह्युपनिषन्मात्रवेद्यस्यैव पुरुषस्य पृष्टत्वात्तदतिरिक्तानां प्रकाराणां निषेध इति, ततोऽणुमात्रेणाप्यन्यथाज्ञानं न 'ब्रह्म वेद ब्रह्मैव भवती'त्याद्युपनिषदुक्तं फलं समर्पयेत्। अधुना पूर्वोक्तं सर्वमेवोपसंहरति- तस्मादिति। नारम्भणीय इत्यारभ्य समर्पयतीत्यन्तेन सन्दर्भेण प्रतिपादितात्कारणकलापाद्ब्रह्मविचारो व्यासेन नारम्भणीय एवेति।

ननु यथा जैमिनिना 'अथातो धर्मजिज्ञासे'ति धर्मजिज्ञासां प्रतिज्ञाय किंलक्षणोऽयं धर्म इत्याकाङ्क्षायां 'चोदनालक्षणोऽर्थो धर्म' इत्यारभ्य धर्मजिज्ञासा कृता। न हीयं धर्मजिज्ञासा निष्प्रयोजना। शिष्टाचारविषयत्वेन तस्याः सफलत्वे सिद्धे आवश्यकत्वाल्लाघवाच्च पूर्वकाण्डार्थरूपधर्मज्ञानमेव तस्य फल-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

रभेदे को दोष इत्यत आहुः–'तं त्वि'ति। ब्रह्मविचारः उत्तरमीमांसेत्यर्थः। अनेन, 'स तृतीयमतप्यत स एतं दीक्षितवादमपश्यदि'त्यादौ तपस एवोपदेशेनेत्यर्थः। गुरोर्मतनिराकर्तुः शिष्यमतनिराकरणे सङ्कोचो नास्तीत्यतिभार इत्यनेन सूचितम्। व्याससूत्रात्पूर्वमङ्गैरेव सन्देहनिवृत्तिर्यथा तथेदानीमपि भविष्यतीति पूर्वपक्षिरहस्यम्। सिद्धान्तमाहुः 'सिद्धान्त' इत्यादि। ननु प्रत्यक्षानयोर्युक्ते लोके सर्वोऽपि

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

स्वरूपप्रतिपादकत्वं स्यात्। तद्दूषयन्ति 'तन्त्वि'ति। तुः पूर्वपक्षव्युदासे। तेषां पुराणादीनां ब्रह्मज्ञानसाधनतया निषेधः। तत्र हेतुः–'अन्यथे'ति। वेदान्तप्रकारातिरिक्तप्रकारकब्रह्मस्वरूपज्ञानं, 'ब्रह्म-

श्रीलालूभट्टकृता गूढार्थदीपिका।

स्वतन्त्रतया प्रतिपादकत्वमस्तु को दोष इत्याकाङ्क्षायामाहुः–'तन्त्वौपनिषदं पुरुषं पृच्छामीति तु तेषां निषेध' इति। 'तन्त्वौपनिषदं पुरुषं पृच्छामी'तिश्रुतावौपनिषदमिति विशेषणात्तेषां स्वतन्त्रतया प्रतिपादकानां स्वापेक्षाविषयतया निषेधः। 'नीलोत्पलमि'त्यादौ विशेषणे व्यावर्तकतायाः सिद्धत्वात्। किमर्थं निषेध इत्याकाङ्क्षायामाहुः–'अन्यथाज्ञानमि'त्यादि। उपनिषदुक्तप्रकारकज्ञानादन्यथाज्ञानमुपनिषदुक्तं गुणातीतं फलं न प्रयच्छतीत्यर्थः। 'अनेन धर्मविचारोऽप्या-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

ब्देन 'तं तु' इति तुशब्देन[1]। तेषां उपनिषद्भ्यः सोपस्कराभ्योऽतिरिक्तसाधनानाम्। निषेधः ब्रह्मप्राप्तिसाधनत्वनिषेधः। अन्यथाज्ञानं उपनिषदतिरिक्तयोगसाङ्ख्यपुराणादिसाधनजन्यं ज्ञानम्। फलं परमानन्दावाप्तिरूपं फलम्। तस्मात् साङ्गवेदाध्ययनेन वेदार्थब्रह्मज्ञानस्य सम्भवात्। ब्रह्मविचारः व्याससूत्ररूपो ब्रह्मविचारः।

अनेन साङ्गवेदाध्ययनादेव कर्मानुष्ठानस्यापि सम्भवेन। एतत् उत्तरमीमांसाशास्त्रम्। सः पूर्वमीमांसानिराकरणरूपः।

१ शब्देनेत्यधिकं प्रदीपपाठः।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

मिति निश्चीयते । तथाऽपि तन्न्यायेन ब्रह्मजिज्ञासाया अपि व्यासकर्तृकत्वाच्छिष्टाचारविषयत्वेन सफलत्वे सिद्ध उत्तरकाण्डार्थरूपब्रह्मज्ञानमेव फलत्वेन कल्प्यतामित्याशङ्कायामाह—'अनेने'ति। अनेन ब्रह्मविचाराक्षेपेण धर्मविचारोऽप्याक्षिप्त एव ज्ञातव्यः । तथा च तन्न्यायेनैतत्सिद्धिः कथं स्यादिति भावः । ब्रह्मविचाराक्षेपेण धर्मविचाराक्षेपो यथायथं स्वयमूह्यः । दिङ्मात्रमत्र प्रदर्श्यते । धर्मविचारो जैमिनिना कर्तव्यो न वेति सन्देहे, न कर्तव्य इति प्राप्तम् । कुतः । अर्थज्ञानार्थं हि विचार आरम्भणीयः स्यात्तस्य च षोढाविहितपुरुषरूपत्वेन तज्ज्ञाने सत्याधानादिक्रियाद्वारा तदभिव्यक्तौ पुरुषार्थो भवतीति मन्तव्यम् । तन्न सम्भवति । विचारं विनापि षडङ्गोपेतनित्यस्वाध्यायाध्ययनबलादेवार्थज्ञानसिद्धौ न तज्ज्ञानार्थं विचार आरम्भणीयः । न चार्थज्ञानस्याऽविधेयत्वेनांशत्रयविशिष्टभावनाऽविषयत्वात्तदंशत्वेन विचारस्याऽप्राप्तत्वात्कथमविचारितैः शब्दैरर्थप्रतीतिरिति वाच्यम् । ज्ञेयश्चेति विधानात् । अनर्थज्ञस्येऽधमत्वोक्तेश्च । न च शब्दस्येन्द्रियवत्सन्दिग्धार्थप्रतिपादकत्वम् । अतीन्द्रियत्वात् । सङ्केतग्रहस्तु व्याकरणादिना लौकिकशब्देष्विव वैदिकेष्वपि गृहीतुं शक्यते । न च व्याकरणादिविरुद्धोऽर्थो विचारेण प्रतिपत्तुं शक्यः । अप्रामाणिकत्वात् । तस्मान्नार्थज्ञानार्थं विचार आरम्भणीयः ।

नतु नार्थज्ञानमात्राय विचार आरभ्यते किन्तु कर्मज्ञानाय । कर्म ह्यग्निहोत्रादिपञ्चात्मकम् । न क्रियात्वेनाऽनित्यम् । 'यज्ञो वै विष्णुरि'ति श्रुतेस्तस्य भगवद्रूपत्वे तदन्यथाज्ञाने षोढाविहिताभिव्यक्त्यभावान्नोक्तं फलं भवेत्तथा च सर्वनाश एव स्यादतो विचारेणैव सर्वोपपत्तेस्तत्कर्तव्यत्वं सिद्धमिति चेत् । न । शास्त्राणि ह्यविद्यावद्विषयाणि । आत्मनोऽविद्यावच्छिन्नत्वात् । तथा च देहात्मभावदृढप्रतीतेः सिद्धत्वेन न षडङ्गोपेताध्ययनमात्रात्पूर्वोक्तार्थस्य सिद्धिः । न केवलमर्थसिद्ध्यभावः, किन्तु यज्ञो वै विष्णुरित्यादिश्रुतीनामुपचरितार्थत्वं स्तावकत्वं वा कल्पयिष्यति । तस्माद्विचार आरम्भणीय एवेति सिद्धमिति चेत् । न । वेदार्थो ह्यलौकिको नाविद्यावद्विचारमात्रेण प्रतिपत्तुं शक्यः किन्तु तपःप्रभृतिसाधनत्रयसम्पत्तावेव । तथा च कर्म यादृशं 'यज्ञो वै विष्णुः' 'षोढा विहितः पुरुष' इत्यादि श्रुतिष्ववगतं तादृशमेव मन्तव्यम् । न दृष्टानुसारेण क्रियात्वेनाऽनित्यम् । ततोऽणुमात्रेणाप्यन्यथा कल्पने दोषः प्रसज्येत ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

विदाप्नोति परमि'त्यादिश्रुत्युक्तं फलं न फलेदिति । उपसंहरन्ति—'तस्मादि'ति । वेदार्थज्ञाने ब्रह्मज्ञाने च विचारस्याऽनुपयोगाद्वेदार्थं ब्रह्मविचारो नारम्भणीयः ।

ननु धर्मविचारवद्दोषाऽभावाद्ब्रह्मविचारोप्यारम्भणीय एवेत्यत आहुः—'अनेने'ति । वेदार्थाऽवगतौ हि विचारः प्रत्याक्षिप्त इत्यविशेषाद्ब्रह्मविचाराऽऽक्षेपेण धर्मविचारोप्याक्षिप्त एवेति ज्ञातव्यम् । तत्राप्युक्तदूषणयुक्तीनां सत्वात् । ननु सर्वोपयोगित्वाद्धर्मस्य तद्विचारो नाऽऽक्षेप्तुमर्ह इत्यत आहुः—'न ही'ति । ब्रह्मविचारनिराकर्तुर्धर्मविचाराऽऽक्षेपो नाऽतिगरीयानिति केवलवैदिकानां पूर्वपक्षः ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

क्षिप्त एवे'ति । अनेन साङ्गवेदाध्ययनादेवार्थज्ञानं भविष्यतीति प्रतिपादनेन धर्मविचारः पूर्वकाण्डसिद्धस्य धर्मस्य जिज्ञासाप्याक्षिप्तैव । न कर्तव्यैवेत्युक्तमित्यर्थः । ननु धर्मविचाराऽऽक्षेपो दुष्करोऽपूर्ववादिनां प्रबलत्वादित्याशङ्क्याऽऽह—'न ह्येतन्निराकर्तुरि'त्यादि । एतस्य ब्रह्मविचारस्य निराकर्तुः

१. तत्तदन्यथेति क-पुस्तकम् ।

सिद्धान्तस्तु—

सन्देहवारकं शास्त्रं बुद्धिदोषात्तदुद्भवः ।
विरुद्धशास्त्रसम्भेदादङ्गैश्चाऽशक्यनिश्चयः ॥

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या ।

ननु यथा 'यज्ञो वै विष्णु'रित्यादिवाक्यैर्यज्ञानां भगवत्त्वं प्रतीयते तथा यजेतेत्यादिभिः क्रियारूपत्वमप्यवगम्यत इति तन्निर्णयार्थं विचार इति चेत् । न । उभयोरपि प्रामाणिकत्वेनैकतरनिर्द्धारस्याऽशक्यत्वात् । अचिन्त्यानन्तशक्तिमति सर्वभवनसमर्थे भगवति सर्वोपपत्तेर्विरोधाऽनवकाशाच्च । अत एव कर्मस्वरूपाज्ञानेऽन्यथाज्ञाने च तपःप्रभृतीनामेवोपदेशः । न च तपःशब्देन विचारः । तस्य पूर्वस्मादविशिष्टत्वात् । न चाग्निहोत्राद्युपाख्यानानां मिथ्यात्वम् । तथा सति सर्वत्रैवाऽनाश्वासप्रसङ्गोऽविशेषात् । न ह्यप्रामाणिकोक्ते विधाद्युपाख्याने कर्मस्वरूपे वा कस्यचिदपि विश्वासो भवति । यथा लोके । तस्माद्वेदस्य सर्वस्याप्यलौकिकत्वेनोत्तमाधिकारिणां वैदिकानां सन्देह एव नोदेति । किं पुनर्विरुद्धार्थकल्पना । किञ्च । यदि वेदार्थज्ञाने विचारस्याऽङ्गत्वेनोपयोगः स्यात्तदा व्याकरणवद्विद्यासु श्रवणं स्यात् । स्वातन्त्र्ये तु पुराणादिवन्मीमांसाया अपि प्रकारभेदेन प्रतिपादकत्वं स्यात् । तथा च 'एव विद्वानि'त्याद्युक्तज्ञानानन्तरभाविफलाभावप्रसङ्गः स्यात् । तस्माद्धर्मविचारोऽपि कर्तव्य इत्याक्षिप्ते धर्मविचारे, न तन्न्यायेन ब्रह्मविचारस्य कर्तव्यत्वं सिद्ध्यतीति सिद्धम् । नन्वाक्षिप्तेऽपि ब्रह्मविचारे तन्न्यायेन किमर्थं धर्मविचार आक्षिप्यते । न हि धर्मविचारो न कर्तव्य इत्याक्षेपो युज्यत इत्याशङ्क्याह—'न ह्येतन्निराकर्तुरि'ति । ब्रह्मविचारनिराकर्तुर्धर्मविचाराक्षेपो न भाररूपस्ततोऽपि गरिष्ठस्य ब्रह्मविचारस्याक्षिप्तत्वादिति भावः ।

एवं स्थिते पूर्वपक्षेऽत्र सिद्धान्ती मुख्यं सिद्धान्तमाह—सिद्धान्तस्त्वित्यति । न हि वेदार्थज्ञानाय ब्रह्मज्ञानाय वा विचार आरभ्यते येन पूर्वोक्तन्यायेन सूत्रकारः पर्यनुयोक्तव्यः स्यात् । न चैवम् । सन्देहनिरासार्थत्वात्तस्य । शास्त्रं हि शासतेऽनेनेति व्युत्पत्त्या सन्देहवारकम् । यद्यप्यनेकजन्मसञ्चितसुकृतराशेर्भगवदनुग्रहभाजनस्य प्राज्ञस्य कस्यचिन्मुख्याधिकारिणो वेदार्थे संशय एव नोदेति । तस्य परम्परया साङ्गस्वाध्यायाऽध्ययनपूर्वकं गुरुमुखादर्थश्रवणेनैव निर्विचिकित्सार्थावगतेः सुलभत्वात् । तथापि मन्दमध्यमयोस्तु परम्परया पाठवदर्थस्यापि गुरुमुखादेव श्रवणेऽपि सन्देहो भवेदेव । बुद्धिदोषाणां

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

घटानयनं करोति, न तु पटानयनमेव वेदेऽपि सन्देहो न भविष्यतीत्यत आहुः—'बुद्धी'ति । बुद्धिदोषादनेकशास्त्रेषु बुद्धिप्रसरात् । नन्वङ्गैर्निर्णयो भविष्यतीत्यत आहुः—'विरुद्धे'ति । न्यायमीमांसादिमेलनात् ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

एवंस्थिते पूर्वपक्षे मुख्यसिद्धान्तं संगृह्णन्ति—'सिद्धान्तस्त्व'ति । तुशब्दः पूर्वशङ्कानिरासे । 'सन्देहे'ति । आरभ्यमाणं खलु वेदान्तमीमांसाशास्त्रं न ब्रह्मवेदार्थज्ञानप्रयोजनमपि तु वेदार्थसन्देहनिरासैकप्रयोजनम् । ननु गुरुमुखादेवाऽवगतार्थानि वेदान्तवाक्यानि सन्देहमेव कथमादध्युरित्यत्राऽऽहुः—'बुद्धी'ति । ननु पाणिनीयादीन्यङ्गानि वेदवेदार्थरक्षैकप्रयोजनानीति सन्देहं पराभाव्य कुतो नाऽर्थं निश्चीययेन्नित्यत आहु—'विरुद्धे'ति । विरुद्धशास्त्राणि काणादाऽऽक्षपादीयमायावाद-

भगवदीयश्रीमद्विच्छारामप्रणीत प्रदीप ।

शास्त्रं मीमांसारूपं शास्त्रम् । बुद्धिदोषात् अवैदिकशास्त्रसिद्धान्तावगाहित्वरूपबुद्धिदोषात् । त-

तस्मात्सूत्रानुसारेण कर्तव्यः सर्वनिर्णयः।
अन्यथा भ्रश्यते स्वार्थान्मध्यमश्च तथाऽऽदिमः॥

परम्परया पाठवदर्थस्यापि गुरुमुखादेव श्रवणेऽपि मन्दमध्यमयोः सन्देहो भवेत्।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

भ्रमप्रमादादीनां भगवदनुग्रहाद्यभावेन तत्र सम्भवात्। ननु मन्दमध्यमयोरपि मुख्याधिकारिण इव निर्विचिकित्सार्थावगतिरस्तु किं शास्त्रेणेत्याशङ्क्याऽऽह–'**विरुद्धशास्त्रसम्भेदादि**'ति। शास्त्राणि हि काणादन्यायमायावादादिरूपाणि परस्परविरुद्धानि। तेषां बुद्धौ सम्पर्कान्न व्याकरणाद्यङ्गैरप्यर्थनिर्णयो भवति। प्रत्युत तेषां परस्परविरुद्धत्वात्समानयोगक्षेमत्वेन विनिगमनाभावाद्दृढतर एव संशयो भवेत्कुतस्तरां तन्निवृत्तिः। तथा च सर्वज्ञः सूत्रकारस्त्रिविधानामप्यधिकारिणाममृतत्वप्राप्तिसिद्ध्यर्थं तत्साधनत्वेनाऽवगताऽऽत्मज्ञानफलकश्रवणाद्युपायभूतां ब्रह्मजिज्ञासां प्रथमसूत्रे प्रतिज्ञातवानिति त्रिविधानामपि तेषां सूत्रानुसारेणैव बुद्धिदोषजन्यसंशयनिवृत्त्यर्थं सर्वेषां वेदान्तवाक्यानां निर्णय उचित इति सिद्धम्। अन्यथा विरुद्धशास्त्रानुरोधेनैव तस्मिन्कृते यथार्थज्ञानाऽसम्भवात्स्वार्थादमृतत्वप्राप्तेर्भ्रश्येत मध्यमस्तथादिमो मन्दश्च। ननु विरुद्धशास्त्रसम्भेदादङ्गैः सन्देहनिवृत्त्यभावेऽपि परम्परया गुरुमुखादर्थश्रवणेन तन्निवृत्तिः कथं न स्यादित्याशङ्कायामाह–'**परम्परये**'ति। यथा '**देवासः कर्णेभिरि**'त्यादौ एतादृशा एव शब्दास्तत्र तत्र प्रयोक्तव्या अन्यथा वेत्याकारकः संशयस्तु न भवेदेव। परम्परया तत्प्रकारकस्यैव पाठस्य तत्र निश्चितत्वात्। अर्थश्रवणे तु न तथा। कथमित्याकाङ्क्षायामाह–

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

'**निर्णय**' इति। पूर्वोत्तरकाण्डार्थनिर्णय इत्यर्थः। मध्यमः किञ्चिद्बुद्धिमान्। तदादिमः मन्द इत्यर्थः।

केश्चिद्विरचिता वेदान्तचन्द्रिका।

प्रभृतीनि। तेषां सम्भेदः सम्पर्कः। तस्मात् अङ्गैः पाणिनीयादिभिः कर्तुमशक्यो निश्चयो यस्य। एतादृशो वेदार्थो जात इति शेषः। '**तस्मादि**'ति। अङ्गैरशक्यार्थनिश्चयत्वाद्वेदस्य। '**सूत्रे**'ति। '**अथातो जिज्ञासे**'त्यादि ब्रह्ममीमांसासूत्रानुसारेण सर्ववेदान्तनिर्णयः कर्तव्यः।

अत्रेदं ज्ञेयम्। मन्दाद्यधिकारिणां वेदविरुद्धशास्त्राऽवलोकनजनितबुद्धिभ्रंशमालोक्य महाकारुणिकः सर्वज्ञोऽपि भगवान्वेदव्यासस्तेषां वेदार्थनिर्णयप्रकारशिक्षणार्थममृतत्वप्राप्तये तत्साधनत्वेनाऽवगताऽऽत्मज्ञानफलकश्रवणादेः साधनीभूत'**मथातो ब्रह्मजिज्ञासे**'त्यादिसूत्रसमुदायात्मकं ब्रह्ममीमांसाशास्त्रं प्रणीतवानिति तादृशाधिकारिणः प्रत्येवेदं वचनमिति स्वस्य शास्त्रकरणे प्रयोजनाऽभावात्। शास्त्रपदव्युत्पत्त्या तथैवार्थसिद्धेश्च। तस्मान्न कोऽपि शङ्काऽवकाशः। अतोऽर्थनिर्णयार्थं ब्रह्मसूत्राण्येवानुसर्तव्यानि। अननुसृत्य तु सूत्राणि पूर्वमीमांसापर्यनुयोगेऽपीयमेव समाधिसरणिरवसेया। स्वयमेव निर्णयार्थं प्रवृत्तः स्वार्थाद्भ्रश्येतेत्याहुः—'**अन्यथे**'ति। **आदिमो** मन्दः। अनवस्थितपदार्थप्रतिपादकप्रक्रियाऽज्ञः। ननु स्वबुद्ध्याऽशास्त्यनिश्चयत्वेऽपि गुरुमुखश्रुतार्थाऽनुसन्धानेनैव सोऽवसेय इत्यत

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

दुर्ज्ञयः सन्देहोद्भवः। **सम्भेदात्** पदार्थनिर्णये साङ्कर्यात्। **सर्वनिर्णयः** साधनफलाधिकारिसम्बन्धेत्यनुबन्धचतुष्टयादिनिर्णयः। **अन्यथा** सूत्रानुसारिविचाराऽकरणेन। **मध्यमः** मध्यमाधिकारी। आ-

---

१—तदादिम इति विवरण पाठः।

समानधर्मदर्शनात्। पदादिपाठवत् । तत्र यथा लक्षणानामुपयोग एवमेव मीमांसाया अपि ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

'**समानधर्मदर्शनादि**'ति । धर्माः पदानामाकाङ्क्षादयस्तेषां तत्तच्छाखानुरोधिष्वर्थेषु साम्यदर्शनादिनिगमकाभावेनैकतरनिश्चयस्याऽशक्यत्वात् । अत्र दृष्टान्तमाह–'**पदादिपाठवदि**'ति । परम्परया '**देवायते यजमानाय शीकायते स्वाहे**'त्यादि संहितापाठे संदेहाऽभावेऽपि पदादिकाले '**देयायत इति देवयते यजमानाय शीकायत इति शीकयते स्वाहे**'ति ह्रस्वश्रुतौ सन्देहे '**अथादावुत्तरे विभागे ह्रस्वव्यञ्जनपर**' इत्यादीनां, यथा वा '**सीसं च मे त्रपुश्च मे**' '**सत्यधर्मा मिथुश्चरन्तं**' '**सुश्चन्द्र दम**' इत्यादौ पदकाले त्रपुं चमे मिथु चरन्तं सुचन्द्र दमेत्यादौ सन्देहे '**त्रपुमिथुपूर्वः शकारश्चकारः सुपूर्वश्च चन्द्रपर**' इत्यादीनां, यथा वा 'उत स्यानासो

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

कारिकार्थमाहुः–'**परम्परये**'ति । '**समाने**'ति । साधारणधर्मदर्शनादित्यर्थः । '**यथा लक्षणानामि**'ति । प्रातिशाख्यादीनामित्यर्थः । तत्र हि वेदे तैत्तिरीयशाखायां तृतीयाष्टके पठ्यते '**देवायते यजमानाय शर्मे**'ति संहितायां वकारो दीर्घः पठ्यते । पदपाठकाले '**देवयत**' इत्यत्र वकारो ह्रस्वः पठ्यते । अत्र सन्देहे प्रातिशाख्यसूत्रं '**अथादावुत्तरे विभागे ह्रस्वव्यञ्जनपर**' इत्यधिकारसूत्रम् । अत्र भाष्यम् । आदौ पदादौ उत्तरे पदान्ते च वर्तमानसंहितायां यो दीर्घोऽसौ पदविभागे पदसमये व्यञ्जनपरः सन् ह्रस्वत्वमापद्यते । व्यञ्जनपरत्वं यथासंहितत्वं ज्ञेयम् । व्यञ्जनमस्मात्परमिति व्यञ्जनपर इति । अपरमुदाहरणसूत्रं **देवाशीकासुम्नाश्वत्तावच्छुना हृदयाकाशाद्या**' । अत्र भाष्यम् । देवाशीकेत्यादिषु ग्रहणे अवग्रहेषु अन्त्यस्वरो विभागे ह्रस्वत्वमापद्यते । यथा **देवायते यजमानाय शीकायते स्वाहे**ति संहितायाम् । पदपाठे तु **देवयते शीकयते स्वाहे**ति । इदं

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

आहुः—'**परम्परये**'ति । तत्र हेतुः–'**समाने**'ति । यथा गौरनुबन्ध्य इत्यादौ गोपदार्थे, गच्छतीति गौरिति गमनकर्तृत्वरूपधर्मस्याऽत्रापि साम्यात्सन्देहः । यथा '**अक्ताः शर्करा उपदधाती**'त्यत्राऽञ्जनकरणत्वस्य घृततैलवसादिषु समानत्वात्सन्देहः । अथवा धर्मा आकाङ्क्षादयः । तेषां तत्तच्छाखा-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

पूर्वकाण्डविचारनिराकरणमतिभारो दुर्निर्वाहो नास्तीत्यर्थः । '**समानधर्मदर्शनादि**'ति । पदानां धर्मा आकाङ्क्षादयस्तेषां तच्छाखानुसारिष्वर्थेषु समानतादर्शनात् । विनिगमकाऽभावेनैकतरनिश्चयस्याऽशक्यत्वात् । दृष्टान्तमाहुः–'**पदादिपाठवदि**'ति । संहितापाठाऽवसरे परम्परयैव '**देवायते यज-**

भगवदीयश्रीमद्विच्छारामप्रणीत प्रदीप ।

**दिमः** हीनाधिकारी । **सन्देहो भवेत्** वेदार्थे च सन्देहो भवेत् । **समानधर्मदर्शनात्** पाठे परम्परारूपसमानधर्मदर्शनात् । अर्थे तु 'अक्ताः-शर्करा-उपदधाती' त्यत्र-घृततैलवसास्वञ्जनसाधनत्वरूपसमानधर्मदर्शनादिति बोध्यम् । **पदादिपाठवदिति** । तथाहि 'देवायते यजमानाय शीकायते

---

१–इत आरभ्य स्वाहेति पर्यन्त पाठो नास्ति क्पुस्तके ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

दिविषन्तु' 'आपो हि ष्ठा मयोभुवः' 'शुचिषद्वसुरि'त्यादौ पदकाले, उत स्वानासः दिवि सन्तु । आपः हि स्थाः । शुचिषदिति शुचिसदित्यादौ सन्देहे स्वानासो दिव्यापो ह्ययमित्यादीनां प्रातिशाख्योक्तानां लक्षणानां ज्ञापकानां सूत्राणां सन्देहनिवृत्तावुपयोग एवं बुद्धिदोषजन्यसन्देहवारणे मीमांसाया अपीति सिद्धम् ।

ननु मन्दमध्यमान्प्रति मीमांसायाः सफलत्वेऽप्युत्तमान्प्रति कथं सफलत्वमित्याशङ्कायां तत्रापि सफलत्वमस्तीति ग्रन्थान्तरे स्पष्टतरमेव मयोक्तमित्याह—'तदुक्तमि'ति । श्रीभागवततत्त्वार्थदीप इति

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

सप्तमाष्टके । एवं सुम्नायन्तो हवामह इत्यादिषु लक्षणानां यथोपयोगस्तथा मीमांसाया अपि । यथा आकाशपदस्य भूताकाशपरत्वं वा चिदाकाशपरत्वं वेति सन्देहे 'आकाशस्तल्लिङ्गादि'ति सूत्राच्चिदाकाशपरत्वं निर्णीयते । यथा वा विरुद्धवाक्यैः कर्तृत्वकर्तृत्वाऽभावसमानाधिकरणं ब्रह्मत्वम् । ब्रह्मेति शाब्दबोधानन्तरं कर्तृत्वाऽकर्तृत्वविषयकसन्देहे, सर्वभवनसमर्थे ब्रह्मणि विरोधाऽभावप्रतिपादनेन

केशवकाश्मीरिभट्टविरचिता वेदान्तचन्द्रिका ।

तुरोधिष्वर्थेषु साम्यदर्शनाद्विनिगमकाऽभावेनैकतरनिश्चयस्य कर्तुमशक्यत्वात्सन्देहोत्पत्तौ दृष्टान्तः । 'पदादी'ति । संहितापाठकाले 'देवायते यजमानाय शीकायते स्वाहेत्या'दौ सन्देहाऽभावेऽपि पदपाठकाले तु देवयते शीकयते इति ह्रस्वश्रुतौ सन्देहः । 'तत्रे'ति पदपाठकालीनह्रस्वश्रुत्या ह्रस्वसन्देहे, 'अथादावुत्तरे विभागे ह्रस्वव्यञ्जनपर' इत्यादिलक्षणानां प्रातिशाख्यसूत्राणामुपयोग एवमेव ब्रह्ममीमांसाया अपि जगत्कारणत्वेऽपि ब्रह्मण उपादानत्वमप्युत निमित्तमात्रत्वमिति । एव'माकाशादेव समुत्पद्यन्त' इत्यत्र भूताकाश आकाशशब्दवाच्य उत ब्रह्मेत्यादि सन्देहे तदपाक-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

मानाय शीकायते स्वाहे'त्यादौ संदेहाभावेऽपि पदादिकाले देवायते इति देवयते यजमानाय शीकायत इति शीकयते स्वाहेति ह्रस्वश्रवणात्सन्देहे, अथादावुत्तरे विभागे ह्रस्वव्यञ्जनपर इत्यादीनामुपयोगः । यथा वा सीसं च मे त्रपुश्च मे सत्यधर्मा मिथुश्चरन्तं सुश्चन्द्र दस्म इत्यादौ पदकाले त्रपु च मे मिथुचरन्तं सुचन्द्र दस्मेत्यादौ सन्देहे त्रपुमिथुपूर्वः शकारश्चकारः सुपूर्वश्चन्द्रपर इत्यादीनामुपयोगः । यथा वा उत स्वानासो दिविषन्तु आपो हिष्ठामयो भुवः शुचिषद्वसुरि'त्यादौ पदकाले उत स्वानासः दिवि सन्तु । आपः हि स्थाः । शुचि सदिति । शुचिसदित्यादौ सन्देहे, स्वानासो दिव्यापो ह्ययमि'त्यादीनां प्रातिशाख्योक्तानां लक्षणानां ज्ञापकानां

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

स्वाहा' इति संहितापरम्परापाठः । 'देवयते शीकयते' इति पदपरम्परापाठः । एवमत्र ह्रस्वत्वदीर्घत्वयोर्यथा सन्देहस्तथोपनिषत्स्वपि 'अपाणिपादो जवनो ग्रहीते' त्यादिविरुद्धधर्मदर्शनस्थले ब्रह्मसम्बन्धित्वरूपसमानधर्मदर्शनादेवंविधमेवविधं वा ब्रह्मेति सन्देहो भवेत् । तत्र संहितापदपाठनिश्चयस्थले केनाक्ताः शर्करा इत्यत्र च । लक्षणानां शाखाव्याकरणादीनां जैमिनिसूत्राणां चेत्यर्थः । एवमेव व्याकरणादिप्रकारेण जैमिनिमीमांसाप्रकारेण चेत्यर्थः । मीमांसायाः व्यासमीमांसायाः सूत्रात्मकवि-

तदुक्तम् ।

असन्दिग्धेऽपि वेदार्थे स्थूणाखननवन्मतः ।
मीमांसानिर्णयः प्राज्ञे दुर्बुद्धेस्तु ततो द्वयमिति ॥

तथा च निर्णये येनकेनचिद्वक्तव्ये हरिः स्वयं व्यासो विचारं चिकीर्षुस्तत्कर्तव्यतां बोधयति ब्रह्मजिज्ञासा कर्तव्येति । व्यासोक्तत्वादपि कर्तव्यता ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

शेषः । एतदर्थस्तु । प्राज्ञे मुख्याधिकारिणि । असन्दिग्धेऽपि वेदार्थे मीमांसानिर्णयो दार्ढ्यमापादयतीतीमं प्रतीदमेवैकं प्रयोजनम् । तत्र लौकिको दृष्टान्तः । '**स्थूणाखननवदि**'ति । यथा स्थूणा निखातापि तद्दार्ढ्याय पुनरुद्धृत्य निखात्यते तद्वदित्यर्थः । दुर्बुद्धेर्मन्दस्य मध्यमस्य च सन्देहाभावो दार्ढ्यं चेति प्रयोजनद्वयमित्यर्थः । ननु सन्देहनिवारणार्थं निर्णयस्याऽऽवश्यकत्वे व्यासव्यतिरिक्तेन येनकेनचिदृषिणा कथं न कृत इत्याशङ्क्याऽऽह—'**तथा चे**'ति । यद्यप्यन्ये ऋषयो महान्तोऽलौकिकद्रष्टारस्तैरपि

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

निर्णय इत्यर्थः । अस्मिन्नर्थे सम्मतिं दर्शयन्ति—'**तदुक्तमि**'ति । '**असन्दिग्धेऽपी**'ति । इदं वाक्यं श्रीमदाचार्यचरणैः सर्वनिर्णयनिबन्ध उक्तम् । टीकायां च व्याख्यातं तैरेव । पाठदशायां यद्यपि न सन्देहस्तथापि कालान्तरे सन्देहो भविष्यतीति लक्षणकरणवन्मीमांसाकरणम् । तत्र लौकिको दृष्टान्तः । **स्थूणाखननवदि**ति । स्थूणा निखातापि पुनरुद्धृत्य निखात्यते, तथा निस्सन्दिग्धोऽपि सन्देहमापाद्य दार्ढ्याय निरूप्यते मीमांसानिर्णयकारैः । इदमुत्तमं प्रति तेषां प्रयोजनं सफलं भवति । मन्दमध्यमान्प्रति तु द्वयमिति । सन्देहाभावो दार्ढ्यं च । सूत्रार्थमाहुः—'**तथा**' चेति । विचारस्याऽऽवश्यकत्वे चेत्यर्थः ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

रणायोपयोगः । अत्र प्राचां संमतिमाहुः—'**तदुक्तमि**'ति । '**असन्दिग्ध**' इति । प्राज्ञे स्थूणाखननवदर्थज्ञानदार्ढ्यहेतुः । दुर्बुद्धेर्मन्दादेः सन्देहनिवृत्तिरेकतरार्थनिश्चयश्चेति फलद्वयमित्यर्थः । एतेन शास्त्रारम्भसमर्थनाङ्गतया शास्त्रप्रयोजनमुक्तम् । विचारकर्तव्यतासमर्थनेनाऽधिकरणसङ्गतिरुपोद्घातरूपा सूचिता । अतः परमेतदधिकरणस्य शास्त्रप्रतिपाद्यार्थसंबन्धित्वरूपशास्त्रसङ्गतिं बोधयन्ति । एवं **सूत्रं** व्याकुर्वन्तः प्रथमतो वाक्यार्थमाहुः—'**तथा चे**'ति निर्णयस्य कर्तव्यत्वे सिद्धेऽन्येषामृषीणां सार्वज्ञ्या-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

सूत्राणां सन्देहनिवृत्तावुपयोगः । एवं बुद्धिदोषहेतुकसन्देहनिवृत्तौ ब्रह्मविचारस्याप्युपयोगः । तत्र यथा लक्षणानामुपयोग एवमेव मीमांसाया अपि । '**असन्दिग्धेऽपि वेदार्थे**' इत्यादि । मीमांसानिर्णयः प्राज्ञ उत्तमाधिकारिणि स्थूणाखननवन्मतः दार्ढ्यार्थं मतः । दुर्बुद्धेर्मध्यमस्य मन्दस्य च द्वयं सन्देहाभावो दार्ढ्यं चेति प्रयोजनद्वयमित्यर्थः । ततो नाम मीमांसानिर्णयाद्द्वयं भवतीत्यर्थः ।

तथा च पदादिपाठवत्सन्देहनिवारण उपयोगादुत्तमाधिकारिणः सन्देहाभावेऽपि दार्ढ्यार्थमुप-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

चाररूपायाः । तदुक्तं वेदान्तार्थसन्देहनिराकरणहेतुत्वमुक्तम् । **मतः** इति प्राज्ञेऽन्वेति । **मीमांसानिर्णयः** व्याससूत्रात्मको निर्णयसम्पादकः शब्दसमुदायः । **दुर्बुद्धेः** हीनाधिकारिणो मध्यमाधिकारिणश्च । **ततः** व्यासमीमांसातः । **द्वयं** वेदान्तार्थे सन्देहनिवृत्तिः वेदान्तार्थनिश्चयश्चेत्यर्थः ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

कृते निर्णये यथाकथञ्चित्तदनुसारेण श्रवणसिद्धावपि न तेन श्रौतामृतत्वप्राप्तिस्तेषामृषित्वेनालौकिकदृष्टत्वेऽप्यसार्वज्ञात्तत्कृतेन निर्णयेनोपनिषद्रहस्यस्याऽप्रत्ययात्तज्जन्यज्ञानस्योपनिषदुक्तब्रह्मज्ञानत्वाऽसम्भवेनाश्रौतामृतत्वप्राप्त्यभावजदुःखनिवृत्त्यभावात्कृतमपि श्रवणाद्यकृतमेव भवेदतः सर्वज्ञकृतस्यैव निर्णयस्य सन्देहनिवृत्तिद्वारा श्रौतामृतत्वप्राप्तिसाधनीभूतात्मज्ञानसम्पादकत्वम् । तथा च 'यः सर्वज्ञ' इति श्रुतेर्भगवदतिरिक्ते सार्वज्ञाभावात्स्वस्वरूप स्वप्रकाशितमेव सर्वेषां प्रकाशित भवतीति भगवानेव स्वय विचारं चिकीर्षुर्व्यासरूपेणाऽवतीर्य नामरूपभगवद्विस्तारत्वात्तत्वेनैव प्रसिद्धः स्वकीय सर्वदुःखहर्तृत्वं श्रौतश्रवणादिसिद्ध्युत्तरकालीनाऽमृतत्वप्राप्त्या सर्वेष्वधिकारिषु प्रकटीकरिष्यन् प्रथमसूत्रेण विचारस्य प्रथमत. स्वस्य, ततोऽन्येषां च कर्तव्यतां बोधयति—'**ब्रह्मजिज्ञासा कर्तव्ये**'ति ।

ननु ब्रह्मजिज्ञासायाः स्वार्थमेव कर्तव्यत्वं बोधयतु, न परार्थम् । तत्कर्तव्यत्वस्य '**यद्यदाचरती**'ति न्यायेन स्वत एव सिद्धेस्तदुक्तिर्व्यर्था स्यादित्याशङ्क्याऽऽह—'**व्यासोक्तत्वादपी**'ति ।

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

इद महत्कार्यं केन कर्तव्यमित्याकाङ्क्षायामाहुः—'**हरिरि**'ति । '**व्यासोक्तत्वादि**'ति । जैमिन्युक्तधर्मविचार इवेत्यपिकारार्थः । ननु सूत्रे कर्तव्यपद नास्ति, दोषादध्याहारः कर्तुं न शक्यत इत्याकाङ्क्षायामाहुः—

केनचिद्विरचिता वेदान्तचन्द्रिका ।

भावमालोच्य व्यासरूपेणाऽवतीर्णः स्वयमेव हरिर्वेदान्तविचार चिकीर्षुर्वेदान्तविचारकर्तव्यतां बोधयति—'**ब्रह्मजिज्ञासा कर्तव्ये**'ति । ननु ब्रह्मविचारस्य कर्तव्यत्वे सिद्धे कथ वेदान्तविचारकर्तव्यतासिद्धिरिति चेत् । ब्रह्मण इति शेषषष्ठ्यैव ब्रह्मज्ञानोपयोगिवेदान्तविचारस्य कर्तव्यतासिद्धिरित्यवेहि । विचारं ब्रह्मविचारम् । तत्कर्तव्यतां ब्रह्मविचारकर्तव्यतामिति वार्थ. । ब्रह्मविचारस्य वेदान्तविचारेणैव कर्तव्यत्वात् । ननु सन्देहनिवारणैकप्रयोजनाया मीमांसायाः सन्देहरहितान्प्रति तु कर्तव्यता न स्यादित्याशङ्क्याऽऽहुः—'**व्यासे**'ति । अपिशब्द. सन्देहनिरासाय न्यायप्राप्तकर्तव्यतासमुच्चायकः । तथा च संशयनिवृत्त्यर्थं मन्दाद्यधिकारिकर्तव्यता । व्यासोक्तत्वात्तु दार्ढ्यार्थं प्राज्ञकर्तव्यतेत्यर्थः । ननु कर्तव्यपदम-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

योगात् । मन्दमध्यमयो. सन्देहनिवृत्तिदार्ढ्ययोरुपयोगाद्ब्रह्मजिज्ञासा कर्तव्येत्यर्थः । अनेन ब्रह्मजिज्ञासाया युक्तत्व बोधितम् । '**ब्रह्मजिज्ञासा कर्तव्ये**'ति । कर्तव्यपदमध्याहार्यमित्यर्थः । '**व्यासोक्तत्वादपि कर्तव्यते**'ति । यद्यपि पूर्वोक्तरीत्या युक्तत्वात्कर्तव्यता सिद्धा तथापि व्यासवाक्यस्य परमप्रमाणत्वाद्वैधत्वमपि ब्रह्मजिज्ञासायाः सिद्धमतोऽपि सर्वैः कर्तव्येत्यर्थः । तथा च पूर्वत्र युगेषु तप-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

**निर्णये** वेदान्तार्थनिर्णये । **तत्कर्तव्यतां** विचारकर्तव्यताम् । **कर्तव्यता** निर्णीतवेदान्तार्थस्यापि सन्ध्यावन्दनवद्विचारकर्तव्यताऽऽवश्यकीत्यर्थः । एतेनाग्रे कर्तव्यवेदान्तविचारे प्रथमाधिकरणस्योपोद्घातसङ्गतिः प्रदर्शिता । हरिपदोपादानेन च तपःप्रभृतिसाधनानां कालाभावादेतद्विचारादेवोद्धारोऽपि सूचितः ।

---

१ विस्तारत्वेनैवेति खपुस्तकम् । २ स्वमिति कपुस्तकम् ।

कर्तव्यपदाध्याहारे स्वातन्त्र्यं न भवति । अन्यथा 'अथ योगानुशासन'मितिवत्स्व-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

यद्यपि पूर्वोक्तन्यायेन तत्कृतेः स्वतः सिद्धत्वं, तथापि कदाचिद्ब्रह्मजिज्ञासातिरिक्तयोगादिजिज्ञासाया अपि तत्फलसाधकत्वभ्रमेण पक्षे कर्तव्यत्वं स्यादिति 'पाक्षिकोऽपि दोषः परिहरणीय' इति न्यायेन तस्मिन्नपि पक्षे तस्या एव कर्तव्यत्वं नान्यस्या इति नियमविधिरेवात्र परार्थकर्तव्यत्वबोधनेन प्रतिपाद्यत इति, न तदुक्तिर्व्यर्थेति । अत एवापीतिशब्द उक्तः । ननु सूत्रे कर्तव्यपदाभावात्कथं नियमविधिः । अध्याहृतेन कर्तव्यपदेनेति चेदध्याहारे किं विनिगमकमित्याकाङ्क्षायामाह–'**कर्तव्यपदाध्याहार**' इति ।अध्याहृते च कर्तव्यपदे जिज्ञासायास्तत्समभिव्याहाराद्विधेयत्वेनेष्टसाधनत्वाऽवगतौ तत्किमित्याकाङ्क्षायां '**आत्मनस्तु कामाय सर्वं प्रियं भवती**'त्यादिभिरात्मन एव सर्वापेक्षयाभ्यर्हितत्वेन तत्प्राप्तेरेवेष्टत्वं निश्चिनोति । तथा च तस्याः साक्षात्तदिष्टसाधनत्वस्य '**नान्यः पन्था विद्यतेऽयनाये**'त्यादिना बाधितत्वात्तत्साधनीभूतवेदान्तवाक्यश्रवणाद्यनुकूलविचाररूपत्वेन शब्दशेषत्वात्स्वातन्त्र्यं न भवेत् । तथा च कर्तव्यपदाध्याहारस्यावश्यकत्वमिति भावः । विपक्षे बाधकमाहुः–'**अन्यथे**'ति । कर्तव्यपदाध्याहाराभावे जिज्ञासायाः वेदान्तवाक्यान्तर्गतशब्दशेषत्वाभावेन श्रवणादिस्वरूपसिद्ध्यतिरिक्तफलसाधकत्वे स्वातन्त्र्यं भवेदित्यर्थः । तत्र दृष्टान्तमाह—'**अथ योगे**'ति । यथा 'अथ योगानुशासनमि'त्यादौ योगानुशासनस्य वेदान्तश्रवणातिरिक्तातीन्द्रियादिसर्वविषयकज्ञानादिसाध-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

'**कर्तव्यपदे**'त्यादि '**भवेदि**'त्यन्तम् । अयं भावः—कर्तव्यपदाध्याहारे तव्यप्रत्ययस्य विधित्वादिष्टसाधनताबोधकत्वं । इदं चौपनिषदं पुरुषं पृच्छामीत्युपनिषत्प्रतिपाद्यं ब्रह्मज्ञानम् । तत्तु मीमांसाप्रतिपाद्यं न भवतीति परम्परया साधनत्वं मीमांसायाः । अस्वातन्त्र्यं गुणः । स्वातन्त्र्ये च चित्तवृत्तिनिरोधबोधकयोगवद्ब्रह्मान्यबोधकत्वाद्दोषः । एतत्परिहारार्थमेव कर्तव्यपदाध्याहारः । अस्मिन्पक्षे वक्ष्य-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

ध्याहृत्य व्याख्याने को हेतुः सदोषत्वाद्ध्याहारपक्षस्येत्यत आह—'**कर्तव्ये**'ति । अत्राऽयमाशयः । अध्याहृते च कर्तव्यपदे जिज्ञासायाः कर्तव्यपदसमभिव्याहाराद्विधेयत्वेनेष्टसाधनत्वेऽवगते, तत्किमितीष्टविशेषाकाङ्क्षायामौपनिषदपुरुषज्ञानमेव साध्यत्वेनान्वेति । तच्च विचारोपकृतैरुपनिषद्वाक्यैरेवेति वेदान्तवाक्यश्रवणाद्यनुकूलविचाररूपत्वान्मीमांसायास्तच्छेषत्वं सिध्यति । न तु वेदान्तवाक्यानपेक्षत्वरूपं स्वातन्त्र्यमिति । विपक्षे सदृष्टान्तं बाधकमाहुः—'**अन्यथे**'ति । अध्याहाराऽभावे स्वतन्त्रता स्यात् । तत्र दृष्टान्तमाहुः—'**अथ योगे**'ति । योगशास्त्रं हि न वेदान्तश्रवणाऽनुकूलम् । किन्त्वतीन्द्रियादि-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

आदीनां साधनानां सुकरत्वेन तैर्ब्रह्मबोधसिद्धेरधुना कलौ तु तपआदीनामभावात्तत्केवलं व्यासविरचितब्रह्मजिज्ञासयैव ब्रह्मबोधसिद्धिरिति भावः । ननु कर्तव्यपदाध्याहारस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः–'**कर्तव्यपदाध्याहारे स्वातन्त्र्यं न भवती**'ति। अध्याहृतकर्तव्यपदसमभिव्याहारा-

भगवदीयश्रीमदिच्छाराममणीतः प्रदीपः ।

यथाश्रुतसूत्राद्विचारकर्तव्यता न प्रतीयत इति केषांचिदभिप्रेतं सूत्रे कर्तव्यपदाध्याहारमुपपादयन्ति–'**कर्तव्यपदे**'त्यादिना । स्वातन्त्र्यं न भवतीति । तथा चाध्याहारदोषसत्त्वेऽपि विध्यर्थकर्त-

तन्त्रता स्यात् । तथा च ज्ञानानुपयोगः । तथाहि—'तन्त्वौपनिषदं पुरुषं पृच्छामी'ति केवलोपनिषद्वेद्यं ब्रह्म । न शास्त्रान्तरवेद्यम् । तद्यदि मीमांसा स्वतन्त्रा स्यात्तज्जनितं ज्ञानं न ब्रह्मज्ञानं भवेत् ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

कत्वेन स्वातन्त्र्यमस्ति, न श्रौतश्रवणादिशेषत्वं तथापि स्यादिति भावः । नन्वेवमेवास्तु का नो हानिरिति[1] चेत्तत्र बाधकमाहुः—'तथा चे'ति । स्वातन्त्र्ये सति जिज्ञासायाः श्रवणादिजन्येऽमृतत्वसाधके ज्ञाने साक्षात्परम्परया वाऽनुपयोगः स्यादित्यर्थः । यद्वा, पूर्वोक्ताशङ्कायामेव बाधकमाहुः—'तथा चे'ति । जिज्ञासाया वेदान्तवाक्यान्तर्गतशब्दशेषत्वाभावे तज्जन्यातीन्द्रियादिसर्वविषयकज्ञानस्यामृतत्वप्रापकत्वानुपयोगः स्या'न्नान्यः पन्था विद्यतेऽयनाये'त्यादिश्रुतिभिरिति भावः । अयमेवार्थः स्फुटीकृतस्तथाहीत्यारभ्य भवेदित्यन्तेन ग्रन्थेन । अस्मिन्पक्षेऽथशब्दोऽर्थान्तरोपक्रम आनन्तर्ये वा विवक्षितो ज्ञेयः । तत्रार्थान्तरोपक्रमस्य चानन्तर्यार्थाव्यतिरेकादानन्तर्यमेव तस्यार्थ इति पर्यवसति । तस्य तु

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

सर्वपदार्थविषयकज्ञानसाधकमिति तस्य स्वातन्त्र्यं भवति । ननु स्वतन्त्रतायां को दोष इत्यत आहुः—'तथा चे'ति । एतदेव स्फुटीकुर्वन्ति—'तथाही'त्यादिना । 'तद्यदी'ति । ततस्माद्ब्रह्मण उपनिषदेकवेद्यत्वात् । 'स्वतन्त्रे'ति । अनपेक्ष्यैव वेदान्तवाक्यानि यदि मीमांसा प्रवृत्ता स्यात् । 'न भवेदि'ति । औपनिषदत्वाभावात् । बहुवादिसम्मतत्वादानन्तर्यार्थक एवाऽस्मिन् पक्षेऽथशब्दो बोध्यः । आनन्तर्यञ्च वेदाध्ययनस्य । वेदार्थधर्माऽवबोधस्य वा ग्राह्यम् ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

द्विधेयत्वे सिद्ध इष्टसाधनत्वाऽवगतौ 'तमेव विदित्वाऽतिमृत्युमेती'तिश्रुतेर्ब्रह्मज्ञानस्यैवेष्टसाधनत्वात्तज्ज्ञानसाधनीभूतवेदान्तवाक्यविचाररूपत्वाज्जिज्ञासाशास्त्रस्य वेदान्तशेषत्वमेव स्यान्नतु स्वतन्त्रता । स्वतन्त्रतायां हि जिज्ञासाशास्त्रं वेदान्तशास्त्रं न स्यात् । तथा सति 'तन्त्वौपनिषदमि'ति श्रुतेः केवलोपनिषद्वेद्यस्य ब्रह्मणो ज्ञानाऽभावेन निर्गुणा मुक्तिर्न स्यात् । विपक्षे बाधकमाहुः—'अन्यथा अथ योगानुशासनमि'त्यादिना । अथ योगानुशासनमित्यादौ योगानुशासनस्य वेदान्तश्रवणप्रभृतिफलातिरिक्तातीन्द्रियपदार्थविषयकज्ञानसाधकत्वात्स्वातन्त्र्यं भवति । तद्वज्जिज्ञासाशास्त्रस्यापि स्वातन्त्र्यं स्यात् । तत्त्वनिष्टम् । वेदान्तश्रवणादिफलरूपमोक्षातिरिक्तफलसाधकत्वात् । स्वतन्त्रतायां दोषमाहुः—'तथा च ज्ञानानुपयोग' इत्यारभ्य 'न ब्रह्मज्ञानं भवेदि'त्यन्तम् । अस्मिन्पक्षेऽथशब्दोऽर्थान्तरोपक्रम आनन्तर्ये वा विवक्षितोऽस्ति । तत्राऽर्थान्तरोपक्रमस्याऽनन्तर्याऽर्थाभेदादानन्तर्यार्थ एव पर्यवस्यति । तच्चोपक्रमस्याऽऽनन्तर्यं यथोचितं सिद्धमेवास्तीति पक्षान्तरमाहुः—

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

व्यप्रत्ययघटितकर्तव्यपदाध्याहारे कृते विचारस्य वैधत्वं स्यात्तथा च विचारो वैदिक इति विचारस्योपनिषदुक्तफलसमर्पकता भविष्यति न तु योगपुराणादीनामिवानौपनिषत्फलसमर्पकतेत्यर्थः । अन्यथा कर्तव्यपदाध्याहाराभावे । तथा च स्वतन्त्रतासत्त्वे च । ज्ञानानुपयोगः औपनिषज्ज्ञानानुपयोगः । एतदेवोपपादयन्ति—'तथाही'त्यादिना ।

---

१ को हानिरित्यशुद्ध पाठ कपुस्तके ।

अथवा अध्याहारकरणापेक्षयाऽथशब्द एवाऽधिकारे व्याख्येयः। वेदाऽध्ययनाऽऽनन्तर्यं तु सिद्धमेव। न ह्यनधीत एव विचारमर्हति। तत्रैतत्स्यात् स्वतन्त्रतेति। तत्र

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

स्वानभिमतत्वात्पक्षान्तरमाह–'अथवे'ति। अध्याहारो ह्यश्रुतस्य भवति। तथा च तदपेक्षयाऽथशब्दोऽधिकार एव व्याख्येयः। अत्रैवकारोऽधिकार इत्यनेन संबध्यते। अथाधिक्रियते ब्रह्मजिज्ञासेति। अधिकारः आरम्भः। ननु ब्रह्मजिज्ञासाया वेदाध्ययनानन्तरभावित्वादानन्तर्यार्थ एव भवेदित्याशङ्क्याऽऽह–'वेदाध्ययने'ति। ब्रह्मजिज्ञासाया वेदाध्ययनं विनाऽसम्भवात्तदानन्तर्यस्याऽऽक्षेपलभ्यत्वान्न तद्वाचकपदापेक्षा युज्यते। अनन्यलभ्यस्यैव हि शब्दार्थत्वमित्युभयवादिसिद्धत्वात्। तदेव विशदयन्ति–'न ह्यनधीत एवे'ति। नन्वध्याहारकरणापेक्षयाऽथशब्द एवाधिकारे व्याख्येय इति यदुक्तं, तन्न युक्तम्। तथा सति कर्तव्यपदाध्याहाराभावाद्बहुकरीत्या जिज्ञासायाः स्वातन्त्र्यसम्पत्तौ -घेट्कुब्यां

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

माणदोषात्पक्षान्तरमाहुः—'अथवे'ति। अधिकारे प्रारम्भे। इदं पूर्वमेव व्याख्यातम्। आनन्तर्यार्थकत्वं खण्डयन्ति–'वेदे'ति। अधिकारपक्षे स्वातन्त्र्यदोषमनूद्य तं परिहरति—'तत्रे'ति। तत्राऽधिकारपक्षे। एतद्दूषणम्। किं दूषणमित्यत आहुः—'स्वतन्त्रते'ति। दूषणविधानस्य प्रतिविधानप्रतिज्ञा-

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

अथैतत्पक्षस्य बहुदोषग्रस्तत्वात्पक्षान्तरमाहुः-'अथवे'ति। अत्रैवकारोऽधिकारपदेन सम्बध्यते। यथाश्रुत एव वा तत्सम्बन्धः। आनन्तर्यार्थत्वे ह्यथशब्दस्याऽध्याहारापेक्षा। तस्याऽधिकारार्थत्वे तु सा नेति। अधिकारः आरम्भः। नन्वधिकारार्थत्वे कर्तव्यादिपदाकाङ्क्षाऽभावाज्जिज्ञासाया अवैधत्वे वैदिकाधिकार्थप्राप्त्याऽनधीतवेदाङ्गः शूद्रोप्यधिकारी स्यादित्यत आहुः—'वेदाध्ययने'-ति। अग्रे वेदान्तवाक्यानामेव विचार्यत्वेन वेदाध्ययनस्याऽऽक्षेपलभ्यत्वात्तदानन्तर्यन्तु सिद्धमेवेति

श्रीलालूभट्टकृता गूढार्थदीपिका।

'अथवाऽध्याहारे'त्यादिना। ननु कदेयं जिज्ञासा कार्येत्याकाङ्क्षायामाहुः—'वेदाध्ययनानन्तर्य'मित्यादि। वेदाध्ययनानन्तर्यस्य सिद्धत्वात्तदर्थमथशब्दो न प्रयोक्तव्य इति भावः। कथं वेदाध्ययनं सिद्धमित्याकाङ्क्षायामाहुः–'न ह्यनधीत एवे'ति। न अधीतो येन स अनधीतः। अनधीतवेदो वेदार्थजिज्ञासायामनधिकारीत्यर्थः। 'तत्रैतत्स्यादि'त्यादि। तत्र अधिकारार्थकथने

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

अथाध्याहारपक्षे दोषाद्विचारस्य सौत्राक्षरैरेव कर्तव्यतामुपपादयितुमाहुः—'अथवे'त्यादि। अधिकारेऽधिकर्तव्य इत्यस्मिन्नर्थे। नन्वथशब्दस्याधिकारार्थत्वे वेदाध्ययनानन्तर्यार्थरूपाथशब्दार्थस्यालाभादनधीतवेदैः शूद्रादिभिरपि वेदान्तविचारः कर्तव्यो भवेदित्यत आहुः—'वेदाध्ययने'-त्यादि। अत्राथशब्दस्याधिकारार्थत्वपक्षेऽपि कर्तव्यतारूपविध्यर्थस्य लाभेऽपि स्वतन्त्रतादोषः परिहृत एव। अत एव 'अथशब्दानुशासन'मित्यत्राऽथशब्दस्य प्रस्तावरूपाधिकारपदवाच्यकर्तव्यतारूपार्थकरणेऽपि व्याकरणस्य नावैदिकार्थोपयोगित्वलक्षणं स्वातन्त्र्यम्। तथा 'अथातो ब्रह्मजिज्ञासे'त्यत्रापि न स्वातन्त्र्य-

१ नह्यनधीतवेद एवेत्यपि पाठ। २ अथ स्यात्.।

प्रतिविधास्यामः। वेदार्थब्रह्मणो वेदानुकूलविचार इति। किमत्र युक्तम्। व्याख्यानमिति।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

अभातवृत्तान्तवत्पूर्वोक्तदूषणगणप्रसङ्गः स्यादित्याह—'तत्रैतत्स्यादि'ति। अध्याहाराऽभावे एतद्व्यवहितपूर्वक्षणोक्तमेव दूषणं स्यादित्यर्थः। किं तदित्याकाङ्क्षायां स्मारयति—'स्वतन्त्रते'ति। तत्रोत्तरं वदाम इत्याहुः—'तत्र प्रतिविधास्याम' इति। जिज्ञासालक्षणोक्तिमुखेन तदुत्तरमाहुः—'वेदार्थब्रह्मणो वेदानुकूलविचार'इति। ब्रह्मणो वेदानुकूलविचार इत्युक्ते 'आकाशस्तल्लिङ्गादि'त्यादावाकाशादिविचारस्योक्तत्वादव्याप्तिः स्यादतो 'वेदार्थ'इति। ब्रह्म हि 'एकोऽहं बहु

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम्।

माहुः—'प्रतिविधास्याम' इति। इदानीमेव दूषणपरिहारं करिष्यामः। परिहारप्रकारमाहुः—'वेदे'ति। वेदानुकूल इत्यनेन स्वतन्त्रतापरिहारः। ननु पक्षद्वये दूषणाऽभावात्किं युक्तमित्यत आहुः—

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

नाऽनधीतवेदस्य शूद्रस्याऽधिकारित्वशङ्कावसरः। ननु मास्तु शूद्रादेरधिकारित्वप्रसङ्गरूपो दोषः, परं दूषणान्तरं तु स्यादेवेत्याहुः—'तत्रे'ति। तत्राऽधिकारपक्षे। एतदनुपदमेव वक्ष्यमाणम्। किं तदित्याकाङ्क्षायामाहुः—'स्वतन्त्रते'ति। तत्र समाधिं वदन्ति—'तत्रे'ति। स्वातन्त्र्यदोषप्रसक्तौ। प्रतिविधास्यामः स्वरूपकथनेन समाधिं करिष्यामः। किं तत्स्वरूपमित्याकाङ्क्षायामाहु.—'वेदार्थे'ति। वेदार्थत्वेनाऽवगतस्य ब्रह्मणो वेदोक्तब्रह्मप्रतिपादनप्रकाराङ्गभूतो विचारः। नाऽतः पाणिनीयकणादादिकृतविचारेऽतिप्रसङ्गः। नाऽप्ययं नियमो यस्याऽधिकारस्तस्तत्स्वतन्त्रमेव शास्त्रं, नाङ्गमिति। अथ शब्दानुशासनमित्यत्र व्यभिचारात्। अथाऽथशब्दस्य सिद्धार्थोऽनुवादकत्वं युक्तमुताऽधिकारार्थत्वेन व्याख्यानं वेत्युभयपक्षेऽप्यध्याहारस्वतन्त्रतारूपदोषयोस्तुल्यत्वादिति कश्चित्सुकृततयाऽनुयुङ्क्ते—'किमत्रे'ति। तत्र युक्तत्वात्सिद्धान्तत्वेनोत्तरपक्षमेवाऽऽहुः—'व्याख्यानमि'ति। तत्र विनिगमक-

श्रीलालूभट्टकृता गूढार्थदीपिका।

पूर्वोक्तरीत्या स्वतन्त्रतारूपो दोषः स्यादित्यर्थः। ननु तर्हि कुतोऽधिकारार्थत्वं कल्प्यत इत्याशङ्क्याऽऽहुः—'तत्र प्रतिविधास्याम' इति। तदेव प्रतिविधानमाहुः—'वेदार्थब्रह्मण' इत्यादिना। ब्रह्मजिज्ञासा-अधिक्रियत इत्युक्तौ ब्रह्मणो वेदार्थत्वात्तदनुकूल एव विचारो भवतीति विचाररूपजिज्ञासाया-वेदान्तशेषत्वं सिद्धमेवेति तदर्थं न कर्तव्यपदाध्याहारः। तथा-चाऽथशब्दस्याऽधिकारपरत्वेन व्याख्या-युक्तैवेत्यर्थः। एवं प्रतिविधायाऽऽहुः—'किमत्र युक्तमि'ति। अत्र कर्तव्यपदाध्याहाराऽथशब्दाधिकारव्याख्यानयोर्मध्ये किं-युक्तम्। उभयोः सम्भवदुक्तिकत्वादित्यर्थः। उभयोर्मध्ये यद्युक्तं तदाहुः—'व्याख्यानमि'तीति। अथशब्दस्याऽधिकारार्थपक्षव्याख्यानमेव युक्तम्। न तु

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीपः।

सम्भावना। तथापि 'तुष्यतु दुर्जन' इतिन्यायेनाऽभ्युपगमवादेनाशङ्कामाहुः—'तत्रे'त्यादि। तत्र कर्तव्यपदाध्याहाराभावपक्षे। एतत् वक्ष्यमाण स्वतन्त्रतारूप दूषणम्। तत्र दूषणनिमित्तम्। प्रतिविधास्यामः समाधानं करिष्यामः। समाधानमेवाहु.—'वेदार्थे'त्यादिना। वेदार्थब्रह्मणः सम्बन्धी ज्ञापको वेदानुकूलविचारो वेदार्थज्ञानोपयोगियावत्कारणोपजीव्यो वास्तववेदार्थब्रह्मनिर्णायको विचार

व्याख्यानतो विशेषप्रतिपत्तेः । यथा कर्मणि दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः 'अथातो दर्शपूर्णमासौ व्याख्यास्याम' इति ।

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या ।

**स्यामि**'ति रमणेच्छया सर्वरूपत्वेनाविर्भूतमिति यावन्तः शब्दास्ते सर्वेऽपि तद्वाचका एवेति । अत एवोक्तं '**सर्वे सर्वार्थवाचका**' इति । अत एवाऽऽकाशादिशब्दानां प्रथमाध्याये समन्वयः प्रतिपादित इति वेदार्थरूपत्वं तस्य । वेदार्थब्रह्मणो विचार इत्युक्ते नैयायिकादिकृतस्येश्वरविचारस्याऽऽपि ब्रह्मविचारत्वप्रसक्तिः स्यात्प्रकारान्तरेण वेदार्थरूपस्य ब्रह्मण एव तद्विचारविषयत्वादतः समुदितमुपात्तम् । तथा च '**तं त्वौपनिषदं पुरुषं पृच्छामी**'ति श्रुतेः केवलोपनिषद्वेद्यब्रह्मजिज्ञासाया वेदान्तवाक्यान्तर्गतशब्दशेषत्वेन वेदानुकूलत्वात्तत्फलाऽतिरिक्तफलसाधकत्वेन पूर्वोक्तदूषणानवकाश इति भावः ।

नन्वेवमथशब्दस्यानेकार्थत्वेनाधिकारवाचकत्वेऽप्यत्र तदर्थकत्वे किं विनिगमकमित्याहुः— '**किमत्र युक्तमि**'ति । अत्र सूत्रनिष्ठाऽथशब्दस्य तदर्थकत्वे किं विनिगमकत्वेन युक्तमित्यर्थः ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

'**व्याख्यानमि**'ति । अथशब्दार्थपक्ष एव युक्त इत्यर्थः । '**कुत**' इत्यत आहुः—'**व्याख्यानत**' इति । व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् । इयं, प्राचीनवैयाकरणतन्त्रे वाचनिका, पाणिनितन्त्रे ज्ञापकसिद्धा परिभाषा । अस्यार्थः विशेषस्य अन्यतराद्यर्थरूपस्य व्याख्यानात् शिष्टकृतात् प्रतिपत्तिर्निश्चयः । हि यतः सन्देहात् शास्त्रं अलक्षणं अननुष्ठापकम् । तथा न—नोचेत् सूत्रं व्यर्थं स्यात् । शास्त्रस्य निर्णयजनकत्वौचित्यादिति । अत्रोदाहरणं 'अणुदित्सवर्णस्य चाप्रत्ययः' । इदं सूत्रं, अत्राण्परेण णकारेण पूर्वेण वेति सन्देहे । सूत्रं व्यर्थं स्यात् । अतः शिष्टैर्व्याख्यातं परेण णकारेणेति । एवमत्राप्यथशब्दः पाणिनिभाष्यकारैरधिकारे व्याख्यात इति आरम्भार्थकत्वमेवाथशब्दस्येति दिक् । ऋग्वेदे यजुर्वेदे च कर्मप्रतिपादके कल्पसूत्रे । उदाहरणार्थं व्याख्यानं दर्शयन्ति—यथेति । प्रथमत ऋग्वेदसूत्रे उदाहरणं दर्शयन्ति—'**कर्मणि दर्शे**'ति । यथा क्रतुशब्देन पशुसोमादीनां पूर्वनिरूपणस्य

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

माहुः—'**व्याख्यानत**' इति । विशेषेण प्रतिपत्तिर्विशेषप्रतिपत्तिः । सप्रयोजनं विचारप्रस्तावज्ञानम् । तत्र दृष्टान्तमाहुः—'**यथे**'ति । कर्मणि दर्शपूर्णमासादिषु यथा व्याख्यानतो विशेषप्रतिपत्तिस्तथा

श्रीलालूभट्टकृता गूढार्थदीपिका ।

कर्तव्यपदाध्याहार इत्यर्थः । व्याख्याने फलमाहुः—'**व्याख्यानतो विशेषप्रतिपत्तेरि**'ति । व्याख्यानं नाम तत्समानार्थकपदान्तरैर्विपक्षस्वपक्षबाधकसाधकतर्कोपन्यासपूर्वकं तदर्थकथनम् । तादृशाद्व्याख्यानतो विशेषप्रतिपत्तिः । सप्रमाणकबोधस्य—सम्भवादित्यर्थः । तत्र दृष्टान्तमाहुः—'**यथा**

भगवदीयश्रीमद्विष्णुरामप्रणीतः प्रदीपः ।

इति समुदितार्थः । इत्थं च वेदतदङ्गानामध्येतुरेव विचाराधिकार इत्यर्थस्य विचारपदव्याख्यानादेव लाभाच्च स्वतन्त्रतादोषगन्धोऽपीति फलितम् । अत्र विचारस्य वैदिकत्वस्थापननिमित्तम् । किं युक्तम् कर्तव्यपदाध्याहारोऽथशब्दस्याधिकारार्थत्वरूपव्याख्यानं वा इति विप्रतिपत्तिः । तत्र सिद्धान्तमाहुः—

१ अथ न्याय ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

तत्रोत्तरमाहुः—'**व्याख्यानमि**'ति। तस्य तत्त्वे हेतुमाहुः—'**व्याख्यानतो विशेषप्रतिपत्तेरि**'ति। व्याख्यानं नाम तत्समानार्थकपदान्तरैर्विपक्षस्वपक्षबाधकसाधकतर्कोपन्यासपूर्वकं तदर्थकथनम्। तथा च ताद्रूप्यात्तस्माद्विशेषेण प्रतिपत्तिर्विशेषप्रतिपत्तिः, सविनिगमकं ज्ञानं, तस्य सम्भवादित्यर्थः। तत्र वैदिकं दृष्टान्तमाहुः—'**यथा कर्मणी**'ति। यथा कर्मणि दर्शपूर्णमासौ तु पूर्वं व्याख्यास्याम इत्यत्र' तयोः पश्वाद्यपेक्षया पूर्वं व्याख्याने किं विनिगमकमित्यपेक्षायां सूत्रकारेणाऽथातो **दर्शपूर्णमासौ व्याख्यास्याम**' इति सूत्रेऽथशब्दाऽतःशब्दाभ्यां विनिगमकस्योक्तेस्ततो विशेषप्रतिपत्तिर्दृष्टा तथात्रा-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

व्यवच्छेदः। अथशब्दस्याधिकारार्थत्वात् व्याख्यानरूपमेव समाधानं कृतं न तु किञ्चित्तत्राध्याहृतं तद्व-दित्यर्थः। दर्शपूर्णमासयोः सर्वयागानां प्रकृतित्वात्प्रथमतस्तस्यैव विधानं वक्तुं पूर्वं व्याख्यास्याम इत्युक्तम्। व्याख्यानदृष्टान्तार्थं यजुर्वेदान्तर्गतापस्तम्बसूत्रमाहुः—'**अथात**' इति। नन्वध्याहारस्य स-

केनचिद्विरचिता वेदान्तचन्द्रिका।

माहुः—'**अथात**' इति। व्याख्यानं नाम तत्समानार्थकपदान्तरैर्विपक्षस्वपक्षबाधकसाधकतर्कोपन्यास-पूर्वकं तदर्थकथनम्। तथा च व्याख्येयवाक्ये पश्वाद्यपेक्षायास्तयोः पूर्वं व्याख्याने किं बीजमित्य-पेक्षायां सूत्रकारोऽ**थातो दर्शपूर्णमासौ व्याख्यास्याम** इति द्वितीयसूत्रं प्रणीतवान्। तत्र चाऽथाऽतःशब्दाभ्यां तयोः पूर्वव्याख्याने विनिगमकोक्त्या विशेषप्रतिपत्तिर्दृष्टा तथाऽत्रापि भविष्यती-त्यर्थः। व्याख्यानसूत्रार्थस्तु–यतो दर्शपूर्णमासौ पूर्वमेवाधिक्रियेते आरभ्येते। अतस्तावेव पूर्वं व्याख्यास्यामो निरूपयिष्यामः।

श्रीकालूभट्टकृता गूढार्थदीपिका।

**कर्मणि दर्शपूर्णमासौ तु पूर्वं व्याख्यास्याम**' इति। यथा कर्मणि दर्शपूर्णमासौ तु पूर्वं ब्रह्ममीमांसायामपि। तत्र पूर्वं व्याख्येयवाक्यमाहुः—'**दर्शपूर्णमासौ त्वि**'ति। व्याख्यानवाक्यं-व्याख्यास्याम इत्यत्र तयोः पश्वाद्यपेक्षया पूर्वं व्याख्याने किं विनिगमकमित्यपेक्षायां सूत्रकृता **अथातो दर्शपूर्णमासौ व्याख्याम** इति सूत्रे ह्यथशब्देन, अतःशब्देन च विनिगमकस्योक्तेस्ततो विशेष-प्रतिपत्तिर्दृष्टा तथेहापीति भावः। एवं व्याख्यानेऽथशब्दस्याधिकारार्थत्वे सिद्धे किं फलमित्याकाङ्क्षाया-

भगवदीयश्रीमद्विच्छारामप्रणीतः प्रदीपः।

**व्याख्यानमिति**। व्याख्यानपक्षे सम्मतिमाहुः—**व्याख्यानत** इति। **व्याख्यानतो विशेष-प्रतिपत्तेर्नहि सन्देहादलक्षणमिति**। तत्र दृष्टान्तमाहुः–'**यथे**'त्यादि। तथा च, '**दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः**' इति व्याख्येयं निरूपितम्। तत्र तुशब्देन पशुसोमादीनां पूर्वनिरूपणस्य व्यवच्छेदः क्रियते। तत्र किं गमकमित्याकाङ्क्षायां अथातःशब्दयोर्व्याख्यानमित्यतोऽग्रे **अथात** इत्यु-क्तम्। व्याख्यानं तु यतो दर्शपूर्णमासावेव पूर्वमधिक्रियेतेऽनुष्ठीयेतेऽतो हेतोः पूर्वं व्याख्यास्याम इत्यथशब्दस्याधिकारार्थत्वव्याख्यानरूपमेव समाधानं कृतं न तु किंचित्तत्राध्याहृतमित्यर्थः। एवमत्राप्य-थशब्दव्याख्यानादेवोपपत्तावध्याहारो निरर्थक इत्यर्थः। '**दर्शपूर्णमासौ व्याख्यास्याम**' इति व्याख्याप्रतिज्ञा।

१. पूर्वकतदर्थकथनमिति खपुस्तकम्। २. सूत्रतो दर्शपूर्णमासावित्यादि कपुस्तकम्।

(अथ वै तर्हीमानि सिध्यन्ति प्रयोजनानि अधिकाकाङ्क्षा न भवेत्, अध्याहारश्च, पुरुषार्थश्च सिध्येत्, उच्छेदश्च न भवेदिति । कथम्? । अथशब्दोऽर्थचतुष्टये वर्तते, मङ्गले-

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

पीति भावः । नन्वेवं व्याख्यानस्य विशेषप्रतिपत्तिजनकत्वनियमेनाऽत्रत्याथशब्दस्यापि व्याख्यानेनाधिकारार्थत्वे सिद्धेऽपि ततः किं जातमित्याकाङ्क्षायामाहुः—'अथवे'ति । **अथ** विशेषप्रतिपत्त्यनन्तरम् । **तर्ह्यधिकारार्थत्वे । वै** निश्चयेन । **इमानि** अग्रे वक्तव्यत्वेन बुद्धिस्थानि चत्वारि प्रयोजनानि सिध्यन्ति। तान्येवाऽऽहुः—'**अधिकाकाङ्क्षा न भवेदि**'त्यारभ्या'**धिकारार्थ एव श्रेयानि**'त्यन्तेन सन्दर्भेण । अधिकाकाङ्क्षाभावो,ऽध्याहाराभावः, पुरुषार्थसिद्धिः शास्त्रोच्छेदाभावश्चेति चत्वारि प्रयोजनान्यधिकेत्यारभ्य भवेदितीत्यन्तेनोद्दिष्टानि । उपपत्तिपूर्वकं वक्तुं चोदयति—'**कथमि**'ति । तान्येवोद्देशक्रमेणाऽऽहुः—'अथे'त्यादिना । अथेत्यारभ्य संन्यासानुपपत्तिश्चेत्यन्तो ग्रन्थ उपपत्तिपूर्वकमाकाङ्क्षाभावप्रतिपादने विपक्षबाधकतर्करूपेणोपन्यस्त इति ज्ञेयम् ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

र्थसम्मतत्वात्स एव कुतो नाद्रियत इत्यतस्तत्र स्वमते भूषणानि परमते दूषणान्याहुः—'**अथवे**'ति ।

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

ननु सिद्धेऽप्यधिकारार्थत्वे ततः किं फलमित्यपेक्षायामाहुः—'**अथवा**' इति । अधिकारार्थत्वसिद्ध्यनन्तरम् । **वै** निश्चयेन । **तर्हि** व्याख्यानपक्षे । **इमानि** बुद्धिस्थान्यनुपदमेव वक्ष्यमाणानि । दूषणान्तररूपार्थान्तरोपक्रमार्थको वाऽयमथशब्दः । तर्ह्यधिकारार्थत्वे । नाऽऽनन्तर्यपक्षे । तान्येव

श्रीलालूभट्टकृता गूढार्थदीपिका ।

माहुः—'**अथ वै तर्हीमानि सिद्ध्यन्ति प्रयोजनानि**। अथ व्याख्यानेन विशेषप्रतिपत्त्यनन्तरम् । **वै** निश्चयेन । तर्हीमानि प्रयोजनानि सिद्ध्यन्तीत्यर्थः । तान्येवाऽऽहुः—'**अधिकाकाङ्क्षा न भवे**'दित्यादिना । '**अधिकाकाङ्क्षा न भवे**'दिति । अधिकारार्थत्वाऽभाव आनन्तर्यार्थकथने कस्याऽऽनन्तर्यमित्यानन्तर्यप्रतियोगिनोऽधिकाकाङ्क्षा भवेत् । सा त्वधिकारार्थकत्वपक्षे न भवेदित्यर्थः । '**अध्याहारश्चे**ति । कर्तव्यपदाध्याहारश्च न भवेदित्यर्थः । **पुरुषार्थश्च सिध्येदि**'ति । अथशब्दस्यार्थचतुष्टयवाचकत्वेऽप्यथशब्दश्रुत्यैव मङ्गलसिद्धेर्न मङ्गलवाचकत्वम् । अर्थान्तरस्य पूर्वोक्तस्याऽत्राऽभावान्नाऽर्थान्तरोपक्रमोऽत्र । अतः परमानन्तर्यमधिकारश्चाऽवशिष्टः । तत्राऽऽनन्तर्यवाचकत्वकथने कस्यानन्तर्यमित्याकाङ्क्षायां

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

इतः परं व्याख्यानपक्षे गुणसमूहमध्याहारपक्षे दोषसमूहं च वक्तुमाहुः—'**अथवे**'त्यादि । **एतर्हि** अस्मिन् व्याख्यानपक्षे । **इमानि** वक्ष्यमाणानि । **अधिकाकाङ्क्षा** अथशब्दस्यानन्तर्यरूपेऽर्थे वाच्ये सति वेदार्थविचारे वेदाध्ययनानन्तर्यस्यान्यथानुपपत्तिप्रमाणेनैव लाभेऽनन्यलभ्यस्यैव शब्दार्थत्वादथशब्देन कस्यानन्तर्यं बोधनीयमित्यधिकाकाङ्क्षेत्यर्थः । **न भवेत्** साऽधिकाकाङ्क्षाऽप्यथशब्दस्याधिकारार्थत्वपक्षे न भवेदित्यर्थः । **अध्याहारश्च** कर्तव्यपदाध्याहाररूपदोषश्च न भवेदित्यर्थः । **पुरुषार्थः** मोक्षरूपपुरुषार्थः । **उच्छेदः** अथशब्दस्यानन्तर्यरूपेऽर्थे वाच्ये यस्यानन्तर्यं व्यासविचारे वक्तव्यं तस्यालाभे विचारोच्छेद इत्यर्थः । **न भवेत्** अथशब्दस्याधिकारार्थत्वपक्षे न

ऽधिकारे आनन्तर्ये अर्थान्तरोपक्रमे च । तत्र श्रुतिमात्रेणैव मङ्गलसिद्धेरर्थान्तरस्य च पूर्वोक्तस्याऽभावान्नात्र तत्कल्पनम् । अथाऽवशिष्येत आनन्तर्ये चाधिकारे चेति ।

---

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या ।

नन्वथशब्दस्य हि मङ्गलाधिकारानन्तर्यार्थान्तरोपक्रमभेदेनार्थचतुष्टये शक्तत्वान्मङ्गलार्थोऽयम्थो- ऽथशब्दः कस्मान्न भवति । तथा च मङ्गलहेतुत्वात्प्रत्यहं ब्रह्मजिज्ञासेति सूत्रार्थः सम्पद्येतेत्यत आहुः— '**तत्र श्रुतिमात्रेणे**'ति । पदार्थ एव हि वाक्यार्थे समन्वीयते, नाऽपदार्थः । स च वाच्यो लक्ष्यो वा । न चेहाथशब्दवाच्यं लक्ष्यं वा मङ्गलं, किन्तु मृदङ्गध्वनिवदथशब्दश्रवणमात्रकार्यम् । न च कार्यज्ञाप्ययोर्वाक्यार्थे समन्वयः शाब्दे व्यवहारे क्वचिदपि दृष्टचर इति नाऽशब्दवाच्यत्वं तस्य । नन्वेवं '**ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभावि**'ति स्मृतिव्याकोप इत्यत आहुः—'**श्रुतिमात्रेणैवे**'ति । अधिकाराद्यर्थप्रयुक्त एव ह्यथशब्दः श्रुतिमात्रेणैव वेणुवीणाध्वनिवन्मङ्गलसाधको भवत्यन्यार्थनीयमानोदकुम्भवदिति न पूर्वोक्त- स्मृतिव्याकोपः । नन्वेवं मङ्गलवाचकत्वाभावेऽप्यर्थान्तरवाचकत्वे किं बाधकमित्याकाङ्क्षायामाहुः— '**अर्थान्तरस्य च पूर्वोक्तस्याभावादि**'ति । अर्थान्तरवाचकत्वे त्वथशब्दस्य पूर्वप्रकृतार्थापेक्षा भवति । न चेह कथनार्थः पूर्वं प्रकृतोऽस्ति । ब्रह्मजिज्ञासाया एव प्रथमतोऽधिकृतत्वात् । तस्मान्नात्र

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

'**अर्थचतुष्टये वर्तेत**' इति । अत्र सूत्रे सम्भावितो वर्तेत इत्यर्थः । एतेन '**मङ्गलानन्तरारम्भ- प्रश्नकार्त्स्न्येष्वथो अथेति । अथाथो संशये स्यातामधिकारे च मङ्गले । विकल्पा- नन्तरप्रश्नकार्त्स्न्यारम्भसमुच्चय**' इति कोशोक्त्या न विरोधः । '**अध्याहारश्चे**'ति । न भवेदिति पूर्वेणान्वयः । '**अर्थान्तरस्ये**'ति । पूर्वं किञ्चिदुक्त्वाऽथेदमुच्यत इत्यर्थान्तरस्येत्यर्थः । अधिका-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

प्रकाशयन्त्यधिकेत्यादिना । अध्याहारश्चेति । अत्र न भवेदित्यनुषङ्गः । अत्र चोदयति—'कथमि'- ति । विस्तरेणोक्तप्रयोजनसिद्धिप्रकारं वक्तुमुपक्रमन्ते—'अथशब्द' इति । तदेवाहुः—'**मङ्गल**' इत्यादिना । '**तत्रे**'ति । अर्थचतुष्टयमध्येऽथशब्दस्य श्रवणादेव मङ्गलसिद्धेरस्य च नात्रेत्यादिनाऽन्वयः । तथाच मङ्गलस्य वृत्त्याऽथशब्दार्थत्वाऽभावेन वाक्यार्थेनान्वयान्न मङ्गलार्थकत्वकल्पनं युक्तम् । किन्तु दुन्दुभिध्वनिवद्धुर्वादिनमस्क्रियावच्चाऽथशब्दश्रवणं मङ्गलं जनयतीति तद्धेतुत्वमात्रे तथेति भावः । अतएव स्मृतौ माङ्गलिकावित्येवोक्तम् । एवं ब्रह्मजिज्ञासायाः पूर्वमुपक्रान्तस्य कस्यचिद- प्यर्थस्याऽभावादत्राऽथशब्देऽर्थान्तरोपक्रमार्थत्वस्य च न कल्पनं युक्तमित्यर्थः । तत्र पूर्वं मङ्गलार्थाऽ- न्तरोपक्रमार्थत्वं निषिध्याऽवशिष्टमर्थद्वयमनुवदन्ति—'अथे'ति । पूर्वोक्ताऽर्थद्वयनिषेधाऽनन्तरमान-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

भवेदित्यर्थः । अथशब्दस्याधिकारार्थत्वपक्षे उक्तानि दूषणानि केन प्रकारेण न भवन्तीत्यत्र प्रकारं पृच्छति—**कथमिति** । मङ्गले 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनि- ष्क्रान्तौ तेन माङ्गलिकावुभावि'तिवाक्यान्मङ्गले । **अथाधिकारे** 'अथशब्दानुशासनमि'त्यादौ । **आन- न्तर्ये**—'भुक्त्वाऽथ गमिष्यामी'त्यादौ । **अर्थान्तरोपक्रमे**—यथादौ किंचिदुक्त्वाऽथेदमुच्यते इत्यादौ । **श्रुतिमात्रेण** अथशब्दश्रुतिमात्रेण । **पूर्वोक्तस्याभावात्** अथातो ब्रह्मजिज्ञासेत्यत्र पूर्वोक्तार्थान्त-

आनन्तर्ये त्वध्ययनस्य स्वतःसिद्धत्वादधिकाकाङ्क्षा भवति। तथा सति तदभावान्न विचारः सिध्येत्।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

मङ्गलार्थान्तरोभयवाचकत्वं तस्य कल्पनं युक्तमित्यर्थः । नन्वेवं सत्यवाचकत्वमेव स्यादित्यत आह— 'अथायशिष्यत' इति । नन्वेवमानन्तर्यवाचकत्वमेवास्तु, नाधिकारार्थत्वमित्याशङ्कायामानन्तर्य-वाचकत्वे बाधकान्याहुः—'आनन्तर्ये त्वि'ति । न तावदस्य कस्यचिदानन्तर्यमत्र वक्तव्यम् । तस्या-भिधानमन्तरेणापि प्राप्तत्वात् । अवश्यं हि पुरुषः किञ्चित्कृत्वा किञ्चित्करोति । न चानन्तर्यमात्रस्य दृष्टमदृष्टं वा किञ्चित्प्रयोजनं दृश्यते । तस्मात्तदानन्तर्यमत्र वक्तव्यं यत्पूर्ववृत्तं नियमेनाऽपेक्ष्यते । ननु स्वाध्यायाध्ययनविधिना तस्य नियमेन पूर्ववृत्तत्वात्तदानन्तर्यमेवास्त्वित्याशङ्कायामाहुः—'अध्ययन-स्ये'ति । यद्यप्यध्ययनं नियमेन पूर्ववृत्तं तथापि तस्याऽर्थापत्तिलभ्यत्वेनानन्यलभ्यत्वाऽभावाच्छब्दार्थत्वं न सम्भवति । तथा च ततोऽप्यधिकाकाङ्क्षा भवेत्तस्याश्च विषयलाभाभावेन निवृत्त्यभावाद्ब्रह्मजिज्ञासाप्र-तिपन्थकत्वेन तदभावरूपावसरमङ्गलत्वभावान्न सा कर्तुं शक्येत्यर्थः । ननु कथं विषयलाभाऽभावः ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

काङ्क्षा न भवेदित्यस्य प्रयोजनमाहुः—'आनन्तर्ये त्वि'ति संन्यासानुपपत्तिश्चेत्यन्तम् । मीमांसकमत आक्षिप्तस्यापि शब्दबोधे भाने स्वीक्रियते । एवं च वेदाध्ययनं विना विचारो न भवतीत्यनुपपत्त्याऽध्य-यनानन्तर्यमाक्षिप्यत इत्याक्षेपादेव तस्य लाभेऽथशब्देनाधिकं किं बोद्धव्यमित्यधिकाकाङ्क्षा भवेदित्यर्थः। ननु भवत्वधिकाकाङ्क्षा । अधिकं किञ्चित्कल्पते (?) इत्यत आह–'तथा सती'ति । तदभावात्

श्रीभिर्विरचिता वेदान्तचन्द्रिका ।

न्तर्येऽधिकारे चाऽथशब्दप्रयोगादर्थद्वयं तथेत्यर्थः । तत्राऽधिकारपक्षस्याऽभिमतत्वादानन्तर्यपक्ष एव बाधकानि प्रदर्शयन्ति–'आनन्तर्ये त्वि'ति । 'सिद्धत्वादि'ति । विचाराऽन्यथाऽनुपपत्त्यैव सिद्ध-तया तदानन्तर्यस्याऽनन्यलभ्यो हि शब्दार्थ इति न्यायेन न तदर्थकत्वमथशब्दस्य वक्तुं शक्यमिति, ततोऽध्ययनादधिकस्याऽन्वयव्यतिरेकसिद्धकारणमात्रस्य पदार्थस्याऽऽकाङ्क्षा भवति । तस्यां च सत्यां तादृशस्य च कस्याप्यर्थस्याऽसत्त्वाद्विशेषणाऽभावप्रयुक्तविशिष्टाऽभावेन विशिष्टजिज्ञासास्वरूपासिद्ध्या योग्यत्वादस्य वाक्यस्य प्रवर्तकत्वाऽभावान्न विचारः सिद्ध्येदित्यर्थः । तादृशाऽधिकाभावप्रकारमेव

श्रीबालम्भट्टकृता गूढार्थदीपिका ।

पक्ष्यमाणरीत्या न कस्याप्यानन्तर्यमायातीत्यानन्तर्यप्रतियोगिन आकाङ्क्षैव तिष्ठेत्। तदेतदुक्तम् । तथा सति तदभावान्न विचारः सिध्येत् । अतो जिज्ञासाया असिद्ध्या पुरुषार्थो न सिद्ध्यति । अधिकारार्थत्वे त्वाग्रहादिरूपप्रतिबन्धकाऽभावाज्जिज्ञासायाः साफल्ये प्रवृत्तविचारे कृते तत्साधनाऽवगतौ पुरुषार्थः

भगवदीयश्रीमदिच्छारामकृतः प्रदीपः ।

स्याभावादित्यर्थः । सत्यकल्पनं अथशब्दस्याप्रसक्तार्थान्तरोपक्रमार्थत्वकल्पनम् । स्वतःसिद्धत्वात् अन्यथानुपपत्तिसिद्धत्वात् । अधिकाकाङ्क्षा अथशब्दस्याधिकाकाङ्क्षा । 'तथा सती'त्यादि । तथा वेदोपादर्शनानन्तरस्य पूर्वप्रकृतस्याकाङ्क्षितस्याधिकारस्याप्राप्तत्वादथशब्दोऽनर्थक एव स्यात् । तथा सति वाक्यस्य विचारकर्तव्यताबोधकत्वमपि न स्यादित्यर्थः ।

तथाहि न तावद्धर्म्मविचारानन्तर्य्यम् । विपर्य्ययसम्भवात् । न च पाठतो नियमः ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

अध्ययनातिरिक्तधर्मविचारात्मकविषयस्य लाभादित्याशङ्क्य तदभावप्रकारमाहुः—'**तथाही**'ति । '**न तावदि**'ति । न हि धर्मविचारानन्तर्यमत्र वक्तुं शक्यम् । धर्मजिज्ञासायाः पूर्वमप्यधीतस्वाध्यायेन ब्रह्मविचारस्य कर्तुं शक्यत्वेनाऽऽनन्तर्यविपर्ययस्याप्यत्र सम्भवात् । न'**न्वासुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तये**'त्यादिवाक्यैर्विचारस्य सर्वदैव कर्तव्यत्वमापतति । तच्च शुद्धेन्तःकरणे भवति । सा च निष्कामकर्मानुष्ठानेनेति तदर्थं धर्मजिज्ञासायाः पूर्वमपेक्षितत्वेन कथं धर्मजिज्ञासां विना ब्रह्मजिज्ञासोपपत्तिः । अत एव '**गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेदि**'ति जाबालश्रुतिर्गार्हस्थ्येन धर्मानुष्ठानं सूचयति । स्मृतिरपि '**अधीत्य विधिवद्वेदान्पुत्रानुत्पाद्य धर्मतः । इष्ट्वा च शक्तितो**

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

कस्याप्यधिकस्याऽभावात् । तदेवोपपादयन्ति—'**तथा ही**'त्यादिना । '**विपर्ययसम्भवादि**'ति । '**अथातो धर्मजिज्ञासे**'ति पूर्वतन्त्रसूत्राथशब्दस्याप्यानन्तर्यत्वेन ब्रह्मविचारानन्तरं धर्मविचार इत्यस्यापि सम्भवादित्यर्थः । '**पाठत**' इति । पूर्वं वेदैर्धर्मः पठ्यतेऽनन्तरं ब्रह्मेति तदेवाथशब्दस्य धर्मानन्तर्यार्थत्वे नियामकमित्यर्थः । **तत्रापि पाठेऽपि । तथा अनियमः । तत्रापि** आचारेऽपि । '**प्रत्यवाये**'ति । विध्युक्तक्रमभङ्गे प्रत्यवायः । यथा षष्ठाष्टके तृतीये प्रपाठके पशुप्रकरणेऽवदानक्रमो विहितः । तथाहि **हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसो यद्वै हृदयेनाभिगच्छति तज्जिह्वया वदति यज्जिह्वया वदति तदुरसोऽधिनिर्वदत्येतद्वै पशोर्यथा पूर्वमिति** । अत्र भाष्यम्—लोके प्रथमं हृदयेन यन्निश्चिनोति तत्पश्चाज्जिह्वया वदति । पुनरपि तदेव निःशेषेणोच्चध्वनिना यदा वदति तदानीमुरस ऊर्ध्वदेशगतबलेन वदति । तस्माद्धृदयादीनां त्रयाणामनेनक्रमेणावद्येत । एतदेव क्रमावदानं पशोरङ्गेषु यथा पूर्वं भवति । यथा लोकेभिवादनव्यवहारः पूर्वं प्रवृत्तस्तथैव भवतीति । अत्र तु तदभावाद्विहितक्रमाकरणनिमित्तप्रत्यवायाभावादिति भावः । नन्वाचारस्य श्रुतिस्मृतिमूलकत्वेन प्रामाण्यात्क्वचिच्छ्रुतौ कर्मब्रह्मविचारयोः क्रमो विहितः स्यादिति

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

प्रदर्शयन्ति—'**तथाही**'त्यादिना । अधिकाऽऽकाङ्क्षापूरकतया धर्मविचारानन्तर्यस्य बहुवादिसम्मतत्वात्तदेवादौ निषेधन्ति । '**न तावदि**'ति । तत्र हेतुमाहुः—'**विपर्यये**'ति । हृदयाद्यवदानक्रमवदिह क्रमबोधकप्रमाणाऽभावाद्धर्मजिज्ञासायाः प्रागपि ब्रह्मजिज्ञासायाः कर्तुं शक्यत्वादित्यर्थः । ननु '**गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेदि**'त्यादिश्रुत्या, '**अधीत्य विधिवद्वेदान्पुत्रानुत्पाद्य धर्मतः । इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेदि**'त्यादिस्मृत्या च, बोधिताश्रमधर्मक्रमेणैव धर्मब्रह्मजिज्ञासयोः सिद्धशेषशेष्यादिभावेनोभयोः क्रमस्याऽपि सिद्धत्वात् कथं विपर्ययसम्भव इति चेत् । सत्यम् । यदि चेतरथा **ब्रह्मचर्यादेव प्रव्रजेद्यदहरेव विरजेत्तदहरेव प्रव्रजेदि**-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

अधिकारमात्रार्थत्वस्थापनार्थमन्यार्थतां दूरीकुर्वन्ति—'**तथा ही**'त्यादिना । **धर्मविचारानन्तर्यं** कर्मविचारानन्तर्यमथशब्दार्थ इत्यर्थः । **विपर्ययसम्भवात्** ब्रह्मविचारानन्तरं कर्मविचार इत्यपि सम्भवात् । 'अथ हृदयस्याग्रे अवद्यति अथ वक्षस' इतिवत् क्रमनियामकवाक्यस्याभावादित्यर्थः । **पाठतः** पूर्वं वेदे धर्मः पठ्यतेऽनन्तरं ब्रह्मेति तदेवाथशब्दस्य धर्मानन्तर्यार्थत्वे नियामकमि-

तत्रापि तथा । न चाचाराद्व्यवस्था । तत्राप्यनियमसम्भवात् । प्रत्यवायाश्रवणात् । सम्भवेऽपि न वक्तव्यत्वम् । अध्ययनवत् । तथा च ततोऽप्याकाङ्क्षा भवेत् ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

**यज्ञैर्मनो मोक्षे निवेशयेदि**'ति । निन्दति च कर्मानुष्ठानं विना मोक्षे मनोनिवेशनम् । **अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान् । अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन्व्रजत्यध**' इति । तच्च धर्मानुष्ठानं धर्मज्ञानापेक्षम् । तच्च धर्मजिज्ञासां विना न सम्भवति । अर्थक्रमस्याप्यत्र सम्भवात्कथं विपर्ययसम्भव इति चेत् । अत्रोच्यते । '**यथा हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस**' इत्यत्राऽथाऽग्रशब्दाभ्यां क्रमो विवक्षितो, न तथेह जाबालश्रुतेः क्रमविवक्षा । **यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वे**ति श्रुत्यन्तरेण कर्मानुष्ठानक्रमाभावप्रदर्शनमुखेन वैराग्यस्यैव तत्कारणत्वेन प्रदर्शितत्वात् । अत एव '**यदहरेव विरजेत्तदहरेव प्रव्रजेदि**'ति श्रुतिः । निन्दावचनं चाशुद्धसत्त्वपुरुषाभिप्रायम् । अविशुद्धसत्त्वो हि पुरुषो मोक्षमिच्छंस्तदशुद्ध्या तदुपायेऽप्रवर्तमानः गृहस्थधर्ममपि नित्यनैमित्तिकमकुर्वन्प्रत्यहं वर्धमानकल्मषोऽधो गच्छतीत्यर्थः । तथा चाविशुद्धसत्त्वस्य नित्यनैमित्तिककर्मानुष्ठानेन पापनिवृत्तावपावरणे प्रत्यक्षोपपत्तिभ्यां संसारस्याऽनित्याशुचिदुःखरूपतामप्रत्यूहमवबुद्ध्याऽस्मिन्ननभिरतिसंज्ञवैराग्यद्वारा जिज्ञासोपावर्तते । ततस्तद्धानोपायं पर्येषमाण, आत्मतत्त्वज्ञानमेव तत्साधनमित्यवगत्य तत्कारणाकाङ्क्षायां '**श्रोतव्यो मन्तव्य**' इत्यादिश्रुतिपर्यालोचनेन श्रवणादीनां तत्कारणत्वमवबुद्ध्य उपक्रमादिभिस्तत्सिद्ध्यनुकूलमनोव्यापाररूपं विचारं चिकीर्षुरवतिष्ठते । यस्तु पुनः प्राग्भवीयकर्मवशाद्विशुद्धसत्त्वः संसारासारतादर्शननिष्पन्नवैराग्यः, कृतं तस्य कर्मानुष्ठानेन वैराग्यजनकेन । प्राग्भवीयकर्मानुष्ठानादेव वैराग्यस्य सिद्धत्वात् । इममेवाधिकारिणमधिकृत्य यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेदिति श्रुतिः प्रवृत्ते । '**विविदिषन्ती**'त्यादिका त्वविशुद्धसत्त्वप्रतीतिर्न श्रुतीनां विरोध इत्यर्थः । तथा चाऽथशब्दस्यानन्तर्यार्थत्वे यत्पूर्ववृत्तं नियमेनापेक्ष्यते तदानन्तर्यस्य वक्तुमुचितत्वाद्धर्मजिज्ञासायाश्च नियमेन पूर्ववर्तित्वाभावान्न तयाप्याकाङ्क्षापूरणमिति प्रतिबन्धकसत्त्वे ब्रह्मजिज्ञासाया असम्भवात्प्रतिज्ञासूत्रमसङ्गतमेव भवेदित्यर्थः । ननु धर्मविचारस्य नियतपूर्ववर्तित्वं पाठक्रमेण भविष्यतीत्याशङ्क्याऽऽह—'**न च पाठत**' इति । अध्ययनविधिना हि स्वाध्यायमात्रस्य क्रमाक्रमौदासीन्येन विषयीकृतत्वेनाऽक्रमेणापि तत्पाठे विधिबोधितफलोपपत्तेः । नन्वेवमध्ययनविधेः क्रमनियामकत्वाऽभावेऽपि शिष्टाचारस्य तन्नियामकत्वं कस्मान्न भवती-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

निहिताकरणरूपप्रत्यवायः सम्भवेदित्यत आहुः—'**सम्भवेऽपी**'ति । '**न वक्तव्यत्वमि**'ति । अथशब्देन न बोद्धव्यत्वमित्यर्थः । '**अध्ययनवदि**'ति । अन्यथानुपपत्त्या कर्मविचारस्यापि पूर्वत्व-

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

त्यादिश्रुतिभिराश्रमधर्मानुष्ठानक्रमस्याऽनियततयावबोधनान्न पूर्वोत्तरमीमांसयोरङ्गाङ्गित्वसिद्धिरिति न विपर्ययो वाच्येत । नन्वेवं नियतत्वाद्वैराग्याऽऽनन्तर्यमेवाऽस्त्विति चेत् न । एतत्पक्षं स्वयमेव निराकरिष्यन्ति भगवद्भाष्यकारा इति ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

सिद्धेदिति भावः । '**सम्भवेऽपि न वक्तव्यत्वमध्ययनवदि**'ति । धर्मविचारानन्तर्यनियमस्य सम्भवेऽपि धर्मविचारानन्तर्यस्य न वक्तव्यत्वम् । तत्र दृष्टान्तः । अध्ययनवत् । यथा वेदाध्ययनस्य

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

त्याशङ्क्य नेत्याह—'**न चाऽऽचारादि**'ति । तत्रोपपत्तिमाह—'**तत्रापी**'ति । नहि सर्वैरवशिष्टैः क्रमेणाध्ययनं विधीयत इत्यत्र प्रमाणमस्ति । केषांचिदध्ययने क्रमाभावस्यापि दृष्टत्वात् । नन्वेवं सर्वेषामध्ययनस्यैकरूपत्वाभावे किं नियामकमित्यत आह—'**प्रत्यवायाश्रवणादि**'ति । व्युत्क्रमेणाध्ययने प्रत्यवायश्रवणे शिष्टानां तन्निवृत्तिः स्यान्न चात्र तच्छ्रवणमस्ति । तेन शिष्टानां क्रमेणाऽक्रमेण वा पाठस्य सम्भवान्न तदाचाराव्द्यवस्था कर्तुं शक्येति भावः । ननु '**ऋचां मूर्द्धानं यजुषामुत्तमाङ्गं साम्नां शिरोऽथर्वणां मुण्डमुण्डं नाधीतेऽधीते वेदमाहुस्तमज्ञं शिरश्छित्वाऽसौ कुरुते कबन्ध**'मित्यादिश्रुतौ वेदाध्ययनानन्तरमुपनिषदामनध्ययने बाधकस्योक्तेः शिष्टानां तथैवाऽऽचारस्य सम्भवात्तन्नियामकत्वं कस्मान्न भवतीत्याशङ्क्याऽऽहुः—'**सम्भवेऽपी**'ति । वस्तुतस्तस्यां श्रुतौ पूर्वकाण्डमात्राध्ययने बाधकस्योक्तेः काण्डद्वयाध्ययनस्य प्राप्तावपि क्रमोपस्थितेरभावान्नास्याः श्रुतेः क्रमविशिष्टतदाचारनियामकत्वम् । अत एवापिशब्द उक्तः । यथाकथञ्चित्तन्नियामकत्वोपगमे तु नाऽथशब्दवाच्यत्वं तस्य सम्भवति । तत्र दृष्टान्तमाह—'**अध्ययनवदि**'ति ।

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

बोधादित्यर्थः । पूर्वोक्तदूषणमाहुः—'**तथा चे**'ति । '**आकाङ्क्षा भवेदि**'ति । अधिकाकाङ्क्षा भवेदित्यर्थः । ननु माऽस्तु कर्मविचारानन्तर्यम् । वैराग्यादिसम्पन्नानामेव वेदान्तविचारेऽधिकारात्तदा·

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

ननु कर्मानुष्ठानक्रमस्याऽनियतत्वेऽपि नियतवेदवेदान्तपाठक्रमादेव धर्मविचारानन्तर्यनियमोऽस्त्वित्याशङ्क्याऽऽहुः—'**न चे**'ति । '**तत्रे**'ति । क्रमपक्षेऽपि जिज्ञास्यफलभेदेनैवाङ्गाऽङ्गित्वासम्भवेन तथाविपर्ययसम्भवात् । तत्र पूर्वोत्तरकाण्डपाठ इतिवार्थः । शेषं पूर्ववत् । अध्ययनविधिना हि क्रमाक्रमौदासीन्येनैव स्वाध्यायाऽध्ययनमात्रस्य विषयीकृतत्वात् । नन्वेवमध्ययनविधेः क्रमाऽप्राप्तावपि शिष्टाचारात्तथाऽस्त्वित्याशङ्क्याऽऽहुः—'**न चे**'ति । तत्र हेतुः—'**तत्रापी**'ति । शिष्टाचारेऽपि व्युत्क्रमाऽध्ययनस्याऽपि दृष्टत्वात् । ननु व्युत्क्रमाध्ययने हि कथं शिष्टत्वमित्यत आहुः—'**प्रत्यवाये**'ति । ननु ब्रह्मविचारस्य धर्ममीमांसोपनिषच्छास्त्रप्रक्रिययैव करिष्यमाणत्वात्कथं न तदानन्तर्यसम्भव इत्यतश्चाहुः—'**सम्भवेऽपी**'ति । धर्मविचारानन्तर्यसम्भवेऽपि नाऽथशब्दार्थत्वेन निरूप्यत्वम् । स्वतःसिद्धत्वात् । तत्र दृष्टान्तमाहुः—'**अध्ययने**'ति । स्वाध्यायाध्ययनानन्तर्यवदित्यर्थः । '**ततोऽपी**'ति । धर्मविचा-

भगवदीयश्रीमद्विष्णुरामप्रणीत प्रदीप ।

त्यर्थः । **तत्रापि** पाठेपि तथा । विपर्यये बाधकाभावादित्यर्थः । ननु पाठक्रमे नियामकाभावादस्तु तथा । तथापि विचारस्तु शिष्टाचाराद्ब्रह्मणो धर्मविचारानन्तरमेव भविष्यतीत्याहुः—'**न चे**'त्यादि । **तत्रापि** विचारेपि । **प्रत्यवायाश्रवणात्** विपरीतविचारे प्रत्यवायबोधकवाक्याभावादित्यर्थः । ननु धर्मविचारे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां श्रुतिस्मृतिप्रामाण्यप्रबलदुर्बलभावानां विधिमन्त्रार्थवादानां निरूपणात्, निरूप्यमाणानां तेषां चोत्तरमीमांसायामुपयोगात्, धर्मविचारानन्तर्यमथशब्दार्थः कुतो न स्यादत आहुः—'**सम्भवेपी**'त्यादि । **अध्ययनवत्** अन्यथानुपपत्त्यैव पूर्वं धर्मनिरूपणमनन्तरं ब्रह्मनिरूपणमितिलाभात् । अनन्यलभ्यस्यैव शब्दार्थत्वात् । अथशब्दवाच्यत्वं तादृशानन्तर्ये न

१ क्रमविशिष्टानामिति पुस्तकम् । २ पुस्तके तुर्नास्ति । ३ अत्र पुस्तके मूलपाठेन पाठः ।

नच वैराग्यशमदमादिः पूर्वसिद्धः । तेषामेवाऽभावात् । नच यदैव सम्भवस्तदैव तत्कर्तव्यमिति वाच्यम् । तदसम्भवापत्तेः । तथाहि—ब्रह्मणः परमपुरुषार्थत्वे ज्ञाते तज्ज्ञा-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

यथाध्ययनस्य स्वतःसिद्धत्वेन नाकाङ्क्षानिवर्तकत्वं, तथा शिष्टाचारलब्धपाठक्रमायत्तधर्मविचारस्यापि स्वतएव सिद्धत्वेन नाऽऽकाङ्क्षानिवर्तकत्वम् । तथा च ततोऽप्यधिकस्यान्यस्याऽऽकाङ्क्षा भवेदित्याह—'तथा चे'ति । ननु वैराग्यशमदमादिनित्यानित्यवस्तुविवेकमुमुक्षुत्वादिसाधनानन्तर्यमेवाऽथशब्दार्थः कस्मान्न भवतीत्याशङ्क्याऽऽह—'न चे'ति । वैराग्यादिसाधनानां कदाचित् ब्रह्मविचारात्पूर्वमसत्त्वे कथं तदानन्तर्यमत्र वक्तुं शक्यम् । ननु यदैव तेषां सम्भवस्तदैव विचारः कर्तव्य इति चेत्तत्राह—तदसम्भवापत्तेरि'ति । तेषां वैराग्यादीनामसम्भव एवात्रास्ति । कुतः कादा-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

नन्तर्यमथशब्देन बोद्धव्यमित्याशङ्कते—'न चे'ति । न हीत्यर्थः । 'तेषामि'ति । पराञ्चिखानीत्युपनिषदेन्द्रियाणां बहिर्मुखता प्रतिपादिता । तेन चेहामुत्रभोगार्थं सामान्यतः पुरुषः प्रवर्तते । अतो नित्यानित्यवस्तुविषयकान्तराविचारं विना वैराग्यादीनामसम्भवादित्यर्थः । वेदान्तविचारं विनैव यस्य कस्यचित्पुरुषस्य यागादिना चित्तशुद्धौ यदैव वैराग्यादीनां सम्भवस्तदैव कर्तव्यमित्याह—न चेति । तन्निरूपणम् । 'तदसम्भवापत्तेरि'ति । अन्योन्याश्रयदोषेणेत्यादिः । तयोर्विचारवैराग्ययोः असम्भवापत्तेरित्यर्थः । अन्योन्याश्रयमेवाऽऽहुः—'तथाही'त्यादिना । 'ज्ञात' इति । वेदान्त-

केनचिद्विरचिता वेदान्तचन्द्रिका ।

राऽऽनन्तर्यतः । अपिरध्ययनाऽऽनन्तर्यसमुच्चायकः । 'आकाङ्क्षे'ति । किमनन्तरं जिज्ञासेति । ननु वैराग्यादिसाधनचतुष्टयसंपत्त्यानन्तर्यमेवाऽथशब्दार्थ इत्यादियतामिति चेत् । नेत्याहुः—'नचे'ति । आदिशब्देन नित्यानित्यवस्तुविवेकमुमुक्षुत्वे संगृह्येते । पूर्वसिद्धः । स्वाध्यायाऽध्ययनवन्नियतपूर्ववर्ती । तत्र हेतुमाहुः—'तेषामि'ति । अतिदुर्लभतया यस्य कस्यचिदेकस्य साधनस्य सिद्धावपि समुदितानां तेषां संपत्त्यभावात् । ननु नियमविधिरेवायं तत्संपत्तावेव सा कर्तव्येत्याशङ्क्याऽऽहुः—'न चे'ति । तत्रोपपत्तिः—'तदि'ति । तयोर्वैराग्यादिविचारयोरसम्भवाऽऽपत्तेः । कथमित्याकाङ्क्षायामाहुः—'तथाही'त्यादि । 'ब्रह्मण' इति । सत्यं विज्ञानमानन्दं ब्रह्म । यथेह कर्मचितो-

श्रीमल्लक्ष्मणभट्टकृता गूढार्थदीपिका ।

नियतपूर्ववर्तित्वान्नाऽऽकाङ्क्षापूरकत्वं तथा धर्मविचारस्याऽपीत्यर्थः । अधिकारार्थत्वं दृढीकर्तुं वैराग्यशमदमाद्यानन्तर्यमन्योन्याश्रयप्रदर्शनेन दूषयन्ति—'ब्रह्मणः परमपुरुषार्थत्वे ज्ञात' इत्यादि । ब्रह्मणः परमपुरुषार्थत्वज्ञानं, ब्रह्मज्ञानस्य मोक्षसाधनत्वज्ञानं, यागादीनां ब्रह्मज्ञानशेषत्वज्ञानं, ततस्तदनन्तरं ब्रह्मज्ञानोत्पत्त्यर्थं कर्माणि नित्यान्यग्निहोत्रादीनि यदा करोति तदा चित्तशुद्धिस्ततो वैराग्यशम-

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीप ।

वक्तव्यमित्यर्थः । ततोऽपि धर्मविचारानन्तर्यस्य ब्रह्मविचारे सत्त्वेऽपि । अधिकाकाङ्क्षा कस्यानन्तर्यमथशब्दार्थे इत्यधिकाकाङ्क्षा । ननु वैराग्यशमदममुमुक्षादिमत एव वेदान्तविचाराधिकारात् वैराग्याद्यानन्तर्यमेवाथशब्दार्थोऽस्त्वित्यत आहुः । न च 'वैराग्ये'त्यादि । तेषां वैराग्यादीनां । अभावात् असिद्धत्वात् । सम्भवः वैराग्यादीनां सम्भवः । कर्तव्यम् सम्भवोत्तरमेव वेदान्तनिरूपणं कर्त-

नस्यैव साधनत्वेऽवगते तच्छेषत्वे च यागादीनामवगते तदर्थकर्मकरणे चित्तशुद्धौ सत्यां वैराग्यादि। इदं च वेदान्तविचारव्यतिरेकेण न भवतीत्यन्योन्याश्रयः। निर्धारिते तु वेदान्ते विचारो व्यर्थ एव।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

चिरूमपि तयानन्तर्यं वक्तुं शक्यमिति भावः। कुतस्तदसम्भव इत्याकाङ्क्षायां तमेवोपपादयन्ति—'तथा-ही'ति। वैराग्यादीनि हि शुद्धेन्तःकरणे भवति। शुद्धिश्च'ऽऽत्मलाभान्न परं विद्यते' 'तरति शोकमात्मविदि'त्यादिश्रुतिपर्यालोचनेनाऽऽत्मलाभस्यैव सर्वपुरुषार्थापेक्षयाभ्यर्हितत्वं तज्ज्ञानस्यैव हि तत्साधकत्वं, ज्ञात्वा तत्साधनापेक्षायामग्निहोत्रादिसाधनानां तच्छेषत्वं 'विविदिषन्ती'त्यादिपर्यालोचनेनाऽवबुद्ध्य तदर्थकर्मकरणे भवति। एतच्च वेदान्तविचारानन्तरभावीत्यन्योन्याश्रयस्त-

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम्।

वान्स्यादिति शेषः। तच्छेषत्वे ब्रह्मज्ञानाङ्गत्वे। 'अन्योन्याश्रय' इति। अयं चक्रकस्याऽप्युपलक्षकः। ननु गुरुमुखात् पठनसमय एव वेदान्तार्थनिर्द्धारे जाते वैराग्यादि, तदा नान्योन्याश्रय इत्यत आहुः—'निर्द्धारिते'ति। निर्द्धारिते तु निश्चिते तु। वेदान्तार्थ इति शेषः। निश्चयस्य संशयोच्छेदकत्वान्निश्चये संशय एव नोदेतीति विचारो व्यर्थ इति भावः।

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

लोकः क्षीयत एवमेवाऽमुत्र पुण्यजितो लोकः क्षीयते। को ह्येवान्यात्। एष ह्येवानन्दयाति। एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'त्यादिश्रुतिभ्यः परमपुरुषार्थत्वेऽवगते, 'नान्यः पन्था विद्यतेऽयनाय' 'ज्ञानादेव तु कैवल्यं, ब्रह्मविदाप्नोति परमि'त्यादिश्रुतिभ्यस्तज्ज्ञानस्यैव तत्प्राप्तिज्ञानाऽनुकूलसाधनत्वेऽवगते, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'त्यादिश्रुतिभ्यो निष्कामकर्मणां ज्ञानानुकूलसत्वशुद्धिसम्पादकतया ज्ञानशेषत्वेऽवगते, श्रुत्यर्थानुष्ठितैर्यागादिभिश्चित्तशुद्धौ सत्यां वैराग्यशमादीनि भविष्यन्तीति। 'इदमि'ति। उक्तरीतिकं वैराग्यादिसाधनं वेदान्तविचारसाध्यम्। वेदान्तविचारश्च वैराग्यादिसाधनसम्पत्तिसम्पाद्य इति साऽवकाश एवेतरेतराश्रय इति नाऽयमपि पक्ष आदर्तुं योग्य इति भावः।

श्रीलालूभट्टकृता गूढार्थदीपिका।

दमादि। एवं सति पूर्वं ब्रह्मणः पुरुषार्थत्वज्ञानमपेक्षितम्। तद्विना न वैराग्यादि। अतो वैराग्यादेर्ब्रह्मज्ञानमाश्रयः। ब्रह्मज्ञानं च वेदान्तविचाराऽधीनम्। वेदान्तविचारस्य वैराग्याद्यानन्तर्यमपेक्षितमतो ब्रह्मज्ञानस्य वैराग्यादिकमाश्रयः। एवमन्योन्याश्रयदोषान्नाऽऽनन्तर्यमथशब्दार्थ इति हार्दम्।

ननु वैराग्याद्युत्पादिकां चित्तशुद्धिं तीर्थव्रतादिना सम्पाद्य वैराग्याद्युत्पत्तौ ब्रह्मविचारः सुखेन कर्तव्य इति कुतो नाऽऽनन्तर्यसम्भव इत्याशङ्क्याऽऽहुः—'इदं च वेदान्तविचारव्यतिरेकेणे'

भगवदीयश्रीमद्विट्ठलरामप्रणीत प्रदीपः।

त्यमित्यर्थः। तदसम्भवापत्तेः वेदान्तार्थनिर्णयात्पूर्वं वैराग्याद्यसम्भवापत्तेरित्यर्थः। परमपुरुषार्थत्वे परमफलरूपत्वे। तज्ज्ञानस्य ब्रह्मज्ञानस्य। साधनत्वे परमपुरुषार्थप्राप्तिसाधनत्वे। तच्छेषत्वे चित्तशुद्धिद्वारा ब्रह्मज्ञानसाधनत्वाङ्गीकारे। तदर्थकर्मकरणे निष्कामतया ब्रह्मज्ञानार्थं कर्मकरणे। वैराग्यादि, भवतीति पूरणीयम्। इदं च पूर्वोक्तक्रमेण वैराग्यादिनिष्पादनं च। अन्यो-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

त्वेनोभयोरप्यसम्भवापत्तिरित्यर्थः । ननु साङ्गस्वाध्यायाध्ययनविध्यापादिततदध्ययनमात्रेणैव तत्तात्पर्यस्य पूर्वमवगतत्वेन ज्ञानशेषत्वेन कर्मकरणसम्भवापत्तेः सुवचत्वेन सत्वाकारान्तःकरणे सर्वेहानिवृत्तिद्वारा वैराग्यादीनां सम्भवात्कुतस्तदानन्तर्याऽसम्भव इत्याशङ्क्य परिहरति—'निर्द्धारिते त्वि'ति । यदि वेदान्तवाक्यविचारव्यतिरेकेणैव साङ्गाध्ययनबलादेव तत्तात्पर्यावगमस्तदा ब्रह्मजिज्ञासाया निष्प्रयोजनत्वेन साधनचतुष्टयानन्तरमकर्तव्यत्वात्सूत्रकारस्य महता प्रयासेन करणं व्यर्थमेव भवेदित्यर्थः । ननु षडुपेताध्ययनविध्याऽऽपादिततदध्ययनमात्रेणैव तत्तात्पर्यावगमद्वारा वैराग्यादिसिद्धावपि न ब्रह्मजिज्ञासाया निष्प्रयोजनत्वम् । साङ्गाध्ययनेन हि तत्तात्पर्यावगमः शाब्दः । अत्र तु तत्साक्षा-

केश्चिद्विरचिता वेदान्तप्रग्रिया ।

नन्वध्ययनसामायिकेनैदम्पर्यावधारणमन्तराऽऽपातततो विचारफलेनाऽखिलवेदार्थज्ञानेनोत्कमणात्था हि वैराग्यादि, ततश्च सम्यग्विचारेण वेदान्तवाक्यानामैदम्पर्यावधारणरूपाऽखिलवेदान्तार्थनिश्चय इति विचारवैरूप्यान्नान्योन्याश्रय इति चेत् । मैवम् । 'ज्ञेयश्चे'ति विध्यनुरोधादध्ययनाऽवसर एव गुरुमुखादधिगतवेदार्थस्य पुंस ऐदम्पर्याऽवधारणरूपवेदार्थनिश्चयत्वान्मीमांसाया इति चेत् । न । सन्देहनिरासैकप्रयोजनत्वान्मीमांसायाः । [1] ननु साङ्गाऽध्ययनेन हि वाक्यतात्पर्यावगमः फलम् ।

श्रीबालभट्टकृता गूढार्थदीपिका ।

त्यादि । पूर्वोक्तरीत्योपनिषज्ज्ञानकारणं वैराग्यादीत्यर्थः । यथा 'तं त्वौपनिषदम्' इतिश्रुतेः केवलोपनिषद्वेद्यं ब्रह्म । उपनिषदुक्तप्रकारकमेव ब्रह्मज्ञानं पुरुषार्थसाधकम् । तथा उपनिषद्भिरेव जाते ब्रह्मणः परमपुरुषार्थत्वज्ञाने तदर्थकयागादिकरणे जातायां चित्तशुद्धौ यद्वैराग्यशमदमादि तदेवौपनिषदानामौपनिषदमोक्षवाचकमतो न ब्रततीर्थजन्यचित्तशुद्धिहेतुकं वैराग्यादिकं पुरुषार्थसाधकमतो भवत्येव पूर्वोक्तरीत्याऽन्योन्याश्रय इत्यर्थः । एतावता वेदस्य स्वतःप्रामाण्यमन्याऽनपेक्षकार्यत्वं, वेदैकसाध्यं साधनं फलं चेत्युक्तं भवति । यतो वेदप्रतिपाद्ये फले यत्साधनं चित्तशुद्ध्यादिकं, शमदमादिकं, तदपि वेदेनैवोदितेनाऽग्निहोत्रादिना सिद्ध्यतीत्यन्यनैरपेक्ष्यं वेदस्य । अन्यस्य तु वेदसापेक्षत्वमस्त्येवेति प्रमाणमूर्द्धन्यता श्रुतीनां सिद्धा ।

यदि पूर्वोक्तरीत्या ब्रह्मणः पुरुषार्थत्वज्ञानं ब्रह्मज्ञानस्य पुरुषार्थसाधकत्वज्ञानं तदर्थं यागादिकर्तव्यताज्ञानं ततस्तथैवाऽनुष्ठानं ततश्चित्तशुद्धिस्ततो वैराग्यादि स्यात्तदा वेदान्तविचाराधिकारः । एवं कल्पने तु विचारस्य वैयर्थ्यमायातीत्याहुः—'निर्द्धारिते तु वेदान्ते विचारो व्यर्थ एवे'ति । विचारकार्यस्य ब्रह्मणः परमपुरुषार्थत्वादिज्ञानस्य, पूर्वमेव जातत्वादित्यर्थः । ननु विचारस्य न वैयर्थ्यं ब्रह्म-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

न्याश्रयः आदौ वेदान्तविचारो वैराग्यादि वेतिस्थितावन्योन्याश्रय इत्यर्थः । ननु गुरुमुखादध्ययनकाले वेदान्तार्थनिर्धारे कृते पश्चाद्वैराग्यादिसम्पत्त्युत्तरकालं वेदान्तविचारः कर्तव्य एव सत्यन्योऽन्याश्रयगन्धोऽपि नेत्यत आहुः—'निर्द्धारिते'त्यादि । ननु गुरुसन्निधाने वेदान्तार्थनिर्णयस्य जातस्य वैराग्यादावुपयोगः । वैराग्याद्युत्तरवेदान्तार्थविचारस्य तु ब्रह्मसाक्षात्कारः फलमिति न विचारवैयर्थ्यमत

[1] निष्प्रयोजनत्वे तत्साधनेत्यादि कपुस्तकपाठः ।

न च साक्षात्कारस्तत्फलम् । तस्य शब्दशेषत्वेन, तत्कल्पनायां प्रमाणाभावात् । 'दशमस्त्वमसी'त्यादौ प्रत्यक्षसामग्र्या बलवत्त्वाद्देहादेः प्रत्यक्षत्वात्स्वदेहमपि पश्यन् दश-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

त्कारस्य-तत्फलत्वेन जिज्ञासायाः सप्रयोजनत्वात्कर्तव्यत्वोपपत्तौ कथं वैयर्थ्यमित्याशङ्क्य परिहरन्ति—'न च साक्षात्कार' इति । तत्रोपपत्तिमाहुः—'तस्ये'ति । विचारस्य ह्युपक्रमादिभिर्लिङ्गैर्वेदान्तवाक्यान्तर्गतशब्दतात्पर्याऽवधारणानुकूलमानसव्यापारविशेषत्वेन शब्दशेषत्वात्कथं साक्षात्कारफलकत्वं वक्तुं शक्यम् । शब्दस्य हि साक्षात्कारफलकत्वं प्रतितन्त्रन्यायेन न कुत्रापि सिद्धमिति कुतस्तरां तच्छेषभूतस्य विचारस्य तत्सम्भवतीति भावः । ननु देवदत्तेन दशमस्त्वमसीत्युक्ते विष्णुमित्रो दशमोऽहमिति मन्यते । तत्र देवदत्तवाक्यस्यैव दशमोऽहमित्याकारकसाक्षात्कारस्य फलकत्वस्य प्रत्यक्षतो दृष्टत्वेन शब्दस्य कथं न तत्फलकत्वमित्याशङ्क्य समाधत्ते—'दशमस्त्वमसीत्यादावि'ति ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

ननु विचारस्यात्मसाक्षात्कारार्थत्वमेवास्त्वित्यत आह—'न चे'ति । तस्य विचारस्य । शब्दशेषत्वेन शब्दाङ्गत्वेन । शब्दजन्यशाब्दबोधोपयोगित्वेनेति यावत् । तथा च शाब्दबोध एव भविष्यति न साक्षात्कार इत्यर्थः । ननु दशमस्त्वमसीत्यादौ दशमोऽहमित्याकारकं प्रत्यक्षं दृश्यत इत्यत आहु.-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

मीमांसायास्तु तत्साक्षात्कार इति फलभेदान्न वैय्यर्थ्यं जिज्ञासाया इत्यत आहुः—'न चे'ति । तत्रोपपत्तिः—'तस्ये'ति । विचारशास्त्रस्य संशयनिवारकतया वाक्याङ्गत्वेन साक्षात्कारफलकत्वकल्पनायां तथा । शब्दस्यैव यत्र न तत्फलत्वं कुतस्तरां तत्र तच्छेषभूतस्य तस्य तथात्वमिति भावः । ननु केनचिद्दशमस्त्वमसीत्युक्ते कश्चिद्दशमोहमिति प्रत्यक्षं मनुते । तत्र वक्तुर्वाक्यस्य दशमोहमित्याकारकप्रत्यक्षफलकत्वं प्रत्यक्षत एव दृष्टमिति कथं प्रमाणाऽभाव इत्यत आहुः—'दशम' इति । 'प्रत्यक्षे'ति ।

श्रीलालभट्टकृता गूढार्थदीपिका ।

साक्षात्कारफलकत्वाद्विचारस्येत्याशङ्क्याऽऽहुः—'न च साक्षात्कारः फलमि'ति । ब्रह्मसाक्षात्कारो विचारस्य न फलमित्यर्थः । तत्र हेतुः—'तस्य शब्दशेषत्वेने'त्यादि । विचारस्य वेदान्तशब्दशेषत्वाच्छब्दस्य च परोक्षप्रमाजनकत्वेन साक्षात्काराऽनुत्पादकत्वात् । ननु दशमस्त्वमसीत्यादौ शब्दादपरोक्षस्यानुभूतत्वादत्रापि तथास्त्वित्याशङ्क्याऽऽहु—'दशमस्त्वमसीत्यादावि'त्यादि । दशम-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

आहु.—'नचे'त्यादि । तत्फलं विचारफलम् । तच्च नेत्यर्थः । निषेधे हेतुमाहुः—'तस्ये'त्यादि । तस्य, पूर्वमीमांसोक्तपदप्रमाणानामाकाङ्क्षायोग्यतासन्निधीनां वोचितानुचितत्वविचारेण वेदान्तवाक्यार्थशाब्दबोधे निर्णेतव्ये विचारस्य शाब्दबोधसामग्रीमध्यनिवेशेन शाब्दबोध एवोपक्षीणत्वं, न तु शाब्दसामग्र्या. ब्रह्मसाक्षात्कारकारणत्वमपि । साक्षात्कारकारणत्वकल्पनायां प्रमाणाभावादित्यर्थः । ननु शब्दादपरोक्षमपि 'दशमस्त्वमसी'त्यादौ सर्वजनानुभवसिद्धमिति 'तत्त्वमस्या'दिवेदान्तवाक्येभ्यो विचाराज्जायमानं साक्षात्काररूपमपि कुतो न स्यादित्यतो दृष्टान्तवैषम्यं शब्दादपरोक्षं च, द्वयं निषेद्धुमाहु.-

१ साक्षात्कार फलमित्यपि पाठः । २ तथेति क्पुस्तकम् ।

मोऽहमिति मन्यते । न तथा प्रकृते । मनननिदिध्यासनविधीनामानर्थक्यप्रसङ्गात् । न चा-

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या ।

न हि तत्र शब्देन साक्षात्कारो जन्यते । किन्तु प्रत्यक्षसामग्र्याः शब्दाद्यपेक्षया बलवत्त्वाच्छब्दस्य सहकारिकत्वमात्रम् । न तु साक्षात्तज्जनकत्वम् । नन्वेवमत्रापि तन्न्यायेन विचारस्य सहकारित्वेनैवो-पयोगोऽस्त्वित्याशङ्क्य वैषम्यप्रदर्शनेन तन्निषेधति—'न तथा प्रकृतेऽपी'ति । दशमस्त्वमसीत्यादौ

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

'दशम' इति । 'बलवत्त्वादि'ति । समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वादित्यर्थः । 'पश्यन्नि'ति । चक्षुःसन्निकर्षरूपसामग्र्येत्यादिः । 'मन्यत' इति । दशमः क गत इति व्यामोहाक्रान्ते पुरुषे, दशम-स्त्वमसीति परेण बोधिते सङ्ख्यारूपे दशमत्वे, चक्षुःसंयुक्तदेहसमवायरूपसन्निकर्षात्कृशोऽहमिति-वद्दशमत्वविशिष्टोऽहमिति देहविषयकप्रत्यक्षं जायत इति भावः । 'न तथा प्रकृत' इति । प्रकृते विचारे न तथा । वाक्याद्देहवद्ब्रह्मत्वेनात्मसाक्षात्कारो न भवतीति दृष्टान्तवैषम्यम् । ब्रह्मत्वात्मनो(?)-

केनचिद्विरचिता वेदान्तचन्द्रिका ।

आलोकसमनस्केन्द्रियार्थसन्निकर्षादेः सिद्धत्वात् । 'दशमोऽहमि'ति । दशमस्त्वमसीति वाक्यार्था-वगत्युत्तरं दशमत्वसङ्ख्याविशिष्टं स्वात्मानं विषयीकरोति । न तु वाक्यश्रवणाऽव्यवहितोत्तरक्षण इत्यर्थः । किञ्च दशमस्त्वमिति वाक्यार्थमवगत्य यदि दशमोऽहमिति प्रत्यक्षं, तदा तु दशमं मामसौ मूत इति तद्वाक्यार्थविचारसहकृतया प्रत्यक्षसामग्र्यैव दशमत्वविशिष्टं स्वदेहं प्रत्यक्षीकरोतीति न शब्दस्य तत्कारणत्वम् । अथाऽनवगत्यैव तदर्थं, तदा तु सुतरां न तत्कारणत्वम् । तस्य ग्रहिलतया तत्कारणत्वे तु घटोऽस्तीति वाक्यादपि दशमोऽहमिति साक्षात्कारापत्तिश्चेत्यवधेयम् । 'न तथे'ति । प्रकृते विचा-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

स्त्वमसीत्यादौ न शब्दादपरोक्षज्ञानं, किन्तु प्रत्यक्षप्रमाजनकसामग्र्या देहात्मकविषयादिरूपया जनितं चाक्षुषमेवेदं ज्ञानमिति तदाहुः—'प्रत्यक्षसामग्र्या बलवत्त्वादि'ति । 'देहादेः प्रत्यक्षत्वा-दि'ति । देहादेश्चक्षुरादिगम्यत्वादित्यर्थः । 'स्वदेहमपि पश्यन्नि'ति । स्वदेहस्य चक्षुर्यो-ग्यत्वात्स्वदेहमपि पश्यन्नित्यर्थः । तथा च यथा घटं पश्यन् घटोऽयमिति मन्यते । तदेव तच्चाक्षुषं ज्ञानम् । तथा दशमं स्वदेहं पश्यन् दशमोऽहमिति मन्यते । तदेतच्चाक्षुषज्ञानमित्यर्थः । दशमस्त्वमसीति शब्दश्रवणात्तु जायमानं ज्ञानं परोक्षमेव । [illegible] दशमोऽसीत्याकारकम् । न तु दशमोऽहमित्याकारकम् । युष्मच्छब्दप्रयोगात् । असीति मध्यमपुरुषप्रयोगाच्च । न हि युष्मच्छब्दोऽ-स्मच्छब्दवाच्यमात्मानं बोधयितुं शक्नोति । किन्तु दशमस्त्वमसीति वाक्यश्रवणाज्जायमानं ज्ञानं दशमो-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

'दशमस्त्व'मित्यादि । बलवत्त्वात् शाब्दप्रत्यक्षोभयसामग्रीसवलने प्रत्यक्षसामग्र्याः कार्यस्य दृष्ट-त्वादित्यर्थः । प्रत्यक्षसामग्रीमुपपादयन्ति—'देहादे'रित्यादिना । मन्यते इति । तथा च पूर्वं देहचक्षुः-सन्निकर्षदशायां दशमत्वविशेषणबाधनिश्चयाभावविशिष्टा प्रत्यक्षसामग्र्येव न स्थिता वाक्यश्रवणानन्तरं त्वबाधितदशमत्वविशेषणविशिष्टसंबोध्यज्ञाने जाते पश्चात्प्रत्यक्षसामग्र्या देहांशे लौकिकं दशमत्वांशेऽलौ-किकं सुरभिचन्दनमितिवद्दशमोऽहमितिप्रत्यक्षमेव जायते न तु शाब्दमिन्न प्रत्यक्षमपि । त्वमसीत्युक्त्वा-

१ सहकारित्वमिति कपुस्तकम् । २ यत्रापीत्यादिमात्र कपुस्तके । ३ ब्रह्मात्मनोरिति स्यात् । ४ तदिवेति स्यात् ।

**धिकारिभेदः कल्पनीयः । शब्दज्ञाने तत्कल्पनायां प्रमाणाभावात् । अत्यन्ताऽसत्यप्यर्थे**

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

शब्दप्रत्यक्षसामग्र्योरुभयोरप्येककालावच्छेदेन सत्त्वेनैकस्य बलवत्त्वमपरस्य तत्सहकारित्वम् । न चात्र ब्रह्मजिज्ञासाकाले तत्साक्षात्कारस्य तत्सामग्र्या वा सत्त्वमस्ति येन तन्न्यायेनैकस्य मुख्यत्वमपरस्य सहकारित्वं कल्प्येत । तत्सत्त्वे बाधकमाह—'**मनने**'ति । यदि जिज्ञासाकालेऽपि साक्षात्कारस्य तत्सामग्र्या वा सम्भवस्तदा '**मन्तव्यो निदिध्यासितव्य**' इति मनननिदिध्यासनविधीनामानर्थक्यमेव भवेत् । तत्फलस्य श्रवणाव्यवहितोत्तरक्षण एव सत्त्वादिति भावः । ननूत्तमाधिकारिणः श्रवणाऽव्यवहितोत्तरक्षण एव साक्षात्कारसत्त्वेऽपि मन्दमध्यमयोस्तदसत्त्वान्मननादिविधीनामानर्थक्यं न । शब्दस्याधिकारिविशेष एवाऽपरोक्षज्ञानजनकत्वस्याङ्गीकारादित्याशङ्क्य परिहरन्ति—'**न चाधिकारिभेद**' इति । कुत इत्याकाङ्क्षायामाह—'**शब्दज्ञान**' इति । तत्कल्पनायामधिकारिभेदेन परोक्षत्वापरोक्षत्वकल्पनायाम् । कथं प्रमाणाभाव इत्याशङ्क्याऽऽहुः—'**अत्यन्ते**'ति । यद्युत्तमाधिकारिणः शब्द-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

रुभयोरर्थान्तरत्वात् । बहिरिन्द्रियजन्यशब्दप्रमाणाऽग्राह्यत्वादिति भावः । ननु **आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य** इति वाक्येन दर्शनोत्तरं श्रवणविधानेन ग्राह्यत्वं स्वीक्रियते इत्यत आहुः—'**मनने**'ति । ननूत्तमस्य साक्षात्कारो मन्दस्य मननमित्यधिकारिभेदेन व्यवस्था स्वीक्रियत इत्यत आहुः—'**शब्दज्ञान**' इति । शाब्दबोधरूपे । '**प्रमाणाभावादि**'ति । अधिकारिभेदकल्पनायां प्रमाणाभावादित्यर्थः । कुत इत्यत आहुः—'**अत्यन्ते**'ति । खपुष्पं सुरभी-

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

रेण, तत्सहकृतेन शब्देन वा, साक्षात्कारे जननीये तथासामग्री विनैव । प्रत्यक्षसामग्र्याः मनननिदिध्यासजन्यब्रह्माहमस्मीत्याकारिकाया मनोवृत्तिरूपायाः सत्त्वं नेत्यर्थः । तदाङ्गीकारे बाधकमाहुः—'**मनने**'ति । फलस्य जातत्वात् ।

ननूत्तमाधिकारिणि शब्दो झटिति साक्षात्कारं जनयति । निर्दोषनयनवत् । गौणाधिकारिणि तु मननादिद्वारा तादृग्वृत्तिसहकृत एवोपनेत्रसहकृतसदोषचक्षुरिवेति नानर्थक्यं मननादिविधेरित्यत आहुः—'**नचे**'ति । तत्र हेतुः—'**शब्द**' इति । शब्देन ज्ञानं शाब्दी प्रमितिः । तत्र अधिकारिभेदेन

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ऽहमित्याकारके ज्ञाने प्रयोजक भवति । अतो न शब्दादपरोक्षमिति भावः । '**मनननिदिध्यासनविधीनामि**'त्यादि । शब्दादेवाऽपरोक्षस्वीकारे मनननिदिध्यासनसाध्यफलस्य पूर्वमेव सिद्धत्वात्तद्विधीनां वैयर्थ्यमिति भावः । ननु मुख्याधिकारिणः शब्दादपरोक्षेऽपि मन्दमध्यमयोरपरोक्षज्ञानाऽभावान्न मननादिविधिवैयर्थ्यमित्याशङ्क्याऽऽहुः—'**न चाधिकारभेद**' इति । '**शब्दज्ञाने तत्क-**

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

ल्पयादहमस्मीति शाब्दं [illegible] न । ब्रह्मणापि दुरुपपादत्वात् । **न तथा प्रकृते** । प्रकृते तत्त्वमस्यादिवाक्यविचारेण ब्रह्मबोधस्थले । **न तथा**, वाक्यजन्यशाब्दबोधकाले न प्रत्यक्षजनकसामग्रीसत्ता । न'न्वात्मा वारे द्रष्टव्यः श्रोतव्य' इत्यादौ प्रत्यक्षार्थं श्रवणविधानादेव शाब्दापरोक्षसिद्धिरत आहुः—'**मनने**'त्यादि । **आनर्थक्यप्रसङ्गात्** श्रवणमात्रेणैव ब्रह्मप्रत्यक्षसम्भवे मनननिदिध्यासनयोरकारण-

१ अधिकारिविशेषण वेति कपुस्तकम् । २ इत्याकाङ्क्षायामिति खपुस्तकम् ।

शब्दस्य ज्ञानजननात्। प्रमाणसङ्करापत्तिश्च। मनसा तज्जननेऽपि तथा। तस्मात्प्रथमं शा-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

दपरोक्षमेव ज्ञानं भवेत्तदाऽत्यन्तासतोऽप्यर्थस्य शब्दादपरोक्षमेव स्यात्। न चैवम्। तस्मान्नाधिकारिभेदेन तत्कल्पनं युक्तमिति भावः। शब्दयोजना तु–शब्दस्यार्थेऽत्यन्तासत्यपि तेनैव शब्देन ज्ञानजननात्परोक्षज्ञानजननादुत्तमाधिकारिणं प्रतीति शेषः। दूषणान्तरमाह—'प्रमाणसङ्करापत्तिश्चे'ति। यद्युत्तमाधिकारिणि शब्दोऽपरोक्षमेव ज्ञानं जनयेत्परोक्षं च मन्दे तदा मध्यमाधिकारिज्ञाने परोक्षत्वापरोक्षत्वयोरुभयोरपि सत्त्वेन तत्प्रमाणयोः शाब्दबोधप्रत्यक्षयोः सङ्करः। साङ्कर्यं परस्परात्यन्ताभावसमानाधिकरणयोरेकत्रसमावेशनम्। तस्यापत्तिः। प्राप्तिः स्यादित्यर्थः। ननु मध्यमाधिकारिण्यपि परो-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

त्यादावत्यन्तासतोऽपि ज्ञानं जायते। अपरोक्षं तु न जायत इति। प्रमाणाभावादित्यर्थः। शब्दाऽपरोक्षवादमेव दूषयन्ति—'प्रमाणसङ्करे'ति। एकत्र शाब्दत्वसाक्षात्कारत्वयोः सत्त्वादित्यादिः। ननु तत्त्वमस्यादिवाक्यान्मनसा तु द्रष्टव्य इति श्रुतिसहकृतात्केवलात्मसाक्षात्कारो भविष्यतीत्यधिकारभेदो युक्त इति चेत्तत्राऽऽहुः—'मनसे'त्यादि। तज्जनने, साक्षात्कारजनने। तथा, मननादि-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

पदवृत्त्यतिरिक्तसामग्र्यन्तरसापेक्षनिरपेक्षत्वकल्पनायाम्। ननु तारकब्रह्मुपदेशमात्रेणैव साक्षात्कारस्येदानीन्तनेषु तु मननादिद्वारकस्य तस्य प्रमाणसिद्धत्वात्कथं प्रमाणाऽभाव इत्यत आहुः—'अत्यन्ते'ति। गगनप्रसूनं सुरभीत्यादिशब्दस्यात्यन्ताऽसदर्थे गगनप्रसूनसौरभादौ स्ववृत्त्यतिरिक्तसामग्रीनैरपेक्ष्येण तेनैव शब्देन ज्ञानजननात्त्वदुक्तरीत्या मननादिविधीनां नैरर्थक्यमेवेति भावः। शब्दादपरोक्षज्ञानाऽभ्युपगमे दूषणान्तरमाहुः—'प्रमाणे'ति। अत्र प्रमाणपदस्य भावकरणव्युत्पत्त्या स्वरूपफलयोर्लाभात्स्वरूपसङ्करापत्तिः फलसङ्करापत्तिश्चेत्यर्थः। अन्यथाऽसत्पदं श्रुतिबोधितब्रह्मात्मैक्यरूपसदर्थस्य

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ल्पनायामि'ति। शब्दज्ञानेऽधिकारिभेदकल्पनायामित्यर्थः। शब्द उत्तमाधिकारिण्यपरोक्षबोधं जनयति मन्दमध्यमयोस्तु परोक्षज्ञानमिति भेदकल्पनायां प्रमाणाऽभावादित्यर्थः। कुतोऽधिकारिभेदोऽनादरणीय इत्याकाङ्क्षायामाहुः—'अत्यन्ताऽसत्यप्यर्थे शब्दस्य ज्ञानजननादि'ति।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

त्वेन तयोः कारणताबोधकवेदस्याप्रामाण्यप्रसङ्गादित्यर्थः। ननु हीनाधिकारिणः श्रवणादित्रिकेण ब्रह्मसाक्षात्कार उत्तमाधिकारिणस्तु श्रवणमात्रादेवेत्यत आहुः–'नचाधिकारी'त्यादि। तत्र हेतुमाहुः–'शब्दज्ञाने'त्यादि। शब्दज्ञाने, शब्देन जन्यज्ञाने। तत्कल्पनायां, अधिकारविशेषस्य शाब्दबोधे कारणताकल्पने। प्रमाणाभावात्, आकाङ्क्षायोग्यतासन्निधिशक्तिज्ञानादिक्लृप्तकारणैरेव कार्यसम्भवेऽधिकारविशेषस्यान्यथासिद्धत्वादित्यर्थः। अधिकारस्य शाब्दहेतुतायां नियमाभावमाहुः—'अत्यन्ते'त्यादिना। तथा च बाधाभावादिघटितशाब्दसामग्रीसत्त्वे खपुष्पमरुमरीचिकादिशब्देभ्यः सर्वेषां शाब्दबोधो जायते तादृशार्थबोधेऽधिकारविशेषस्य कारणताया वक्तुमशक्यत्वेन व्यभिचारादधिकारस्य न क्वापि कारणतेत्यर्थः। किंचोत्तमाधिकारिणः शब्दादपरोक्षाङ्गीकारे खपुष्पादिशब्देभ्योऽप्यपरोक्षापत्तिरधि-

१ शब्दज्ञानजननादिति खपुस्तके समस्त पाठः। २ शाब्देति कपुस्तकम्।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

क्षमेव शब्दात्तद्भविष्यतीति साङ्कर्याऽसम्भव इति चेत्। उच्यते। यदि मन्दाधिकारिणीव मध्यमेऽपि शब्दः परोक्षमेव ज्ञानं जनयेदुत्तमाधिकारिणीवापरोक्षं च तदा कथमिव तस्य मध्यमत्वं भवेत्। तदन्यथानुपपत्त्या परोक्षत्वापरोक्षत्वोभयवैशिष्ट्याङ्गीकारे तु साङ्कर्यं सिद्धमेवेति, न शब्दादपरोक्षसाक्षात्कारो भवतीति सिद्धम्। ननु विचारसहकृतेन शब्देनाऽपरोक्षसाक्षात्कारसिद्ध्यभावेऽपि तादृशशब्दसहकृतेन मनसैव तत्साक्षात्कारः कस्माच्च भवतीत्याशङ्क्य परिहरन्ति—'मनसे'ति। मनसा साक्षात्कारजननेऽपि तथा। पूर्वोक्तदूषणद्वयापत्तिरित्यर्थः। न हि तादृशशब्दसहकृतं मनोमात्रमेव साक्षात्कारं जनयतीति वक्तुं शक्यम्। तथा सत्यधिकारिणां त्रित्वं नोपपद्येत। एवं सत्युत्तमाधिकारिसंयन्ध्येव मनस्तादृशशब्दसहकृतं तत्साक्षात्कारं जनयतीत्यवश्यमभ्युपेयम्। तथा च पूर्वोक्तन्यायेनोत्तमाधिकारिणोऽत्यन्तासतोऽप्यर्थस्य तादृशशब्दसहकृतेन मनसाऽपरोक्षमेव ज्ञानं भवेत्। मध्यमाधिकारिणि च प्रमाणसाङ्कर्यं सिद्धमेवेति नेदमपि वक्तुं शक्यमिति भावः। उक्तमर्थमुपसंहरन्ति—'तस्मादि'ति।

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

कैमुत्येन बोधार्थम्। तारकाद्युपदेशस्थले तु भगवदनुग्रहादेव तद्रूपेरुदयात्साक्षात्कारः। स्ववृत्त्यतिरिक्तसामग्र्यन्तरं विनैव शब्दैः शब्दजनितवृत्त्या वेति। स्वरूपसाङ्कर्यन्तु शाब्दप्रमितिकरणत्वप्रत्यक्षप्रमितिकरणत्वयोः परस्परविरुद्धयोर्धर्मयोर्दशमस्त्वमसीत्येकस्मिन्वाक्ये समावेशात्। एवं पदज्ञानजन्यत्वेन्द्रियजन्यत्वयोस्तादृशधर्मयोरेकत्र दशमोहमित्यादिज्ञाने समावेशात्फलसाङ्कर्यमपि। नन्वस्तु साङ्कर्यदोष इति चेत्। इदं प्रत्यक्षं प्रमाणमिदञ्च शब्दप्रमाणमियं प्रत्यक्षप्रमितिरियं शाब्दप्रमितिरितिव्यवहारानुपपत्तिरिति समादध्मः। ननु मास्तु शब्दादपरोक्षं विचारसहचरितशब्दसहकृतेन मनसा साक्षात्कारजनने न कोऽपि दोष इत्यत आहुः—'मनसे'ति। तथा, मननादिविधिवैय्यर्थ्यमेव। अधिकारिविशेषकल्पनायां तु तादृशसाधनसम्पन्नस्याऽधिकारिणः स्वत एव वाक्यार्थोऽवगतिसम्भवे ब्रह्मविचारशास्त्रमपि वैय्यर्थ्यमाप्नुयात्। उक्तमर्थमुपसंहरन्ति—'तस्मादि'ति। सर्वथा शब्दादपरो-

श्रीलालूभट्टकृता गूढार्थदीपिका।

'शब्दस्ये'ति। कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येवेति वैयाकरणराद्धान्ताच्छब्देनेति तृतीयान्तार्थो ज्ञातव्यः। तथा च शब्देन खपुष्पं शशशृङ्गमित्यादिरूपेण, अत्यन्ताऽसत्यपि खपुष्पादिरूपेऽर्थे ज्ञानजननात्। अत्यन्ताऽसद्विषयकज्ञानजननादित्यर्थः। यद्युत्तमाधिकारिणः शब्दादपरोक्षं स्वीक्रियते तदा खपुष्पादिशब्दादप्यपरोक्षं ज्ञानं स्यात्तु नास्तीति नाधिकारिभेदः कल्पनीय इति तात्पर्यम्। शब्दादपरोक्षस्वीकारे दूषणान्तरमाहुः—'प्रमाणसङ्करापत्तिश्चे'ति। प्रमाणेन सङ्करापत्तिः प्रमाणसङ्करापत्तिः। शब्दरूपेण प्रमाणेन प्रत्यक्षत्वाऽपरोक्षत्वजात्योः साङ्कर्यं स्यादित्यर्थः। इन्द्रियकार्यतावच्छेदकतयाऽनुमानादिकार्यतावच्छेदकतया सिद्धे प्रत्यक्षत्वपरोक्षत्वजाती।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

कारस्याविशिष्टत्वात्। अधिकारखण्डनेन शब्दापरोक्षं खण्डयित्वा प्रकारान्तरेण शब्दापरोक्षं खण्डयितुमाहुः—'प्रमाणसङ्करे'त्यादि। तथा चात्र प्रमाणशब्देन व्युत्पत्तिभेदात्प्रमाणप्रमेये बोध्ये। इत्थं च यत्र शाब्दापरोक्षात्मकशाब्दं जायेत तादृशप्रमायां शाब्दत्वसाक्षात्कारत्वयोः केवलशब्दबोधप्रत्य-

१ कथं साङ्कर्यमिति कपुस्तकम्।

ब्दमेव ज्ञानमिति मन्तव्यम् । अनुभवसिद्धत्वात् । इदानीन्तनानामपि शमादिरहितानां निर्विचिकित्सितवेदार्थज्ञानोपलब्धेः । संन्यासाऽनुपपत्तिश्च ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

प्रथमं, शमादिसाधनेभ्यः प्रथमम् । शाब्दमेव, परोक्षमेव ज्ञानमिति मन्तव्यम् । तत्र हेतुमाहुः—'अनुभवसिद्धत्वादि'ति । शब्दाद्धि परोक्षमेव ज्ञानमित्युपनिषत्सु तत्तदुपाख्याने तत्तच्छिष्याणामनुभवस्य सिद्धत्वादित्यर्थः । ननु तेषां तथानुभवोऽस्तीत्यत्र किं गमकमित्याकाङ्क्षायां तमेव विशदयन्ति—'इदानीन्तनानामि'ति । शब्दो हि सर्वदा साधारण्येनैव सर्वेषामर्थप्रत्यायकः । अन्यथाघटशब्दा-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

विधिवैयर्थ्यम् । सिद्धमाहुः—'तस्मादि'ति । 'मन्तव्यमि'ति । सर्वेषां भवतीति स्वीकर्तव्यमित्यर्थः । अनुभवमेवाऽऽहुः—'इदानीमि'ति । अस्मिन् युग उत्पन्नानां त्रैवर्णिकानामपीत्यर्थः । 'उपलब्धे-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

क्षाऽसम्भवत्वात् । प्रथममपरोक्षज्ञानात्पूर्वम् । शाब्दीप्रमितिरूपं वाक्यार्थज्ञानमिति यावत् । एवकारः साक्षात्कारव्यावृत्तिप्रयोजनः । तत्रोपपत्तिः—'अनुभवे'ति । लौकिकवैदिकाऽनुभवसिद्धत्वात् । तथा च विचारसाक्षात्कारफलकत्वाऽसम्भवेनाऽन्योन्याश्रयाऽपरिहारान्न शमाद्यानन्तर्यं वक्तुं युक्तमिति सिद्धम् । ननु तथापि शमाद्यभावे मलिनसत्त्वानां कथं वेदार्थनिश्चय इति तदानन्तर्यं सूपपादमेवेत्याशयेनाऽऽहुः[1]—'इदानीन्तनानामपी'ति । अत्रैव विचारशास्त्रादेवेति शेषः । अपिशब्दः पूर्वकालीनानां

श्रीलालूभट्टकृता गूढार्थदीपिका ।

तयोः परस्पराऽत्यन्ताभावसमानाधिकरणयोरेकाधिकरणवृत्तित्वं स्याद्दशमस्त्वमसीत्यादिशब्दादपरोक्षस्वीकारे । अतो न शब्दादपरोक्षमित्यर्थः । ननु यद्यपि न विचारसहकृतेन शब्देनाऽपरोक्षं तथापि वेदान्तविचारसहकृतेन मनसा साक्षात्कारः कुतो न स्यात् । तथा सति विचारशास्त्रस्य साक्षात्कारजनकत्वान्न वैयर्थ्यमित्याशङ्क्याऽऽहुः—'मनसा तज्जननेऽपि तथे'ति । तत्त्वमस्यादिवाक्यविचारसहकृतेन मनसा यदि साक्षात्कारस्तदाऽपि तथा, मननादिविधीनां वैयर्थ्यम् । मननादिसाध्यफलस्य विचारशास्त्रेण जातत्वादित्यर्थः । सिद्धमाहुः—'तस्मात्प्रथममि'त्यादिना । दशमस्त्वमसीति शब्दाद्यज्ज्ञानं जायते तत्प्रथम ज्ञानम् । दशमोऽहमिति ज्ञानात्पूर्वं जातत्वात् । तत्प्रथमं ज्ञानं शाब्दमेव । न तु प्रत्यक्षमित्यर्थः । तत्र प्रमाणं पठन्ति—'अनुभवसिद्धत्वादि'ति । अनुभूयन्ते, वेदान्तविषयकज्ञानिनो हि परोक्षज्ञानवन्त एव । ननु ये शमादियुक्तास्तेषामेव निःसन्दिग्धवेदान्तविज्ञानम् । तच्चाऽपरोक्षमेव । ये स्वतादृशास्तेषां निःसन्दिग्धं ज्ञानं नास्त्येवेत्युत्तमाधिकारिणां शब्दादपरोक्षमित्याशङ्क्याऽऽहुः—'इदानीन्तनानामि'त्यादि । शमदमवैराग्यादियुक्तानामेव वेदान्तबोधस्वीकारे दूषणमाहुः—'संन्यासानुपपत्तिश्चे'ति । अत्रायमाशयः । वेदान्तविज्ञानसु-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

क्षयोः परस्परात्यन्ताभावसमानाधिकरणयोरेकस्यां समावेशेन शाब्दत्वसाक्षात्कारत्वयोर्जातित्वं न स्यादित्यर्थः । एवमेव प्रमाणगतयोः शब्दत्वप्रत्यक्षत्वयोरपि साङ्कर्यसम्भवाज्जातित्वबाध इत्यर्थः । ननु तत्त्वमस्यादिवाक्यसहकृतेन मनसैव शाब्दापरोक्षमङ्गीकार्यं 'मनसैवानुद्रष्टव्य'मितिश्रुतिसाहाय्यादित्थं च शब्दप्रमाणमादाय न जातिसङ्करापत्तिरत आहुः—'मनसे'त्यादि । तज्जनने शाब्दापरोक्षजनने । तथा

---

[1] कथं तेषामिति क-पुस्तकम् ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

त्कदाचित्सदप्रत्ययः स्यात् । तथाचेदानीन्तनानामपि यदि शब्दात्परोक्षमेव जायते तदा तन्न्यायेन पूर्वेषामपि तथैव बभूवेत्यङ्गीकर्तव्यमित्यर्थः । शब्दादपरोक्षप्रत्ययाङ्गीकारे बाधकान्तरमप्याहुः—'संन्यासे'ति । यदि शब्ददेवाऽपरोक्षप्रत्ययः स्यात्तदा 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृता परिमुच्यन्ति सर्वे-इत्यादिश्रुतौ वेदान्तविज्ञानेन पदार्थयाथात्म्यस्फूर्तावपि संन्यासोक्तिर्विरुद्ध्येत । पदार्थयाथात्म्यस्फूर्तेरेवाऽपरोक्षसाक्षात्काररूपत्वेन तत्प्राप्तौ संन्यासस्याऽनपेक्षणात् । एवमथशब्दस्याऽनन्तर्यार्थकत्व उद्दिष्टानां-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

रि'ति । विचारेणेति शेषः । दूषणान्तरमाहुः—'संन्यासे'ति । उपनिषदि वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वा इत्यादिना वेदान्तार्थनिश्चयोत्तरं संन्यासस्य प्रतिपादि-

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

संग्राहकः । प्रथमं शाब्दाऽनङ्गीकारे बाधकमप्याहुः—'संन्यासे'ति । अपरोक्षसाक्षात्कारे सिद्धे संन्यासस्याऽग्रेऽनपेक्षणात् । ननु सकार्यस्यैव वैराग्यस्य विवक्षितत्वान्नानुपपत्तिस्तस्येति चेत् । न । जनकादिगृहस्थानामनधिकारित्वापत्तेः । वेदान्तविज्ञानसुनिश्चितार्था इति विरोधाच्च । तत्र हि वेदान्तार्थनिश्चयोत्तरं संन्यासवचनात् । न चैव यदहरेवेति श्रुतिविरोधः । तस्याऽविविदिषासन्या-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

श्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वा इति श्रुतेर्वेदान्तविज्ञाननिश्चयोत्तरत्वं संन्यासस्य, निश्चयस्य च विचाराधीनत्वाद्ब्रह्मविचारानन्तर्यं च संन्यासस्य वैराग्यादेश्च सिद्धम् । ततश्च जिज्ञासाशास्त्रस्य भवदुक्तशमदमवैराग्यादिभ्यः पूर्वमपेक्षितत्वान्न शमदमवैराग्याद्यानन्तर्यं सम्भवति ब्रह्मविचारस्य । अतः फक्किकाया अयमर्थः । संन्यासस्याऽपि ब्रह्मविचारात्पूर्वमनुपपत्तिरिति । अत उत्तरभाविनः संन्यासस्य ब्रह्मविचारान्न पूर्वत्वम् । अतो न संन्यासाऽऽनन्तर्यमपि जिज्ञासायाः । एवं न कस्याप्यानन्तर्यमथशब्देन वक्तुं शक्यत इत्यानन्तर्यपक्षो दूषितः ।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

पूर्ववदेव मनःप्रमे आदाय सङ्करापत्तिरित्यर्थः । सङ्करापत्तिस्तु मनसि शाब्दप्रत्यक्षयोः करणत्वात्प्रमाणसङ्करापत्तिः प्रमितौ च शाब्दत्वप्रत्यक्षत्वयोः सत्त्वात्प्रमितिमादाय सङ्करापत्तिरितिरीत्या बोध्या । एवमुत्तमाधिकारिणः शब्दसहकृतमनःसकाशात्खपुष्पादिशब्देभ्योपि शाब्दापरोक्षं स्यादित्यपि दूषणमवसेयम् । पूर्वोक्तमुपसंहरन्ति—'तस्मा'दिति । प्रथमं, वैराग्यशमादिभ्यः पूर्वम् । शाब्दमेव वेदान्तविचारेण वेदान्तवाक्येभ्यः शाब्दमेव परोक्षरूपमित्यर्थः । अनुभवसिद्धत्वात्, उपनिषत्सु तत्तदृषीणां तच्छिष्याणां च संवादेन परोक्षरूपशाब्दस्यैव सर्वप्रतीतिगोचरत्वादित्यर्थः । 'इदानी'मित्यादि । तथा च शमादिशून्यानां विचारसमर्थानां यदि वेदान्तार्थनिर्णयो न स्यात्तदेदानीन्तनानां तादृशविचारकाणां निर्विकल्पवेदार्थनिर्णयो न स्यात् । जायते इति सर्वानुभवसिद्धमिति न पूर्वोक्तं साध्वित्यर्थः । तत्त्वमस्यादिवाक्येभ्यो ब्रह्मापरोक्षबोधाङ्गीकारे दूषणान्तरमाहुः—'संन्यासे'ति । यद्युपदेशवाक्यादेव ब्रह्मापरोक्षबोधः स्यात्तदा 'वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे' इतिश्रुतौ वेदान्तार्थनिर्णयोत्तरं सन्न्यासोक्तिर्विरुद्धा स्यादित्यर्थः ।

किञ्च अध्याहारश्च कर्तव्यः । स च कर्तव्यादिपदानाम् । यदि तत्स्वार्थं, व्यर्थमेव वाक्यं स्यात् । परार्थत्वे त्वशक्यम् । न हि तैर्विचारः कर्तुं शक्यते । स्वकृतिवैयर्थ्यञ्च ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

चतुर्णां दूषणानां मध्ये प्रथममुक्त्वा द्वितीयं तमाहुः—'किञ्चे'त्यारभ्य 'उक्तं न भवे'दित्यन्तेन । आनन्तर्यार्थकत्वेऽथशब्दस्य कर्तव्यादिपदाध्याहार आवश्यकः । अथानन्तरं ब्रह्मजिज्ञासेत्युक्ते कर्तव्यादिपदाकाङ्क्षाया उपस्थितत्वेन तत्पूर्तिं विना वाक्यार्थनिष्पत्तेरभावात् । एवं सति तदध्याहृतं पदं यदि स्वार्थं[1] तदा तद्विनापि स्वकर्तव्यताया इष्टसाधनत्वज्ञानमात्रेणोपपत्तेस्तन्निष्प्रयोजनमेव स्यात् । ननु स्वार्थ[2]पदापेक्षाभावेऽपि परेषां ब्रह्मजिज्ञासाकृतेरिष्टसाधनत्वबोधनार्थं तदाकाङ्क्षा भवेत् । शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यत इति सर्वत्रैव[3] प्रसिद्धेरित्या[4]शङ्क्याऽऽहुः—'परार्थत्व' इति । यद्यपि परप्रबोधने हि शब्दा-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

त्वाद्वेदान्तार्थं विचाराऽभावे संन्यासानुपपत्तिरित्यर्थः । 'कर्तव्यादी'ति । आदिपदेन विधिबोधकपदानां सङ्ग्रहः । द्वितीयं दूषणमाहुः—'तदि'ति । विचारकरणम् । 'वाक्यमि'ति । मीमांसावाक्यमित्यर्थः । वाक्यप्रयोगाऽभावे स्वयमेव मनसि विचारः कर्तुं शक्य इति भावः । 'अशक्यमि'ति । अशक्यत्वमेवाऽऽह—'न ही'ति । तैः अन्यैः । 'शक्यत' इति । मीमांसाविचारस्यातिदुरूहत्वादिति

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

सपरत्वात् । द्वितीयं दूषणं विवृण्वन्ति—'किञ्चे'त्यारभ्य 'भवेदि'त्यन्तेन । 'कर्तव्य' इति आनन्तर्यनिबन्धनत्वात्तस्य आकाङ्क्षोत्थापकत्वादानन्तर्यस्य । 'स चे'ति । अध्याहारः । आदिना कुर्वीतेत्यादिपदसंग्रहः । 'तदि'ति । अध्याहृतं पदम् । 'व्यर्थमि'ति । तद्विनाऽपि स्वकर्तव्यतोपपत्तिः । ननु परेषां जिज्ञासाकृतेरिष्टसाधनत्वबोधनार्थं स इति चेन्नेत्याहुः—'परार्थत्वे'ति । 'अशक्यमि'ति । अशक्यप्रेरणमिदं वाक्यं स्यात् । तदेवाऽऽहुः—'न ही'ति । आसार्वज्ञ्यात्परेषां, सर्वज्ञकृतिसाध्यत्वात्तस्याः

श्रीलालुभट्टकृता गूढार्थदीपिका ।

आनन्तर्यार्थकत्वे दूषणान्तरमाहुः—'किञ्चे'त्यादिना । आनन्तर्यार्थकत्वेऽथशब्दस्य कर्तव्यादिपदाध्याहार आवश्यकः । अथाऽनन्तरं ब्रह्मजिज्ञासेत्युक्ते कर्तव्यादिपदाकाङ्क्षाया उपस्थितत्वेन तत्पूर्तिं विना वाक्यार्थोदयाऽभावात् । नन्वस्त्वध्याहारः को दोष इत्याकाङ्क्षायां दोषं वदन्ति—'यदि तत्स्वार्थ'मित्यारभ्य 'भवेदि'त्यन्तेन । स्वार्थपक्षे त्विष्टसाधनताज्ञानं स्वस्य वर्तत एवेतीष्टसाधनताऽबोधकं(?) कर्तव्यादिपदं व्यर्थमेव स्यात् । ननु शाब्दी ह्याकाङ्क्षा शब्दैकपूरणीयेति सर्वतन्त्रसम्मतत्वात्परेषामिष्टसाधनताबोधनाय कर्तव्यपदाध्याहारः सार्थक इत्याशङ्क्याऽऽहुः—'परार्थत्वे त्वशक्यमि'ति । परान् प्रति

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

अथशब्दस्यानन्तर्यार्थत्वपक्षे दूषणचतुष्टयमुक्तम् । अधिकाकाङ्क्षा, अध्याहारापत्तिः, पुरुषार्थासिद्धिः, विचारोच्छेदः इति । तेषां मध्ये प्रथमं निरूप्य द्वितीयमुपपादयितुमाहुः—'किंचाध्याहार' इति । कर्तव्य इति । अथशब्दस्यानन्तर्यार्थत्वेऽनन्तरं विचारः एतावन्मात्रमुक्त्वा तूष्णीं स्थितौ वाक्यं निराकाङ्क्षं न स्यादितिकर्तव्यादिपदानामध्याहारः आवश्यकः । विचारकर्तॄणामिष्टसाधनत्वाग्रहसम्पादनेन विचारप्रवृत्त्यर्थमवश्यं कर्तव्यमित्यर्थः । तत्, अध्याहृतं पदम् । स्वार्थं, स्वस्य विचारे प्रवृत्ताविष्टसाधनत्वाग्रहसम्पादनार्थं

१ रभावस्वमिति खपुस्तकम् । २ स्वार्थं पदेति कपुस्तकम् । ३ सर्वत्र चेति कपुस्तकम् । ४ प्रसिद्धेरित्यादि कपुस्तकम् ।

असङ्गतिश्चास्य सूत्रस्य भवेत् । किञ्च, अधिकारपक्षे पुरुषार्थः सिध्यति नानन्तर्यपक्ष उ-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

ध्याहारस्यावश्यकत्वं, तथापि कृतिसाध्यत्वस्य विध्यंशप्रविष्टत्वेनाऽकृतिसाध्ये कर्तव्यादिपदाध्याहारोऽपि तदर्थोऽशक्य एव स्यादिति । ननु कथं परेषां तदशक्यमित्याशङ्कयाऽऽह—'न ही'ति । तैः प्रसिद्धैरसर्वज्ञैर्विचारो वेदान्तानां कर्तुं शक्यः । 'स्वयम्भूरेष भगवान्वेदो गीतस्त्वया पुरे'त्यादिवाक्यैर्वेदस्य ब्रह्मरूपत्वेनाऽसर्वज्ञानां तत्र शक्त्यभावात् । दूषणान्तरमाहुः—'स्वकृती'ति । यदि कर्तव्यपदाध्याहारः परार्थस्तदा 'जन्माद्यस्य यत' इत्यारभ्य व्यासकर्तृका ब्रह्मजिज्ञासाकृतिरनर्थिकैव स्यात् । फलितमाह—'असङ्गतिरि'ति । एवं च कर्तव्यपदाध्याहारस्य स्वार्थत्वे परार्थत्वे वाऽस्य प्रतिज्ञाप्रतिपादकस्याऽसङ्गतिरेव स्यादिति । चकार एवकारार्थः । तृतीयं तमाहुः—'किञ्चे'-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

शेषः । 'स्वकृती'ति । अशक्यत्वात्परैर्विचारो न क्रियते चेन्मीमांसाविषयिणी या स्वकृतिस्तस्या वैयर्थ्यमिति भावः । कैश्चिदुत्तमैर्विचारः कर्तुं शक्यते चेत्तत्राऽऽहुः—'असङ्गतिश्चे'ति । तथा च ब्रह्मजिज्ञासा परैः कर्तव्येति प्रतिज्ञा कृता । अग्रिमसूत्राणि तु स्वेनैव कृतानीति प्रतिज्ञाहानिरूपाऽसङ्गतिर्भवेदित्यर्थः । पुरुषार्थासिद्धिरूपं तृतीयं दूषणमाहुः—'किञ्चे'ति । 'पुरुषार्थ' इति । विचारे क्रि-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

दूषणान्तरमाहुः—'असङ्गतिरि'ति अध्याहृतकर्तव्यपदस्योभयथाप्यफलत्वेनाऽऽनन्तर्यपक्षेऽस्य प्रतिज्ञा-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

कर्तव्यताबोधनं त्वनुचितम् । जिज्ञासायाः भगवदवताररूपसर्वज्ञकृष्णद्वैपायनसाध्यत्वात् । अन्येषामल्पज्ञतया जिज्ञासाया अशक्यत्वाच्च । 'स्वकृतिवैयर्थ्यं चे'ति । यदि परान् प्रत्युपदेशस्तदा जन्माद्यस्य यतः शास्त्रयोनित्वादित्यारभ्य कृतस्य ब्रह्मविचारस्य वैयर्थ्यं स्यादित्यर्थः । 'असङ्गतिश्चे'त्यादि । स्वार्थत्वे परार्थत्वे वा वैयर्थ्यस्योपपादिततयाऽस्य प्रतिज्ञाप्रतिपादकस्य सूत्रस्याऽसङ्गतिर्भवेदित्यर्थः । 'किञ्च, अधिकारपक्षे पुरुषार्थः सिद्ध्यति नाऽनन्तर्यपक्ष' इति । अधिकारपक्षे पुरुषार्थसिद्धावानन्त-

भगवदीयश्रीमद्विट्ठलरायप्रणीतः प्रदीपः ।

व्यासाभिप्रेतम् । 'व्यर्थमेवे'त्यादि । वाक्यप्रयोगात्पूर्वमेव विचारकस्येष्टसाधनताधीसत्त्वात् । अन्यथा प्रतिज्ञावाक्यमेव न वदेत् । इत्थं च सपूर्णं प्रतिज्ञावाक्यमेव व्यर्थं स्यादित्यर्थः । परार्थत्वे, परेषामिष्टसाधनताधीसम्पादनेन विचारे प्रवृत्त्यर्थत्वे । अशक्यत्वमेवोपपादयन्ति—'न ही'त्यादि । तैः परैः । कर्तुं शक्यते, अन्येन केनचिदुक्तमिदं कर्तव्यमिति श्रवणमात्रेण सर्वेषां करणार्थं प्रवृत्तौ प्रमाणाभावादित्यर्थः । ननु तादृशाज्ञाकारिणां परेषां प्रवृत्तिरपि स्यादेवेति न वैयर्थ्यमत आहुः—'स्वकृती'ति । तथा च परस्य विचारकरणार्थं वाक्यप्रयोगः परेण तु न क्रियते स्वयं च क्रियते इति स्वकृतेः प्रतिज्ञाकृतेश्च वैयर्थ्यमित्यर्थः । फलितं दूषणमाहुः—'असङ्गति'रिति । तथा च स्वपरयोर्मध्ये कस्यापि प्रवृत्तावनुपयोगादसङ्गतिरेव सूत्रस्य फलितेत्यर्थः ।

आनन्तर्यपक्षे पुरुषार्थासिद्धिरूपं तृतीयं दूषणमुपपादयन्ति—'किञ्चे'त्यादिना । अधिकार-

१ इतिहासमिति तरयेति पुस्तकम् । २ नेतव्येऽनन्ते ।

त्कन्यायात्। किञ्च तादृशस्याऽधिकारिणः श्रवणमात्रेण कृतार्थस्य समाधिनिरतस्य प्रवचनाऽसम्भवाच्छास्त्रोच्छेदः।

शास्त्रविरोधश्च। साधनानामग्रे स्वयमेव वक्तव्यत्वात्। अतोऽनेकदोषदुष्टत्वादधिकारार्थ एव श्रेयान्।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

त्यारभ्यो'क्तन्यायादि'त्यन्तेन। कथमानन्तर्यपक्षे पुरुषार्थसिद्ध्यभाव इत्यत आह—'उक्तन्यायादि'ति। आनन्तर्यार्थत्वेऽथशब्दस्य कस्यानन्तर्यमत्र वक्तव्यमित्याकारकाऽऽकाङ्क्षाया विषयलाभाऽभावेन निवृत्त्यभावे ब्रह्मजिज्ञासाप्रतिबन्धे तज्जन्यश्रवणादिजाऽमृतप्राप्तिरूपपुरुषार्थसिद्ध्यभावान्नानन्तर्यार्थत्वमिति भावः। उक्तन्यायस्त्वानन्तर्ये त्वित्यारभ्य संन्यासानुपपत्तिश्चेत्यन्तेन सन्दर्भेण स्फुटीकृतो ज्ञेयः। चतुर्थं तमाहुः—'किञ्चे'त्यारभ्य 'वक्तव्यत्वादि'त्यन्तेन। यदि साधनचतुष्टयाऽनन्तर्यमत्र

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

यमाणे मननद्वारा मोक्षः सिद्ध्यतीत्यर्थः। 'उक्तन्यायादि'ति। अन्योन्याश्रयदोषाद्विचाराभावादित्यर्थः। चतुर्थं दूषणमाहुः—'किञ्चे'ति। साधनचतुष्टयसम्पन्नेन श्रवणं कृतं चेत्तेनैव कृतार्थत्वादध्यापनाभावाच्छास्त्रोच्छेद इति भावः। अग्रे तृतीयाध्याये। यौगिके जिज्ञासापदे दूषणमुद्भाव्य परिहरन्ति—'न चे'ति।

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

सूत्रस्य, शास्त्रेऽसङ्गतिरेव स्यात्। तृतीयं विवृण्वन्ति—'किञ्चे'त्यादिना। 'उक्ते'ति। अधिकाकाङ्क्षाया

श्रीलालूभट्टकृता गूढार्थदीपिका।

र्थपक्षे तदभावे हेतुमाहुः—'उक्तन्यायादि'ति। मङ्गलाऽर्थान्तरोपक्रमाऽऽनन्तर्येषु सदोषत्वादधिकारपक्षस्य निर्दोषत्वसमानाधिकरणगुणयुक्तत्वस्य पूर्वं प्रदर्शितत्वात्पुरुषार्थः सिद्ध्यति। आनन्तर्यपक्षे कस्याऽप्यानन्तर्यस्याऽसम्भवादाकाङ्क्षापूर्त्यभावेन जिज्ञासाया अभावात्पुरुषार्थो न सिद्ध्येदिति भावः। शमादिसाधनाऽऽनन्तर्ये शब्दादपरोक्षे दूषणान्तरमाहुः—'किञ्च तादृशस्याऽधिकारिण' इत्यादिना। यदि साधनचतुष्टयानन्तर्यमत्र भवेत्तदा तत्सम्पन्नस्य वेदान्तश्रवणमात्रेण भवन्मते जातसाक्षात्कारस्य कृतार्थत्वात्पुनः प्रवचनाऽसम्भवः। फलस्य जातत्वेन प्रयोजनाभावात्। ततश्च प्रवचनविधायकशास्त्रोच्छेद इत्यर्थः। न चाऽतादृशस्य फलसिद्ध्यर्थं प्रवचनविधिसार्थक्यमिति वाच्यम्। अतादृशस्य भवन्मते वेदान्ताऽनधिकारात्। वेदान्तविचारेणैवोपनिषदां सिद्धान्ते फलाङ्गीकारात्। श्रवणमात्रेण साक्षात्कारे दूषणान्तरमाहुः—'शास्त्रविरोधश्चे'ति। एवं व्याख्यानेऽनेन जिज्ञासाशास्त्रेण विरोध इत्यर्थः। कथं

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

पक्षे अथशब्दस्याधिकारार्थत्वपक्षे। **पुरुषार्थः** मोक्षः। **उक्तन्यायात्** कस्यानन्तर्यं वाच्यमित्यत्रानन्तर्यनिरूपकस्यालाभेन तदाकाङ्क्षाया अशान्तेर्मोक्षाकाङ्क्षानुदयप्रसङ्गादित्यर्थः।

उच्छेदश्च भवेदिति चतुर्थं दूषणमुपपादयन्ति—'किञ्च तादृशस्ये'त्यादिना। **तादृशस्य,** उत्तमस्य। **प्रवचनासम्भवात्,** समाधिव्याप्तत्वेन वेदान्तविचारस्य शिष्याणां पाठनस्य वाऽसम्भवादित्यर्थः।

**शास्त्रविरोधः,** आदौ वेदान्तविचारमात्रेण तत्त्वमस्यादिवाक्येभ्यो ब्रह्मसाक्षात्काराङ्गीकारे,

१ तद्धर्मेति क पुस्तकम्। २ यदीतिनास्ति क पुस्तके।

**न च ज्ञातुमिच्छा जिज्ञासा नाधिकर्तुं शक्येति वाच्यम् । जिज्ञासापदस्य विचारार्थत्वात्**

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

भवेत्तदा शमादिसाधनसम्पन्नस्याधिकारिणः फलसिद्धेः सत्वेन पूर्वमेव कृतार्थस्याऽत एव समाधिनिरतस्य 'श्रोतव्य' इति विध्यनुरोधेन कृतश्रवणस्य लोकबुद्ध्या श्रवणमात्रेण कृतार्थस्य प्रवचनादिसाधनानामसम्भवात्तत्प्रतिपादकशास्त्रोच्छेदप्रसङ्गः स्यात् । साधनानामनपेक्षणीयत्वेन तत्प्रतिपादकशास्त्राध्ययनाद्यभावादुच्छेद इति भावः । दूषणान्तरमाहुः—'**शास्त्रविरोधश्चे**'ति । नहि साधनं विना पूर्वमेव फलसिद्धिरिति कुत्रापि दृष्टमतः शास्त्रेऽसिद्धत्वाद्विरुद्धम् । तत्र हेतुमाहुः—'**साधनानामि**'ति । यदि साधननैरपेक्ष्येणैव फलं भवेदित्याशयः । साधनप्रतिपादकानां शास्त्राणां तदाऽग्रे तृतीयाध्याये स्वयमेव सर्वज्ञेन व्यासेन कथं तानि प्रतिपादितानीत्यन्यथानुपपत्तिरेव तत्र प्रमाणमिति भावः । एवमानन्तर्यार्थत्वपक्षे दूषणचतुष्टयमुक्त्वाऽन्येषामप्यतिदेशमुखेनाधिकारार्थत्वमेव द्रढयन्ति—'अत' इति । आपाततो हि दूषणचतुष्टयमुक्तं, वस्तुतस्त्वनेकदोषदुष्टत्वात्पराभिमतस्यानन्तर्यार्थत्वस्याऽधिकारार्थ एवाऽथशब्दः श्रेयान् । नन्वथशब्दस्याधिकारार्थत्वे '**ब्रह्मजिज्ञासा अथ अधिक्रियते**' इति वाक्यार्थः सम्पद्यते । अधिकारो हि प्रारम्भः । तथा च ब्रह्मजिज्ञासाया विषयविशेषपरतन्त्रत्वेनाऽकृतिसाध्यत्वात्कथमधिकर्तुं शक्येत्याशङ्क्य समादधते—'**नचे**'ति । कथमिति चेत्तत्राऽऽहुः—'**जिज्ञासापदस्ये**'

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

'**शक्ये**'ति । इच्छायाः प्रारम्भस्य कर्तुमशक्यत्वादित्यर्थः । जिज्ञासापदस्य रूढ्या विचारार्थकत्वे पूर्वमीमांसाभाष्यकारसम्मतिमाहुः—'अत एवे'ति । पुराविदां शाबराणां भाष्यकृताम् । ननु विचारपदमेव कुतो नोक्तमित्यत आह—'**जिज्ञासापदेने**'ति । इष्टं इच्छाविषयीभूतम् । तदिच्छा ब्रह्मज्ञान-

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

विषयाऽलाभेनाऽनिवृत्त्या जिज्ञासाप्रतिबन्धे श्रवणाद्यसिद्धेरेवोक्तो न्यायः । विषयालाभस्तु '**तथाही**'-त्यारभ्य '**सर्वथानुपपत्तिरि**'त्यन्तेन सन्दर्भेण प्रदर्शितः । चतुर्थं विशदयन्ति—'**किञ्चे**'ति । **ताह**-

श्रीकालूभट्टकृता गूढार्थदीपिका ।

विरोध इत्याकाङ्क्षायामाहुः—'**साधनानामग्रे**' इत्यादिना । यदि भगवान्बादरायणः श्रवणमात्रेण साक्षात्कारं स्वीकुर्यात्तदा तृतीयाध्याये स्वयमेव साधनानि न ब्रूयादित्यर्थः । '**अतोऽनेकदोषदुष्टत्वादि**'त्यादि । आनन्तर्यस्य अनेकदोषदुष्टत्वान्निर्दोषोऽधिकारार्थ एव श्रेयानित्यर्थः । **जिज्ञासा**-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

व्यासशास्त्रवैफल्यमित्यर्थः । वैफल्यमेवोपपादयति—'**साधनाना**'मित्यादिना । तथा च पूर्वोक्तरीत्या यदि कृतार्थतामभिप्रेयात्तदाऽग्रे तृतीयाध्याये व्यासः स्वयं साधनानि न वदेत् । न हि कारणं विना कार्योत्पत्तिः कस्याप्यस्ति सम्मता । सम्मता चेत्स्यात्तदाग्रे साधनानि व्यासो न वदेदित्यन्यथानुपपत्त्या साधनाभावे कार्याभाव इति सिद्धमित्यर्थः । आनन्तर्यपक्षे दूषणसमूहमुद्भाव्याऽथशब्दस्याधिकारार्थत्वपक्षः सर्वैरुरीकर्तुं योग्य इत्युपपादन्ति—'अत इत्या'दिना । **अतः** यतोऽधिकारार्थत्वपक्षो निर्दुष्टोऽत इत्यर्थः । **अनेकदोषदुष्टत्वात्**, अथशब्दस्यानन्तर्यार्थत्वपक्षे दूषणचतुष्टयोद्भावनानन्तरमपि बहूनां दूषणानामुद्भावनादनेकदोषदुष्टत्वादित्युक्तम् । **अधिकारार्थ एव**, अथशब्दस्याधिकारार्थ एव । **श्रेयान्**, निर्दुष्टत्वात् सर्वेषामेव श्रेयानित्यर्थः ।

अत एव 'जिज्ञासितुमिच्छेदि'ति पुराविदां वचनानि। जिज्ञासापदेन चैतज्ज्ञापयति ब्रह्म-

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या।

ति। ननु ज्ञातुमिच्छा जिज्ञासेतीच्छार्थे 'धातोः कर्मण' इत्यनेन सता भाव्यम्। तथाच जिज्ञासापदं तद्वाचकमिति कथं विचारार्थकत्वमिति चेत्। उच्यते। 'अथातो ब्रह्मजिज्ञासे'त्यत्र जिज्ञासापदस्य यौगिकरूढत्वेन योगिकार्थव्यतिरेकेणैव स्वातन्त्र्येण रूढ्यर्थवाचकत्वात्। उद्भिदादिपदवत्। तत्र ज्ञापकमाहु—'अत एवे'ति। यतो जिज्ञासापदं यौगिकरूढत्वेन स्वातन्त्र्येण रूढ्यर्थवाचकमत एव जिज्ञासितुमिच्छेदित्यादीनि वाक्यानि सङ्गतानि भवन्ति। अन्यथा इच्छितुमिच्छेदिति वाक्यार्थः स्यात्। स चायोग्यत्वादसङ्गत एव भवेदित्यर्थः। नन्विच्छाया विषयविशेषतन्त्रत्वेनाऽकृतिसाध्यत्वादिच्छेदिति लिङ्विभक्तिः कथं सगच्छते। विधावेव तद्विधानादिति चेत्। न। 'अर्हे कृत्यतृचश्चे' त्यर्हार्थेऽपि लिङ्स्मरणात्। अत एव तद्विजिज्ञासस्वेत्यादौ लोट्लकारोऽपि सगच्छते। न च निमन्त्रणादिष्वेव प्रत्यय इति वाच्यम्। प्रवर्तनात्वस्य सर्वत्रानुस्यूतत्वेन तुल्यत्वात्। अत एव विध्यादियोगे प्रवर्तनायां लिङ्। चतुर्णां पृथगुपादानं प्रपञ्चार्थमिति शब्दतत्त्वविदः। नन्वत्र यदि जिज्ञासापदेन विचार

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

शस्य शमादिसर्वसाधनसम्पन्नस्य। प्रवचनं शास्त्राध्यापनम्। 'शास्त्रे'ति। साधनानां वैराग्यादिसाधनानाम्। अग्रे तृतीयाध्याये। तथाच वैराग्याद्यानन्तर्यार्थकत्वेन यद्यथशब्दः प्रयुक्तः स्याद्व्यासेन, तदा सिद्धाना तेषां पुनः कथनाऽनर्हत्वात्तानि पुनर्न निरूपयेदेव। सूत्रकारस्याऽप्यनभिप्रेतोऽयमानन्तर्यपक्ष इति भावः। उपसहरति—अत इति।

नतु जिज्ञासाया विषयपरतन्त्रतयाऽकृतिसाध्यत्वेनाऽथशब्दार्थस्याऽधिकारेऽन्वयाऽसम्भवादधिकाररूपोऽर्थः कथं श्रेयानित्याशङ्का परिहरन्ति—'नचे'ति। अधिकर्तुमारब्धुं न शक्या न कृतिसाध्येति न वाच्यमित्यर्थः। तत्रोपपत्तिमाहु—'जिज्ञासे'ति। योगविनैव स्वातन्त्र्येण रूढ्या विचारार्थकत्वात्। उद्भि-

श्रीलालूभट्टकृता गूढार्थदीपिका।

दादिपदस्य विचारार्थकत्वे शाबरभाष्यसम्मतिमाहु। 'अत एव जिज्ञासितुमिच्छेदिति पुराविदां वचनानी'ति। तथा च जिज्ञासापदं यौगिकरूढम्। उद्भिदादिपदवत्। उद्भिच्छब्दो हि योगेन तृणलतावृक्षादि वक्ति। रूढ्या उद्भिन्नामकं यागम्। तथा जिज्ञासाशब्दोऽपि योगेन ज्ञानेच्छां वक्ति। धातोः कर्मणः समानकर्तृकादिच्छायां वेति सूत्रेण सन्प्रत्ययस्य इच्छायां जातत्वात्। रूढ्या च विचारमिति। अत एव श्रीमद्भागवत एकादशस्कन्द एकादशाध्याये जिज्ञासापदं विचारपदपर्यायत्वेन भगवतोक्तम्। 'एवं जिज्ञासयापोह्य नानात्वभ्रममात्मनि। उपारमेत विरजं मनो मय्यर्प्य सर्वगमि'ति। नह्यत्र ज्ञातुमिच्छा जिज्ञासेति सम्भवति। ज्ञानेच्छाया भ्रमनिवर्तकत्वाऽभावात्। प्रकृतेऽपि विचारवाचकत्वमिति हार्दम्। नन्वेवं सति क्लिष्टं जिज्ञासापदं विहाय स्फुटाऽर्थकं विचारपदमेव कुतो नोक्तमित्याकाङ्क्षायामाहु—'जिज्ञासापदेन चैतदि'त्यारभ्य'आरभ्यत इती'त्यन्तम्।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

नन्वथशब्दस्याधिकारार्थत्वपक्षे कर्तव्यत्वमेवार्थे पर्यवसति, जिज्ञासाशब्दस्य च ज्ञानगोचरेच्छार्थं, सा च कृत्यसाध्येति कथं कृत्यसाधनीयेत्याशङ्कते 'न चे'त्यादिना। ज्ञातुं ज्ञानगोचरा। नाधिकर्तुं न

१-विधेयस्यापि-ब्रह्मी नपुंसके नाम्नि।

ज्ञानं पुरुषार्थसाधनत्वादिष्टं तदिच्छापूरणाय विचार आरभ्यत इति । 'यस्मात् कर्मादिभ्यो ज्ञानमेव पुरुषार्थसाधनमित्यतस्तज्ज्ञानाय विचारोऽधिक्रियत इत्यतःशब्दार्थः ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

एव ग्राह्यस्तदा निःसन्दिग्धं विचारपदं विहाय श्लिष्टपदप्रयोगं कथं कृतवान्सूत्रकार इत्याकाङ्क्षायामाह–'जिज्ञासापदेने'ति । यदि जिज्ञासापदं विहाय विचारपदमेवोक्तं स्यात्तदा स विचारः किमर्थ इति तत्फलजिज्ञासा विषयलाभाऽभावात्तिष्ठेदेवेति निःशङ्काप्रवृत्तिर्निःश्रेयसार्थिनो न स्यात् । तेन श्लिष्टपदप्रयोग योगार्थोऽपि तत्रोपस्थितो भवति । ब्रह्मज्ञानं, 'तमेव विदित्वाऽतिमृत्युमेती'त्यादिश्रुतिभिः पुरुषार्थसाधनत्वादिच्छाविषयीभूतम् । इच्छा च फले तदुपाये वा लोके दृष्टचरी । तथा च तदिच्छाविषयीभूताऽमृतत्वप्राप्तिसाधनीभूतब्रह्मज्ञानात्मकसाधनसाधनत्वद्योतनेन निःश्रेयसार्थिनो निःशङ्कप्रवृत्तिसाधनात्तत्प्रयोगः कृत इत्यर्थः । एवमथशब्दार्थं निरूप्याऽतःशब्दार्थं निरूपयन्ति—'यस्मादि'ति । यस्माद्वेद एव 'नद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयत' इत्यादिभिः कर्मणामग्निहोत्रादीनां श्रेयःसाधनानामनित्यफलत्वप्रदर्शनेन 'ब्रह्मवि-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

विषयिणीच्छा । अधिकारपक्षे वाक्यार्थं वक्तुमतःशब्दार्थमाहुः–'यस्मादि'त्यादि । ननु सामान्यतोऽतःशब्दस्य पूर्ववधौ प्रयोगदर्शनात्किं पूर्वमित्याकाङ्क्षायां, कर्मविचारस्य पूर्वत्वं वक्तव्यम् । तच्च न सम्भवति । तस्य पूर्वत्वं पूर्वमेव खण्डितमत आह–'अत' इति । यथा "धर्मो यशःप्रदः सुखदश्चातः करोमी"त्यादौ दृष्टेऽप्यतःपदप्रयोगो दृश्यते, तथात्रापि ब्रह्मज्ञानं पुरुषार्थसाधन'मतो ब्रह्मज्ञानार्थं विचार आरभ्यत' इत्यतःशब्द इत्यर्थः । अत्र, यथैकं पदमेकस्मिन्नर्थे यौगिकमन्यस्मिन्नर्थे रूढ तद्यौ-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

पदवत् । एतेन ज्ञानेच्छार्थाया जिज्ञासाया अर्थान्तरकल्पने विवक्षाऽभावे ब्रह्ममीमांसाशास्त्रप्रवृत्त्यङ्गभूतयोर्जिज्ञासाकारणयोः संशयप्रयोजनयोर्जिज्ञासयाऽसूचनात्काकदन्तपरीक्षावदिदमपि शास्त्रं सासदर्थं तत्सूचनी जिज्ञासैव प्राधान्येन विवक्षितव्या । विवक्षितायां च तस्यां तस्याः प्रत्यधिकरणमप्रतिपादनादनधिकार्यत्वेन तत्समभिव्याहृतोऽथशब्दो नाधिकारार्थ इति परास्तम् । तथा जिज्ञासापदस्य मीमांसापरत्वेऽन्यार्थकल्पनादोषोपि तथा । किञ्च विचारार्थकत्वाऽभावे प्रत्यधिकरणं तदधिकरणादध्याहृतकर्तव्येतिपदैरर्थक्यापत्तेः । इच्छाया विषयविशेषतत्प्रत्वेन विधि [ च्छेय ] कर्तव्यपदं विनाऽपि स्वत

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीपः ।

कृत्या साधयितुं । विचारार्थत्वात् जिज्ञासापदस्य यौगिकरूढत्वेन स्वातन्त्र्येण रूढ्या वृत्त्या विचारार्थत्वसम्भवात् । यथोद्भित्पदं योगेन खनित्रं बोधयति केवलरूढ्या च यागविशेषमिति तद्वदित्यर्थः । जिज्ञासापदस्य विचारार्थत्वे उपष्टम्भकमाहुः । अतएवेति । यत इच्छाविषयकेच्छायाः असम्भवेन एतद्वाक्यस्याप्रामाण्यं स्यादत एवेत्यर्थः । जिज्ञासितुं विचारयितुमित्यर्थः । ननु जिज्ञासापदस्य विचारार्थत्वे विचारपदं त्यक्त्वा किमिति क्लिष्टजिज्ञासापदप्रयोगः कृत इत्यत आहुः—'जिज्ञासापदेने'त्यादि । जिज्ञासापदेन ज्ञानविषयकेच्छार्थकजिज्ञासापदेनेत्यर्थः । एतत् वक्ष्यमाणमिष्टत्वम् । इष्टमिति । तथा च सुखस्येव सुखसाधनेष्वपि इष्टत्वं शास्त्रकारिणां सम्मतम् । यथा यागादौ । अन्यथा तत्साधने प्रवृ-

---

१–भिष्टेत्यारभ्याऽऽरनिह्नायपदान्तो ग्रन्थ पुस्तके नास्ति । २–प्रयोगेणेति पुस्तकम् । ३–मनित्यफलेति पुस्तकम् ।

अधिकारी तु त्रैवर्णिक एव, न हि वेदविचारस्य वेदाधिकार्यतिरिक्तः शक्यते कल्प-

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

**दाप्नोति परमि**'त्यादिभिश्च ब्रह्मविज्ञानात्पुरुषार्थप्रदर्शनेन च कर्मादिभ्यो ज्ञानमेव पुरुषार्थसाधनं, तस्मात्तत्प्राप्त्यर्थं तदुपायभूता ब्रह्मजिज्ञासा आरभ्यत इत्यर्थः । नन्वेवमथशब्दस्याधिकारार्थत्वे ब्रह्मजिज्ञासाऽथाधिक्रियते अधिकारिणमुद्दिश्याऽऽरभ्यत इति वाक्यार्थः सम्पद्यते । तथा च को वाऽत्राऽधिकारी यमुद्दिश्येयमारब्धव्येत्याकाङ्क्षायामाह—'**अधिकारी त्वि**'ति । तुशब्दः शङ्कां वारयति ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

गिकरूढमित्युच्यते । यथा उद्भिदादिपदं यागविशेषे रूढम् । वृक्षे यौगिकम् । तथात्रापि जिज्ञासापदस्य यौगिकरूढत्वम् । ज्ञानेच्छायां यौगिकम् । प्रकृते विचारे रूढिः स्वीक्रियते । एवं च, अथातो ब्रह्मजिज्ञासेत्यत्र ब्रह्मपदस्य ब्रह्मवाचकत्वम् । अतःपदस्य ज्ञानार्थे तात्पर्यग्राहकत्वम् । तथा च ब्रह्मविषयकज्ञानानुकूलो विचार आरभ्यत इति वाक्यार्थः ।

ननु ब्रह्मनिरूपणे प्रतिज्ञाते प्रेक्षावतां प्रवृत्त्यर्थमधिकारिविषयसम्बन्धप्रयोजनानि वक्तव्यानि । तत्र विषयादीनामग्रे वक्तव्यत्वादधिकारिनिर्णयमाहुः—'**अधिकारी**'ति । ननु वेदार्थविचारे च त्रैव-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

एवोद्याच्च । स्वकृत्यसाध्यत्वाच्च । अग्रे च जन्माद्यस्येत्यादिविचारकरणादप्रतिज्ञातकरणप्रसङ्गाच्च । प्रतिज्ञाभङ्गापत्तेश्च । जिज्ञासापदस्य विचारार्थत्वे सम्मतिमाहुः—'**अत एवे**'ति । जिज्ञासापदस्य विचारार्थकत्वादेव । **जिज्ञासितमधीतं** चेत्यत्र श्रीधराचार्यैर्जिज्ञासापदस्य विचारार्थतयैव विवृतत्वाच्च । नन्वेवमसन्दिग्धं विचारपदं विहाय क्लिष्टं प्रयोगं कथं धृतवान् भगवान् सूत्रकार इत्याशङ्क्याहुः—'**जिज्ञासे**'ति । '**ज्ञापयती**'ति । अत्र सूत्र इति शेषः । एतत्पदार्थमाहुः—'**ब्रह्मे**'ति । तथाच ब्रह्मजिज्ञासापदेनाऽचिन्त्यानन्तशक्तिमदद्वितीयं ब्रह्मैवैतच्छास्त्रविषयस्तत्सम्बन्धी चाऽयं विचार इति, शास्त्रविषययोः प्रतिपादकप्रतिपाद्यभावः सम्बन्धश्च दर्शितः ।

अतःपरं शास्त्रप्रयोजनं दर्शयन्त एवाऽतःशब्दं विवृण्वन्ति—'**यस्मादि**'ति । अग्निहोत्रादीनि नित्यकर्माणि । आदिना योगोपासनापरिग्रहः । '**ब्रह्मविदाप्नोति परमि**'त्यादिश्रुतिभ्यो ब्रह्मज्ञानमेव परप्राप्तिरूपपरमपुरुषार्थसाधनमतो हेतोर्ब्रह्मज्ञानाय किंलक्षणकमित्यादिरूपो विचारोऽधिक्रियत आरभ्यत इति हेतुरूपोऽतःशब्दस्याऽर्थः । तथाच परप्राप्तिफलकब्रह्मज्ञानमेव परमप्रयोजनं दर्शितम् । सन्देहनिवृत्तिस्त्ववान्तरद्वाररूपत्वेन । अवशिष्टमधिकारिणमाहुः—'**अधिकारी त्वि**'ति । तुशब्दः पक्षान्तर-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

तथा च न केवलं विचारमात्रं जिज्ञासापदेनोच्यते किन्तु पुरुषार्थसाधनज्ञानविषयकेच्छापूरको विचार इत्यर्थः । '**अधिकारी त्वि**'त्यादि । अथ हि वेदार्थविचारो वेदवाक्यान्तर्गतशब्दशेषभूतस्तत्र हि यो

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

त्रिर्न स्यादिति भावः । **तदिच्छापूरणाय** ब्रह्मज्ञानेच्छाविषयलाभार्थमित्यर्थः । अथशब्दार्थमाहुः—**आरभ्यत इतीति** । सूत्रार्थमाहुः—**यस्मादि**त्यादि । **ज्ञानमेव** ब्रह्मज्ञानमेव । **तज्ज्ञानाय** ब्रह्मज्ञानाय । **अतःशब्दार्थः** अतःपदघटितसूत्रार्थः । **अथ अधिक्रियते** अधिकारिणमुद्दिश्य ब्रह्मजिज्ञासाऽऽरभ्यते ।

अस्याधिकार्याकाङ्क्षायामधिकारिणमाहुः—'**अधिकारी त्वि**'ति । तथाच वैदिकवाक्याङ्गीभूतो यो

यितुम् । नहि मन्दमतेर्वेदो नायातीति त्रैवर्णिके मतितत्त्वमधिकारिविशेषणं कल्प्यते ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

विचारो हि वैदिकवाक्यान्तर्गतशब्दशेषभूतः । तथा च 'येऽङ्गिन्यधिकारिणस्ते तदङ्गेऽपी'ति त्रैवर्णिक एवाऽत्राऽप्यधिकारी ज्ञेयः । अस्मिन्नर्थे उपपत्तिमाहुः—'न ही'ति । मतिः कर्मादिभ्यो ज्ञानमेव पुरुषार्थसाधनमित्याकारिका । ननु मतिमत्त्वं चेन्नाधिकारिविशेषणं तदा गृहाद्यासक्तस्यापि पुरु-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

र्णिक एवाधिकारीति सत्यम् । परन्तु वेदान्तार्थविचारे गृहानुरक्तस्य फलाभावाद्विरक्तत्वमधिकारिवि-शेषणं देयम् । तथा च साधनचतुष्टयसम्पन्नस्यैव विरक्तत्वान्मन्मतप्रवेश इत्यत आहुः—'न ही'ति । कल्प्यत इत्यत्रान्वयः । मन्मते त्रैवर्णिक एवाधिकारी । अनुरक्तस्य तु फलाभावेनार्थादेवानधिकारित्वात् । व्यर्थं विरक्तत्वं विशेषणम् । यथा वेदाधिकारिणि मतिमत्त्वं,-कर्माधिकारिण्यन्धपङ्ग्वादिभिन्नत्वं विशेषणं न कल्प्यते-तथाऽत्रापीति समुदितार्थः । यथाऽन्धपङ्ग्वादीनां फलाभावस्तथा प्रतिपादितं कल्पसूत्रे । तथा हि—दर्शपूर्णमासप्रकरणे यजमानस्य 'आज्यमसि सत्यमसि सत्यस्याध्यक्षमसी'त्यादिमन्त्रेणा-ऽऽज्यावेक्षणं विहितम् । तत्राऽवेक्षणस्य लोपादङ्गवैकल्येन फलाभावः । एवं दर्शपूर्णमासेष्ट्यन्ते यजमा-नस्य, विष्णोः क्रमोस्यभिमातिहा गायत्रेण छन्दसा दिवमनुविचक्रमे निर्भक्तः स यं द्विष्म इत्यादिमन्त्रेण गमनरूपं विष्णुक्रमणं विहितम् । तच्च पङ्गोर्न सम्भवतीति फलाऽभाव इति [1] । एवंरीत्या वेदान्तविचाररूपमीमांसाया आवश्यकत्वमुक्तम् । विचारे च त्रैवर्णिकानामधिकार इत्यपि स्वीकृतम् । परन्तु तत्र कर्मण्यपि त्रैवर्णिकानामधिकारोऽस्तीति कर्ममीमांसया चरितार्थत्वमस्या

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

शङ्कानिरासे । एवकारः शूद्रव्यवच्छेदकः । तदुपपादयन्ति—'नही'ति । ब्रह्मणो हि वेदार्थत्वेन तद्वि-चारस्य वेदवाक्यैरेव करिष्यमाणत्वादिति भावः । तथाच ब्रह्मजिज्ञासापदेनैवाऽधिकारिलाभोऽपि दर्शितः । ननु 'शान्तो दान्त'इतिश्रुतिविरोधात्सङ्कोचस्याऽऽवश्यकतया शमादिसाधनसम्पन्न एव कुतो नाऽधि-कारीति शङ्कां दृष्टान्तेनैव निरस्यन्ति—'नही'ति । 'मन्दे'ति । अल्पबुद्धेः पुंसः । तथाच मतिमानेव पाठ्यो

श्रीलालभट्टकृता गूढार्थदीपिका ।

वेदाधिकारी स एवाधिकारीति त्रैवर्णिक एवाधिकारीत्यर्थः । ननु विचारो नाम मननं तत्र त्रैवर्णिकानां सर्वेषामधिकारे प्राप्ते 'शान्तो दान्त' इति श्रुतिविरोधापत्तितः सङ्कोचार्थं शमदमाद्यानन्तर्यमेव वक्तव्यं ततश्चाऽथशब्द आनन्तर्यार्थक एव व्याख्यातव्य इत्याशङ्क्याऽऽहुः—'न हि मन्दमतेरि'त्यादि । तथा च तत्र यथा मतिमत्त्वस्याऽर्थात्प्राप्तिस्तथात्राऽप्युपयुक्तस्यार्थात्प्राप्तिर्न तु तदर्थं विशेषणमधिकारिणि देयमित्यर्थः । ननु तर्हि गृहासक्तस्याऽप्यधिकारे विषयरतस्यापि ब्रह्ममननादिसिद्धौ जिज्ञासाशास्त्रोक्तं मोक्षात्मकं फलं स्यात्तथा सति त्यक्तविषयस्योत्तमस्याऽतिहीने विषयिणि तौल्यं च तौल्यमापततीत्या-

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीपः ।

विचारः सः प्रधानाधिकार्यधिकारिक एव । दर्शपूर्णमासाधिकार्यधिकारिकप्रयाजादिवदित्यर्थः । ननु कर्मा-दिसर्वफलसाधनापेक्षया ब्रह्मज्ञानमेव परमपुरुषार्थसाधनमिति मतिमानेव विचाराधिकारी कल्पनीयोऽन्यथा स्मार्तकर्ममात्रपरस्यापि विचारेण ब्रह्मसाक्षात्कारः पुरुषार्थसाधको भवेदत आहुः—'नहीत्या'दि । म-न्दमतेः त्रैवर्णिकस्य । मतिमत्त्वं ग्रहणधारणसमर्थबुद्धिमत्त्वम् । 'कल्प्यते' इति । तथाऽकल्पने ताद-

---

१-अन्धस्यावेक्षणस्येति । ईक्षणशक्तिवैकल्यापेक्षया ।

अन्धपङ्ग्वादीनामिवं कर्मणि, गृहाद्यासक्तस्य मननाद्यसम्भवात्साक्षात्कारो न भविष्यति। न च धर्मन्यायेन गतार्थत्वमस्य। अप्रतिज्ञानादनुपलब्धेश्च। नच जगत्कारणं परमात्मा वा प्रकृतिर्वा परमाणवो वेति सन्देहे किञ्चिदधिकरणमस्ति।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

पार्थसाधनीभूतब्रह्मसाक्षात्कारः कथं न भवतीत्याशङ्क्य दृष्टान्तप्रदर्शनमुखेन समाधत्ते—'अन्धे'ति। यथा अन्धपङ्ग्वादीनां संस्कारस्य सर्वत्रोक्तत्वात्कर्माधिकारस्य सिद्धत्वेन न कर्मणि (कर्मविषये) मतिमत्त्वादिकमधिकारिविशेषणं, किन्तु सहकारिविशेष एव। तथा च तदभावाच्च कर्माकरणम्। तथाऽत्रापि गृहाद्यासक्तस्य श्रवणस्य यथाकथञ्चित्सत्त्वेऽपि मतिमत्त्वाऽभावेन मननादिसहकारिकारणाभावान्न साक्षात्कार इति भाव.।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

इति मन्यमानं मीमांसक कटाक्षयन्नाहुः—'न चे'ति। न हीत्यर्थः। अथातो धर्मजिज्ञासेत्यत्र धर्मशब्दस्य वेदार्थमात्रार्थत्वेन धर्मविचारप्रतिज्ञयैव ब्रह्मविचारस्य जायमानत्वेन भिन्नतया न वक्तव्येत्ययमर्थः। अस्याः वेदान्तमीमांसायाः। यद्यपि क्वचित्पुस्तके अस्येति पाठः। तथाप्यत्रैव भाष्ये नार्थोऽनया मीमांसयेत्युक्तत्वात्क्वचित्पुस्तके अस्या इति पाठस्य दृष्टत्वात् स एव पाठ इति प्रतिभाति। अप्रतिज्ञानात् जैमिनिना अथातो ब्रह्मजिज्ञासेति प्रतिज्ञाया अकृतत्वात्। 'अनुपलब्धेरि'ति। ब्रह्मप्रतिपादकाधिकरणानुपलब्धेरित्यर्थः। तदेवाऽऽहुः—'न चे'ति। अत्र मीमांसकमते जगतः प्रवाहरूपेण नित्यत्वमतः कारणताविचार एव नास्ति। ब्रह्मज्ञानस्य तु धर्मरूपत्वात् धर्मप्रतिज्ञयैव चरितार्थत्वादित्याशयेन मीमांसकाः शङ्कन्ते—'स्यादेतदि'ति। नोदकवाक्यार्थस्य। नुद् प्रेरण इति धातुनिष्पन्नं नोदकं प्रेरकं यत् सोमेन यजेतेत्याकारकवेदवाक्यम्। तदर्थस्य यागानुकूलभावनारूपार्थस्य धर्मत्वमुक्त्वा चोदनालक्षणोर्थो धर्म इति सूत्रेण धर्मे प्रामाण्य प्रतिपाद्येत्यर्थ.। ननु वेदस्य विध्यर्थवादमन्त्रनामधेयरूपेण

केश्चिद्विरचिता वेदान्तचन्द्रिका।

मतिमानेवाधीयेतेति यथा न नियमस्तथाऽत्राप्युक्तसाधनसम्पत्तिमतैव विचारः कर्तव्य इति न नियम इति भाव.। नन्वेवं सति विरहितानामपि वेदान्तार्थनिश्चयात्साक्षात्कारापत्तिरित्यत आहुः—'अन्धे'ति। यथाऽऽज्यावेक्षणादिस्वरूपोपकार्यङ्गाभावात्कर्मणि तेषां न फलं, तथाऽत्रापि फलोपकारिमननाद्यङ्गाऽभावाद्गृहाद्यासक्तानां न साक्षात्कारः। श्रुतिस्तु महावाक्याद्युपदेशग्रहणसाधनपरेति न दोष.।

श्रीलालूभट्टकृता गूढार्थदीपिका।

शङ्कां समादधते—'अन्धपङ्ग्वादीनामिवे'त्यादिना। यथा कर्मण्यन्धपङ्ग्वादीनामसामर्थ्यात्कर्माकरणाऽभावात्तत्साध्यफलाऽभावेऽपि न कर्मण्यनन्धत्वादिविशेषणं, तथा गृहाऽऽसक्तस्य मननाऽसामर्थ्यात्साध्यं ब्रह्मसाक्षात्काररूपं फलं न भविष्यति। नैतावता शमदमादिकं विशेषणं देयमित्यर्थः।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

शमतिमत्त्वाभावं निश्चित्यापि जडभरते पितृकारितवेदाध्ययनस्यावैधत्वेन प्रत्यवायजनकत्वं स्यादित्यर्थः। ननु शान्तो दान्त उपरतस्तितिक्षुरित्यादिरूपोऽधिकारो विचारेऽवश्यं अधिकारिविशेषणं वाच्योऽन्यथा गृहाद्यासक्तवेदान्तविचारकस्यापि ब्रह्मसाक्षात्कार. पुरुषार्थश्च सिद्ध्येदत आहु'रन्धे'त्यादि। तथान्य यथाऽऽज्यावेक्षणविष्णुक्रमणादिरूपसहकारिकारणाङ्गाभावाद्यथा कर्मकर्तॄणां फलाभावस्तथा विचारकाणामपि शान्त्यादिसहकारिकारणानामभावाद्गृहाद्यासक्तानां ब्रह्मसाक्षात्कारपुरुषार्थाभाव इति भाव.।

स्यादेतत्। अथातो धर्मजिज्ञासेति धर्मविचारं प्रतिज्ञाय नोदकवाक्यार्थस्य धर्म-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

ननु धर्मशब्दस्य वेदार्थमात्रोपलक्षकत्वेन धर्मजिज्ञासयैव ब्रह्मविचारस्यापि गतार्थता स्यादित्याशङ्क्याऽऽह–'न च धर्मन्यायेने'ति । तत्र हेतुमाहुः–'अप्रतिज्ञानादि'ति । तत्र हि धर्मजिज्ञासा प्रतिज्ञाता। न ब्रह्मजिज्ञासा। तथा चाऽप्रतिज्ञातस्य निरूपणासम्भवात्कथं गतार्थत्वम् । ननूक्तं धर्मशब्दो वेदार्थमात्रोपलक्षक इति, कथमप्रतिज्ञातत्वं ब्रह्मजिज्ञासाया इत्यत आहुः—'अनुपलब्धेरि'ति । 'अथाऽतो धर्मजिज्ञासे'त्यत्र धर्मशब्दो यदि वेदार्थमात्रोपलक्षकत्वेन सूत्रकारसम्मतः स्यात्तदा ब्रह्मजिज्ञासाया अपि प्रतिज्ञातत्वेनानुपदमेव चोदनालक्षणोर्थो धर्म इत्यादिना धर्मजिज्ञासावद्ब्रह्मजिज्ञासाऽपि स्वनये तेनैव कृता स्यात् । नहि द्वादशलक्षण्यां कुत्रापि सा कृतास्ति । अनुपलब्धेः । उपलब्धिप्रकारप्रदर्शनपूर्वकमत्र तन्निषेधमाहुः—'नचे'ति । अत्र पूर्वपक्षी शङ्कते—'स्यादेतदि'ति ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

ननु वेदार्थनिश्चयार्थमेव शास्त्रप्रवृत्तौ शास्त्रस्यैव वैयर्थ्यं स्यात्। पूर्वमीमांसयैव विधिमन्त्रनामधेयनिषेधाऽर्थवादात्मकस्य सर्वस्याऽपि वेदार्थस्याऽर्थनिर्णयादिति चेत् । मैवम् । वेदार्थज्ञानमात्राय नाऽयं विचारः, किन्तु वेदार्थब्रह्मज्ञानाय । तस्य च तत्राऽदर्शनात् । तदेतदुक्तं 'नच धर्मे'त्यादिना । न्यायशब्देनाऽत्र सूत्राणि गृह्यन्ते । अस्य वेदान्तशास्त्रस्य । 'अप्रतिज्ञानादि'ति । ब्रह्मविचारस्य । तस्यैवाऽनुपलम्भात् । तामेव प्रदर्शयन्ति 'नचे'त्यादिना । पुनः प्रकारान्तरेण वैयर्थ्यमाशङ्कन्ते—'स्यादे-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ननु वेदाधिकारी यः स त्रैवर्णिक एवाधिकारी तदाऽथातो धर्मजिज्ञासेति पूर्वतन्त्रप्रतिज्ञासूत्रे धर्मशब्दस्य वेदार्थमात्रोपलक्षकत्वेन धर्मजिज्ञासयैव पूर्वतन्त्रन्यायेन ब्रह्मज्ञानसिद्धेर्ब्रह्मविचारस्य गतार्थता स्यादित्याशङ्क्याऽऽहुः—'न च धर्मन्यायेने'त्यादि । तत्र हेतुमाहु—'अप्रतिज्ञानादि'ति । जैमिनिना ब्रह्मविचारस्याऽप्रतिज्ञानात् । यदि सर्ववेदार्थजिज्ञासायाः प्रतिज्ञा स्यात्तदाऽथातो वेदजिज्ञासेति प्रतिज्ञातं स्यादित्यर्थः । 'अनुपलब्धेश्चे'ति । यदि धर्मजिज्ञासायामतेद्विचारोऽपि प्रतिज्ञातः स्यात्तदा 'चोदनालक्षणोर्थो धर्म' इत्यादिभिर्धर्मविचारवद्ब्रह्मविचारोऽप्युपलभ्येत । अतस्तस्यानुपलब्धेर्न तत्र ब्रह्मविचारप्रतिज्ञेत्यर्थः । अनुपलब्धेरित्युक्तं तस्यैव विवरणमाहुः—'न च जगत्कारणमित्यादिना । उत्तरकाण्डप्रमेये ज्ञाने धर्मत्वं साधयित्वा पूर्वकाण्डमीमांसया गतार्थत्वं साधयति—

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

नन्वथातो धर्मजिज्ञासेत्यत्र धर्मशब्दस्य लक्षणया वेदार्थमात्रपरतया व्याख्यानात् धर्मनिरूपणप्रतिज्ञयैव ब्रह्मनिरूपणप्रतिज्ञायाः कृतत्वेन गतार्थत्वादथातो ब्रह्मजिज्ञासेति पृथक्प्रतिज्ञाया वैयर्थ्यमत आहुः–नन्विति । अस्य वेदान्तविचारस्य । अप्रतिज्ञानात् शक्त्यार्थप्रतिपादकधर्मपदघटितजैमिनिप्रतिज्ञामध्ये ब्रह्मविचारप्रतिज्ञाया अलाभादित्यर्थः । ननु लक्षणयार्थप्रतिपादकधर्मशब्दघटितप्रतिज्ञया ब्रह्मविचारस्यापि प्रतिज्ञातत्वादपार्थैव पृथग्ब्रह्मविचारप्रतिज्ञेत्यत आहुः–अनुपलब्धेरिति । तथा च जैमिनिना स्वसूत्रे यदि ब्रह्मजिज्ञासा प्रतिज्ञाता स्यात्तदा 'चोदनालक्षणोऽर्थो धर्म' इति धर्मजिज्ञासावत् ब्रह्मजिज्ञासाप्युपलभ्येत नत्वेवमित्यर्थः । अनुपलब्धिप्रकारमेवोपपादयन्ति–'नच जग'दित्यादिना । अधिकरणमस्ति जैमिनिमीमांसायामधिकरणमस्तीत्यर्थः ।

त्वमुक्त्वा, प्रामाण्यपुरःसरं सर्वे सन्देहा निवारिताः। तत्र ब्रह्मज्ञानस्यापि धर्मत्वम् 'आत्मे॰

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

यदुक्तं जगत्कारणं परमात्मा वा प्रकृतिर्वा परमाणवो वेति सन्देहपूर्वकं तन्निश्चयकारकं किञ्चिद- धिकरणं द्वादशलक्षण्यां नोपलभ्यत इति। तत्तु स्यादेव। तेन प्रकारेणाऽधिकरणकृतेरनपेक्षणात्। किन्तु धर्मजिज्ञासां प्रतिज्ञाय तद्विषयाकाङ्क्षायां 'चोदनालक्षणोऽर्थो धर्म' इत्यारभ्य चोदक- वाक्यार्थस्य धर्मत्वमुक्त्वा, तस्यैव कथं धर्मत्वमर्थवादवाक्यानां तत्र सत्त्वात्। तत्र च चोदनाया असत्त्वात्तद्वाक्यार्थस्य धर्मत्वाऽभावे तेषामप्रामाण्यमेव स्यादि'त्याम्नायस्य क्रियार्थत्वादानर्थ-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

चतुर्विधत्वम्। तन्मध्ये विधेस्तु प्रामाण्यं प्रतिपादितम्। अर्थवादादीनां निरर्थकत्वेनाऽप्रामाण्यमत आह—'प्रामाण्यपुरःसरमि'ति। विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु- रिति सूत्रेण। स्वाध्यायविधिना वेदः पुरुषार्थाय नीयते। सर्वस्तेनार्थवादानां प्राय- स्त्येन प्रमाणतेति कारिकया चार्थवादानां प्राशस्त्यबोधकत्वेनार्थांशे प्रामाण्यं, मन्त्रादीनां देवता- प्रकाशनद्वारा शब्दांशे प्रामाण्यं च प्रतिपाद्य नामधेयानां नामावच्छिन्नधात्वर्थनिष्ठभावनाख्यधर्मप्रमितौ प्रामाण्यं च प्रतिपाद्य, सकलवेदाऽर्थवादानां प्ररोचकतयैव मन्त्राणामपि स्मारकतया प्रामाण्यव्य- वस्थापनपुरःसरं शब्दार्थोभयविषयकाः सन्देहा निवारिता इत्यर्थः। ब्रह्मज्ञानस्य धर्मत्वप्रतिपादक-

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

त्मवि'ति। एतद्वक्ष्यमाणप्रकारकं वैय्यर्थ्यम्। 'अथे'ति। 'प्रतिज्ञाये'ति। कर्तव्यत्वेन प्रतिज्ञाय। 'चोदके'ति। को धर्मः कथंलक्षणक इति स्वरूपप्रमाणजिज्ञासायां यदेतेत्यादिनोद्घाटितं चोदक- वाक्यम्। तदर्थस्य यागादेश्चोदनालक्षणोऽर्थो धर्म इति सूत्रेण, चोदनालक्ष्यत्वाच्चोदनार्थत्वादर्थरूपत्वाच्च धर्मत्वमुक्त्वा वेदान्तानां तदेकदेशत्वाच्चोदनानां प्रामाण्यमाशङ्क्यौत्पत्तिकसूत्रेण तत्प्रामाण्यपुरःसरं शब्दार्थ-

श्रीलालूभट्टकृता सूक्ष्मदीपिका।

स्यादेतत्। 'अथातो धर्मजिज्ञासेति धर्मविचारमि'त्यादिना। 'चोदकवाक्यार्थस्य धर्म- त्वमुक्त्वे'ति। चोदनालक्षणोऽर्थो धर्म इत्यारभ्य चोदकवाक्यार्थस्य धर्मत्वमुक्त्वेत्यर्थः। 'प्रामाण्य- पुरःसरमि'ति। अर्थवादवाक्येषु चोदनाया असत्त्वात्तदर्थस्य धर्मत्वाऽभावेनाऽप्रामाण्य'माम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना'मित्यादिनाऽऽशङ्क्य 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युरि'त्यादिना स्तुत्यर्थेन चोदकवाक्यैरेकवाक्यतां सम्पाद्योपपत्तिपूर्वकमर्थवादवाक्या- नामप्रामाण्यशङ्का निवारितेत्यर्थः। ब्रह्मज्ञानस्योत्तरमीमांसाविषयस्य धर्मत्वमाह—'तत्र ब्रह्मज्ञानस्ये-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

पूर्वपक्षी शङ्कते स्यादेतदिति। एतत् स्यात् ब्रह्मज्ञानस्यापि विध्यर्थत्वेन धर्मत्वात् धर्मवि- चारप्रतिज्ञया प्रतिज्ञातत्वं स्यात्। प्रामाण्यपुरःसरं अर्थवादानां विध्यर्थस्तावकत्वेन प्रामाण्यव्यव- स्थापनपुरःसरम्। सर्वे सन्देहाः मन्त्रार्थवादानामप्रामाण्यसन्देहाः। तत्र धर्मपदार्थमध्ये। धर्मत्वं

---

१–चेति पुस्तके नास्ति।

त्येवोपासीत' 'आत्मानं श्लोकमुपासीत' 'तद्ब्रह्मेत्युपासीत' 'आत्मा वारे द्रष्टव्य' इत्यादिनोदनावाक्यार्थत्वात्। 'अयं हि परमो धर्मो यद्योगेनात्मदर्शन' मिति स्मृतेश्च। सृष्ट्या-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

थयमतदर्थाना'मित्यादिनाऽऽशङ्क्य 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु'रित्यादिना स्तुत्यर्थेन चोदकवाक्यैनैकवाक्यतां सम्पाद्योपपत्तिपूर्वकमर्थवादवाक्यानामप्रामाण्यादिशङ्का निवारिता। तथाचाऽऽ'त्मेत्येवोपासीत' 'आत्मानं श्लोकमुपासीत' 'तद्ब्रह्मेत्युपासीत' 'आत्मा वारे द्रष्टव्य' इत्यादिनोदनावाक्यानामुत्तरकाण्डेऽपि सत्त्वात्तदर्थस्य ब्रह्मज्ञानस्याऽपि धर्मत्वम्। तल्लक्षणाऽऽक्रान्तत्वात्। 'अयं हि परमो धर्म' इत्यादिस्मृतौ त्वात्मदर्शनस्य स्फुटमेव धर्मत्वमुक्तम्।

ननूत्तरकाण्डेऽक्रियार्थानामपि वाक्यानां सत्त्वात्तेषां का गतिरिति चेत्तत्राऽऽहुः–'सृष्ट्यादी'ति। यथा 'वायुर्वै क्षेपिष्ठे'त्यादिवाक्यानां 'वायव्यं श्वेतमालभेते'ति नोदकवाक्यान्तर्गतवायुदेवतास्तावकत्वेन प्रवृत्त्युपयोगितया तद्वाक्यप्रयोजनेनैव सप्रयोजनत्वात्तेषां प्रामाण्यं प्रसाधितं, तथाऽत्राऽप्युपासनाविषयेश्वरस्तावकत्वेन तेषामपि प्रामाण्यमिति भाव। ननु तत्र वायौ क्षिप्रकारित्वादिधर्माणां प्रत्यक्षसिद्धत्वेन तत्प्रतिपादनं संगच्छते। अत्र तूपासनाविषयस्य ब्रह्मणः शुद्धत्वेन धर्माऽभावात्कथमुपा-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

विधीनाह—'आत्मे'ति। ननु जगत्कारणप्रतिपादकवाक्यविचारो न कृत इत्यत आह—सृष्ट्या-

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

विषयकाः सर्वे सन्देहा निराकृताः। चोदनेतिक्रियायाः प्रवर्तकवचनम्। लक्ष्यते ज्ञायते येन तल्लक्षणम्। चोदनैव लक्षणं प्रमाणं यस्येति। लक्ष्यते बुध्यते स्वरूपं येन तल्लक्षणम्। स्वरूपबोधकं वाक्यं यस्येति चेति। अनर्थो धर्मो माभूदित्यर्थग्रहणम्। तथाच यः पुरुषं निःश्रेयसेन युनक्ति स धर्म इति। तदुभयमप्येकेनाऽनेन सूत्रेण व्याख्यातम्। एवञ्चोत्तरकाण्डे धर्मलक्षणाऽऽक्रान्तत्वाज्ज्ञानस्यापि धर्मत्वमित्याहुः—'तत्रे'ति। तत्र हेतुमाहुः—'आत्मेत्येवे'त्यादि। तत्र स्मृतिमपि प्रमाणयन्ति—'अयं ही'ति। सृष्ट्यादिवाक्यानां ज्ञानार्थत्वाऽभावेन तद्विचारस्य गतार्थत्वाऽभावमाशङ्क्य ज्ञानविधावेव तत्सङ्गतिं दर्शयन्ति–'सृष्ट्यादी'त्यादि। 'यतो वा इमानी'त्यादिसृष्टिवाक्यानि।

श्रीलालूभट्टकृता गूढार्थदीपिका।

त्यारभ्य 'स्मृतेश्चे'त्यन्तेन। ननूत्तरकाण्डे ज्ञानस्याऽस्तु धर्मत्वम्। 'आत्मेत्येवोपासीत' 'आत्मानं श्लोकमुपासीत' 'आत्मा वारे द्रष्टव्य' इत्यादिनोदकवाक्यविहितत्वात्। परन्तु 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इत्यादिसृष्ट्यादिवाक्यानां नोदकत्वाऽभावान्न धर्मप्रतिपादकत्वम्। ततश्चाऽप्रामाण्यमापद्येतेत्याशङ्क्य समाधत्ते–'सृष्ट्यादिवाक्यानामि'त्यादिना। यथा पूर्वकाण्डे 'वायुर्वै क्षेपिष्ठा

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

विध्यर्थत्वाद्धर्मत्वम्। ज्ञानस्य धर्मत्वप्रतिपादकविधिमाह–'आत्मे'त्यादि। श्लोकं स्तुत्यम्। ज्ञानस्य स्फुटतया धर्मत्वबोधिकां स्मृतिमाह–'अयं ही'त्यादि। ननूत्तरकाण्डे सृष्ट्यादिप्रतिपादकविधिभिन्नवाक्यानां का गतिरत आह–'सृष्ट्यादी'त्यादि। अर्थवादत्वं उपासनाविध्यर्थस्तावकतया विध्ये-

दिवाक्यानां त्वर्थवादत्वम् । आरोपापवादविषयधर्मप्रतिपादकत्वेन विधेयोपासनाविषय-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

सनाविषयत्वम् । कथं वा स्तुतिविषयत्व तत्राऽऽह–'आरोपे'ति । न हि ब्रह्मणि वास्तवा धर्माः सन्ति । नित्यशुद्धबुद्धोदासीनत्वेन सर्वथैव तस्याविषयत्वात् । तथा च तत्प्रतिपत्तेरस्थूलादिश्रुतिभिर्निषेधमुखेन प्रतिपादितत्वान्निषेध्यानां तत्राऽसत्वान्निषेधार्थं तानारोपयन्ती श्रुतिस्तेषामपवादविषयत्वं सूचयतीति नोपासनायाः स्तुतेर्वाऽनुपपत्तिरित्यर्थः । ननु ना'ऽऽत्मेत्येवोपासीते'त्यादौ विधिः सम्भवति । आत्मज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वेनाऽविधेयत्वात् । हेयोपादेयविषयो हि विधिः । स एव च हेय उपादेयो वा अयं पुरुषः कर्तुमन्यथाकर्तुं च शक्नोति । तत्रैव च समर्थः कर्ता नियोज्यो भवति । न चैवं-भूतान्यात्मोपासनदर्शनादीनीति न तेषां विधिविषयत्वम् । तथाच कथं धर्मजिज्ञासया गतार्थत्वं

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

दी'ति । अस्माकं मते जगतो नित्यत्वात्कर्तुरभावेन तत्प्रतिपादकानां, **यतो वा इमानि भूतानि जायन्त** इत्यादिवाक्यानामर्थवादत्वमित्यर्थः । ननु कथमस्याऽर्थवादत्वमित्यत आह—'**आरोपे**'ति । '**धर्मे**'ति । कर्तृत्वाकर्तृत्वरूपधर्मप्रतिपादकत्वेन विधेयस्तावकत्वात्प्रामाण्यमित्यर्थः ।

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

आदिना '**सत्यं ज्ञानमनन्त**'मित्यादिस्वरूपपराणां सग्रहः । ईदृशानि वाक्यानि तद्विधावेवार्थवाद-विधयाऽन्वीयुरिति भावः । तत्रोपपत्तिमाहुः—'**आरोपे**'ति । तयोर्विषयीभूतो धर्मः कर्तृत्वादिः । '**विधेये**'ति । उपासीतेत्यादिविधिविषयीभूता योपासना तद्विषय आत्मा । तत्स्तावकत्वात् ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

देवतेत्यादिवाक्यानां' 'वायव्यं श्वेतमालभेते'ति नोदकवाक्यान्तर्गतवायुदेवतास्तावकत्वेन प्रवृत्त्युपयोगि-तया नोदकवाक्यप्रयोजनेनैव सप्रयोजनत्वात्तेषां प्रामाण्य निरणायि । तथाऽत्राप्युपासनाविषयपरमे-श्वरस्तावकत्वेन सृष्ट्यादिवाक्यानामुपयोगात्तेषामपि प्रामाण्यमिति हार्दम् । ननु वायौ क्षिप्रकारित्वादि-धर्माणां प्रत्यक्षत्वात्तत्प्रतिपादन युक्त, प्रकृते तूपास्यस्य ब्रह्मणो निर्धर्मकत्वात्तोपासनाविषयत्व न वा स्तुतिविषयत्वमित्याशङ्क्याऽऽह–'**आरोपापवादे**'त्यादि । अस्थूलमनण्वह्रस्वमदीर्घमित्यादिश्रुतिभिर्ध-र्माणां निषेधान्निषेध्यानां तत्राऽसत्वान्निषेधस्य प्राप्तिपूर्वकत्वनियमान्निषेधार्थं जगत्कर्तृत्वाद्यारोपयति श्रुतिरित्यारोपापवादयोर्विषया ये धर्माः सृष्ट्यादय ईश्वरीयास्तत्प्रतिपादकत्वाज्जगज्जननादिनिरूपिकाणां श्रुतीनां प्रामाण्यमक्षुण्णम् । विधेयोपासनाविषयपरमेश्वरस्तावकत्वादित्यर्थः । ननु ना'ऽऽत्मेत्येवोपासीते' त्यादौ विधिः । आत्मज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वेनाऽविधेयत्वात् । विधिर्हेयोपादेयविषयः । यस्तु पुरुषेण कर्तुं शक्यतेऽन्यथाकर्तुं च शक्यते स हेय उपादेयः । तस्मिन् समर्थः कर्ता नियोज्यो वि-धिना । प्रकृते त्वात्मोपासनदर्शनादीनि नैतादृशानीति न तेषां विधिविषयत्वमतः कथ ब्रह्मजिज्ञासाया

आर्यवंशीयश्रीमदिच्छारामप्रणीत प्रदीप ।

कवाक्यतया प्रामाण्यमित्यर्थः । तदेव चोपपादयति–**आरोपेत्यादिना** । आरोपः 'ऐतदात्म्यमिदं सर्वं' 'यतो वा इमानि' इत्यादिवाक्यार्थः । अपवादः 'अथात आदेशो नेति नेती'तिरूपः । **तद्विषयाः**, मिथ्याभूताः सर्व एव धर्मा । **तत्प्रतिपादकत्वेन** सृष्टिब्रह्माभेदप्रतिपादकवाक्यानां तत्प्रतिपादक-त्वेन । **विधेयोपासना** प्रपञ्चकर्तृत्वसर्वाभिन्नत्वादिना विहिता या प्रतीकोपासना । **तद्विषयेत्यादिना**

स्तावकत्वात् । नच ज्ञानादीनामविधेयत्वं प्रमाणवस्तुपरतन्त्रत्वेनाकृतिसाध्यत्वादिति वाच्यम् । नहि सर्वात्मनाऽसाध्यम् । प्रकारभेदस्त्वप्रयोजकः सर्वस्यापि कारणेषु पुरुषव्यापृतिः

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

ब्रह्मजिज्ञासाया इत्याशङ्क्य पूर्वपक्षी परिहरति–'**न च ज्ञानादीनामि**'ति । तत्रोपपत्तिमाहुः–'**नही**'ति । यद्यपि ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्व सर्ववादिसिद्धं, तथापि न सर्वात्मनाऽसाध्यत्वम् । तर्हि कस्मिन्नंशे साध्यं तदित्यत आह–'**प्रकारभेदस्त्वि**'ति । यथा ज्योतिष्टोमादिक स्वरूपोपकारिभिः फलोपकारिभिश्चाङ्गैस्तेन तेन क्रमेण स्वकृतिसाध्यं, न तथाऽस्ति । ज्ञानस्य स्वरूपतोऽसाध्यत्वात् । ननु तर्हि सर्वात्मनैव तदसाध्यं स्यादिति चेत् । न । स्वरूपतोऽसाध्यत्वेऽपि तत्कारणानां श्रवणादीनां साध्यत्वात् ।

ननु साधनानां साध्यत्वे कथं तत्फलस्य साध्यत्वमित्यत आहुः–'**सर्वस्यापी**'ति । यथा 'स्वर्गकामो

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

ननु कृतिसाध्यत्वस्यैव विध्यर्थत्वात्सामान्यतो ज्ञाने यत्नापेक्षाया अभावाद्ब्रह्मज्ञाने विध्यर्थत्वरूपधर्मत्वाभाव इत्याशयेनाऽऽशङ्कते—'**नन्वे**'ति । '**प्रमाणे**'ति । प्रमाणं चक्षुरादिः । वस्तु घटादिः । परतन्त्रत्वेन उभयाधीनत्वेन । न हि केवलं ज्ञाने प्रमाणवस्त्वपेक्षा, किन्तु प्रत्यक्षादिज्ञाने चक्षुःसन्निकर्षापेक्षाप्यस्तीति यत्न विना चक्षुःसन्निकर्षो न जायत इति कृत्वा परम्परया कृतिसाध्यत्वं ज्ञानेऽप्यस्तीत्याशयेनाऽऽहुः—'**सर्वात्मना**' सर्वप्रकारेण । '**असाध्यमि**'ति । ज्ञानमिति शेषः ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

ननु व्यर्थोऽयं सर्वोऽपि प्रयासो ज्ञानादीनां विधेयत्वाऽसम्भवेन विद्यार्थवादकल्पनानैरर्थक्यादित्यत आहुः–'**नचे**'ति । '**प्रमाणे**'ति । प्रमाणं चक्षुरादि । वस्तु विषयः । तदधीनत्वेन तदसाध्यत्वात् । समादधते–'**न ही**'ति । स्वरूपसाधनांशेनाऽसाध्य नेत्यर्थः । ननु पुरुषव्यापारतन्त्रत्वाऽभावात्कथं साध्यता । तदेव हि साध्य यत्पुरुषव्यापारतन्त्रम् । यथाग्निहोत्रादि । ज्ञानञ्च प्रमाणवस्तुपरतन्त्रत्वान्न तथेत्यत आहुः—'**प्रकारे**'ति । उक्तो यः प्रकारभेदः स तु नाऽविधेयताप्रयोजकः । यतः स्वरूपतोऽसाध्यत्वेनाऽपि न साधनांशेनाऽसाध्यं तत् । ननु ज्ञानसाधनानां साध्यत्वे कथ तस्य साध्यत्वं स्यादित्यतो ब्रुवते–'**सर्वस्ये**'ति । स्वर्गस्याऽपूर्वस्य वा । साधने योगादौ । पुरुषस्य व्यापृत्तिर्व्या-

श्रीकालूभट्टकृता गूढार्थदीपिका ।

धर्मजिज्ञासया गतार्थत्वमित्याशङ्क्याऽऽह–'**न च ज्ञानादीनामि**'त्यादि । '**न हि सर्वात्मनाऽसाध्यमि**'ति । सन्निकर्षादिजनककृत्यपेक्षाया ज्ञानेऽपि सत्वाच्च सर्वप्रकारेणाऽसाध्यत्वमित्यर्थः । ननु–कर्मवत्साक्षात्कृतिसाध्यत्वाऽभावान्न विधेयता ज्ञानादीनामित्याशङ्क्याऽऽह–'**प्रकारभेदस्त्वप्रयोजक**' इति । प्रकारभेदस्त्वविधेयत्वसाधको न भवति । यतो धर्मेऽपि साक्षात्कृतिसाध्यत्व नाऽस्तीति प्रदर्शयति–'**सर्वस्यापि कारणे पुरुषव्यापृतिरि**'ति । धर्मस्याऽपूर्वरूपत्वात्तस्याऽपि कारणभूते

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीप ।

तादृशोपासनाविषयजगत्कर्तृत्वसर्वाभेदादिस्तावकत्वात् तादृशधर्मसम्बन्धबोधनेनोपास्यस्तुतिपरत्वादित्यर्थः । ननु उपासनाया· ज्ञानरूपत्वात्तस्याः ज्ञानगोचरेच्छायाश्च कृत्यसाध्यत्वात्कृतिसाध्यस्यैव च विधिविषयत्वात् ज्ञानविध्येकवाक्यतया सृष्टिप्रतिपादकार्थवादानां प्रामाण्यमुक्तमसम्भवि ज्ञानविधेरेवासम्भवादिति दूषण परिहर्तुं वादी शङ्कते–'**नचे**'त्यादि । '**ज्ञानादी**'त्यादिपदेनेच्छा ग्राह्या । अवि-

१–अत्रैवाऽऽहुरिति मपुस्तके । २ क्वचिदाहु क्वचिदाहेति रपुस्तके लभ्यते ।

**तदत्र वृत्तिसम्पादने प्रमाणसम्पादने वा पुरुषकृतिसाध्यत्वं, अन्यथा सिद्धान्तेऽपि मन-**

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

यजेते'त्यादौ स्वर्गशब्दवाच्यस्य देवयानमार्गेण ब्रह्मप्राप्तिरूपस्याऽऽत्मसुखस्य वा, लोकस्य वा, फलस्य स्वत एव सिद्धत्वेनाऽसाध्यत्वात्तदभिव्यक्तिसाधनस्य ज्योतिष्टोमादेः साध्यत्वेन, तेषामपि साध्यत्वव्यपदेशस्तथा श्रवणादीनां कृतिसाध्यत्वेन ज्ञानस्यापि तद्व्यपदेश इत्यर्थः । ननु प्रमाणवस्तुपरतन्त्रस्य तस्य कथं श्रवणादिसाध्यत्वमित्यत आह–'**तदत्रे**'ति । यस्मात्कारण एव सर्वस्य व्यापृतिर्लोके दृष्टा । तत् तस्मात् । अत्र ज्ञाने । वृत्तेरन्तःकरणपरिणामविशेषस्य **सम्पादने** पुरुषकृतिसाध्यत्वमङ्गीकर्तव्यमित्यर्थः । ननु वृत्तेरेव ज्ञानरूपत्वेन कथं तत्कृतिसाध्यत्वमित्याशङ्क्य पक्षान्तरमाह–'**प्रमाणस्ये**'ति ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

ननु यागस्य साक्षात्कृतिसाध्यत्वमस्तीति तस्यैव धर्मत्वमित्यत आहुः–'**प्रकारे**'ति । प्रकारो विशेषणं तस्य भेदः । यागे साक्षात् यत्कृतिसाध्यत्वं विशेषणं तदेव धर्मत्वे प्रयोजकम् । परम्परया यत्कृतिसाध्यत्वं विशेषणं तद्धर्मत्वे प्रयोजकं न भवतीत्येवंरूपो भेद इत्यर्थः । '**अप्रयोजक**' इति । धर्मत्वे प्रयोजको न भवतीत्यर्थः । साक्षाद्वा परम्परया वा केवलं कृतिसाध्यत्वमेव धर्मत्वे प्रयोजकमिति स्वीकर्तव्यमिति भावः । नन्विदं किमर्थं स्वीकर्तव्यमित्यत आह–'**सर्वस्यापी**'ति । यागरूपधर्मस्य यागजन्यापूर्वरूपधर्मस्याऽपीत्यर्थः । **कारणेषु**, यागे कारणीभूताः क्रियाकलापाः, अपूर्वे कारणीभूताः प्रधानप्रयाजादयः, तेषु सर्वेषु, पुरुषस्य व्यापृतिः यत्नरूपो व्यापारोऽस्तीत्यर्थः । प्रकृते ज्ञान उपसंहरति–'**तदि**'ति । तत्तस्मात्कारणात् । अत्र ब्रह्मज्ञाने । वृत्तिसम्पादने, वृत्तेः सम्पादनं वृत्तिसम्पादनम् । वृत्तेः ब्रह्माकारवृत्तेर्बुद्ध्यवस्थाविशेषरूपाया इति यावत्, सम्पादने उत्पादने । प्रमाणसम्पादने प्रमाणस्य चक्षुरादेर्मनसश्च,

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

पारो दृश्यते, न तु यागादिफले स्वर्गादौ, तथापि तस्मिन् साध्यत्वव्यवहारः । तथा ज्ञानेऽपीत्याहुः–'**तदि**'ति । **तत्तस्मादत्र** ज्ञाने बुद्धिजन्याया पदार्थान्तररूपाया वा वृत्तेः सम्पादने । वृत्तेरेव ज्ञानरूपत्वपक्षमाशङ्क्याहु–'**प्रमाणे**'ति । मनसेन्द्रियैः संयोजनम् । चक्षुष आवृत्तिसम्पादनं वा । आवृत्तचक्षुरिति श्रुतेः । मनसो निर्विषयत्वसम्पादनं वा । **अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुभि**रिति श्रुतेस्तज्ज्ञेयम् । विपक्षे बाधकमाहु–'**अन्यथे**'ति । श्रौते सिद्धान्ते **मन्तव्यो निदिध्यासितव्यः, साक्षात्कर्तव्य** इत्यादि वाक्यवैफल्यं स्यात् ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

क्रियासमूह एव पुरुषव्यापारो यत्नात्मा दृश्यते । न तु साक्षाद्धर्मे कृतिजन्यत्वमित्यर्थः । प्रकृते तथात्वमाह–'**तदत्र वृत्ती**'त्यादि । अत्र ज्ञाने बुद्ध्यवस्थाविशेषरूपाया वृत्तेः सम्पादने पुरुषकृतिसाध्यता, प्रमाणसाधने वा पुरुषकृतिसाध्यतेत्युभयोस्तौल्यमित्यर्थः । प्रमाणानां चक्षुरादीनां साधने

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

धेयत्वं यागादीनामिव कृतिसाध्यत्वाभावेनाविधेयत्वम् । '**प्रमाणे**'त्यादि । श्रवणमनननिदिध्यासनादिस्वकारणसामग्र्यधीनत्वेनेत्यर्थः । वादी समाधत्ते–'**नही**'त्यादि । '**सर्वात्मने**'त्यादि । तथा च ज्ञानोत्पादकसन्निकर्षादिसामग्रीसम्पादनार्थं कृतेरपेक्षणात् न सर्वात्मना कृत्यसाध्यं ज्ञानम् । परम्परया ज्ञाने कृतिप्रयोज्यतायाः सत्त्वादित्यर्थः । ननु तथापि यागादेरिव साक्षात्कृतिसाध्यत्वाभावान्न कृतिसाध्यं ज्ञानमित्यत आह–'**प्रकारभेद**' इत्यादि । प्रकारभेदः साक्षात्कृतिसाध्यत्वरूपप्रकारभेदः । 'अप्रयो-

नादिशास्त्रवैफल्यापत्तेः साधनप्रतिपादकश्रुतिविरोधश्च येनाऽपि सर्वक्रियाफलत्वं निराकार्यं

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

**प्रमाणस्य** इन्द्रियस्य वा। **सम्पादने** मनसा सह संयोजने। पुरुषकृतिसाध्यत्वात्सामग्रीसम्पादनद्वारैव श्रवणादीनां तत्साधनत्वमिति भावः। विपक्षे बाधकमाहुः–'**अन्यथे**'ति। यदि सामग्रीसम्पादनद्वारापि न श्रवणादीनां तत्साधनत्वं तदा '**मन्तव्यो निदिध्यासितव्य**' इत्यादिशास्त्रस्य वैफल्यमेव भवेत्। मननादीनां परम्परयापि फलासाधकत्वादित्यर्थः। नन्वेवमेवाऽस्तु किं तेनेत्यत आहुः–'**साधने**'ति। यदि सर्वप्रमाणमूर्द्धन्यो वेदः षण्डसाधनप्रतिपादकः स्यात्तदा मूर्द्धन्यत्ववेदत्वयोः सहाऽनवस्थानलक्षणो विरोधः स्यात्। '**येनाऽपी**'ति। आस्तां तावच्छ्रवणादीनामसाधकत्वं, तथापि '**समित्पाणिः**

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

**आवृत्तचक्षुरमृतत्वमिच्छन्नि**ति श्रुत्या चक्षुषि व्यावृत्तत्वसम्पादने। **अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणे**ति श्रुत्या मनसो निर्विषयत्वसम्पादने, पुरुषप्रयत्नसाध्यत्वमित्यर्थः। ननु वृत्तिसम्पादनादिषु किमर्थं यत्नापेक्षेत्यत आह–'**अन्यथे**'ति। अन्यथा, वृत्तिसम्पादने सर्वथा कृतिसाध्यत्वाऽस्वीकारे। सिद्धान्तेऽपि वेदान्तिमतेऽपि। '**मननादी**'ति। मन्तव्य इति विधिवैफल्यापत्तेरित्यर्थः। वृत्त्यादिसम्पादनस्य मननोपकारकत्वात्तत्र कृतिजन्यत्वाऽस्वीकारे तव्यप्रत्ययार्थस्य कृतिसाध्यत्वस्य, तत्राऽभावाद्वैयर्थ्यमिति भावः। सर्वथा ज्ञाने यत्नाऽनादरे दूषणान्तरमाह–'**साधने**'ति। श्रुति-

केश्चिद्विरचिता वेदान्तचन्द्रिका।

ननु श्रुतार्थेऽनुपपत्त्यादिपरिहारार्थत्वान्न तद्वैफल्यमित्यत आहुः—'**साधने**'ति। तास्तु, **तपसा ब्रह्म विजिज्ञासस्व, वयसापराणि पञ्चवर्षाणि, शान्तो दान्तः, तमेतं वेदानुवचनेने**त्यादयोऽनुसन्धेयाः। एवमसाध्यतां निरस्य साध्यत्वं दर्शयन्ति–'**येनाऽपी**'ति। उपसं-

श्रीलालूभट्टकृता गूढार्थदीपिका।

'आवृत्तचक्षुरमृतत्वमिच्छन्नि'ति श्रुतेरावृत्तत्वसम्पादने पुरुषकृतिसाध्यतेति ज्ञानादीनां नाऽविधेयतेत्याकलितव्यम्। ज्ञानादीनामविधेयतास्वीकृतौ दूषणमाह–'**अन्यथे**'त्यादि। यदि ज्ञानादयः सर्वथैवाऽविधेयाः स्युस्तदा 'मन्तव्यो निदिध्यासितव्य' इत्यादिशास्त्राणां वृथात्वं स्यात्। मननादिभिः सिषाधयिषितस्य ज्ञानस्याऽसाध्यत्वात्। असाध्यत्वे दूषणमाह–'**साधनप्रतिपादकश्रुतिविरोधश्चे**'ति। '**तपसा ब्रह्म विजिज्ञासस्वे**'त्यादिश्रुतीनां विरोधो, यदि ज्ञानस्य साध्यत्वं नाङ्गीक्रियत इत्यर्थः। '**येनापी**'त्यादि। येनाप्युत्तरमीमांसावादिना ज्ञाने सर्वक्रियाफलत्वं निराकार्यं तेनाऽपि ज्ञानार्थे

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

जक'इति 'न ममे'त्याकारकेच्छाविशेषस्यैव यागत्वेन यागेऽपि क्रियाकलापजनककृतेः साध्यत्वं परम्परयैव वाच्यम्। तादृश च सन्निकर्षादिजनककृतिसापेक्षत्वं ज्ञानेऽपीति साक्षात्कृतिजन्यत्वरूपः प्रकारभेदोऽप्रयोजक इत्यर्थः। तदेवोपपादयन्ति–'**सर्वस्ये**'त्यादि। **सर्वस्य** ज्ञानयागादेः। **कारणे** सन्निकर्षादिक्रियाकलापादौ। **पुरुषप्रवृत्तिः** पुरुषकृतिसाध्यत्वं। **अन्यथा** ज्ञानस्य परम्परया कृत्यधीनत्वानङ्गीकारे। **सिद्धान्ते** ज्ञानस्याविधेयत्वाङ्गीकारिमते। **वैफल्यापत्तेः**, तेन शास्त्रेण परम्परया कृत्यधीनत्वं बोध्यते ज्ञानस्य तस्य च भवन्मतेऽनङ्गीकाराद्वैफल्यमित्यर्थः। **साधनेत्या**दि। तथा च

१ चेदित्यधिकं पाठः पुस्तके।

**तेनापि गुरूपसत्त्यादिना यतितव्यमेव ज्ञानार्थं । तस्माद्यत्रापि विध्यश्रवणं तत्रापि विधिं परिकल्प्य तत्रत्यानां तच्छेषत्वं कल्प्यमिति नार्थोऽनया मीमांसया अन्यथा विरोधोऽपि ।**

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या ।

**श्रोत्रियमि**'त्यादौ गुरूपसत्त्यादेः सर्वथैवाऽपेक्षितत्वेन सर्वथैव क्रियाफलत्वस्याङ्गीकर्तव्यत्वात् । नहि गुरूपसत्त्यादिकं विना स्वत एव ज्ञानोत्पत्तेस्तदधिकारस्य वा सम्भवोऽस्ति । ननूत्तरकाण्ड '**आत्मेत्येवोपासीते**'त्यादौ विधिश्रवणेऽपि न '**ब्रह्मविदाप्नोती**'त्यादौ विधिश्रवणमस्ति । तथा च तत्रत्यानामन्येषां वाक्यानां का गतिरिति चेत्तत्राऽऽहुः—'**तस्माद्यत्राऽपी**'ति । यस्मा'**द्वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि**'त्यादौ तदश्रवणेऽपि द्रव्यदेवतयोः श्रवणेन तदन्यथाऽनुपपत्त्या तत्कल्पनं पूर्वतन्त्रसिद्धम् । तथात्रापि '**ब्रह्मविदाप्नोती**'त्यादौ विधिं परिकल्प्य तत्रत्यानां '**सत्यं ज्ञान**'मित्यादीनां

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

विरोधः, **तपसा ब्रह्म विजिज्ञासस्वेति** श्रुतिविरोधः । तपःपदस्य यत्ने पर्यवसानमेव । **तप इन्द्रियनिग्रह** इति वाक्यादन्ततो निग्रहे यत्नापेक्षायाः सत्त्वादिति भावः । कर्मवादी साधारणरीतिमाश्रित्य वदति—'**येनापी**'ति । '**तेनापी**'ति । येन पुरुषेण साक्षात् परम्परया वा सर्वकृतिफलत्वं लोके पाकादौ, वेदे च यागादौ, स्वीक्रियते । ज्ञाने तु निराक्रियते । तेन पुरुषेणापीत्यर्थः । गुरूपसत्त्यादिना, **समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति** श्रुत्या कृतिजन्यगुरुसमीपगमनरूपक्रियाजन्यत्वं ज्ञानेऽवश्यं स्वीकर्तव्यमित्यर्थः । स्वमतमुपसंहरति—'**तस्मादि**'ति । यत्र वेदान्तवाक्ये तत्रत्यानां वाक्यानां पदानामित्यादिः । तच्छेषत्वं तादृशविध्यङ्गत्वम् । '**अन्यथे**'ति । विध्यकल्पने । '**विरोधोऽपी**'ति । वाक्यभेदेन पूर्वकाण्डेऽन्यप्रतिपादनमुत्तरकाण्डे चाऽन्यप्रतिपादनमित्येवंरूपो

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

हरन्ति—'**तस्मादि**'ति । उक्तरीत्या गतार्थत्वात् । '**यत्राऽपी**'ति । '**ब्रह्मविदाप्नोति परमि**'त्यादिवाक्ये ससाधनफलमात्रश्रवणं, विधिश्च न । तस्मिन्नपि वाक्ये **वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि**त्यादिवाक्यवत्परप्राप्तिकामो ब्रह्म विद्यादित्यादिविधिं कल्पयित्वा तत्प्रकरणस्थानां सत्यं

श्रीलालूभट्टकृता गूढार्थदीपिका ।

गुरूपसत्त्यादि विधेयमेवेति ज्ञाने गुरूपसत्त्यादिक्रियासाध्यत्वमित्यर्थः । ननु 'आत्मेत्येवोपासीते'त्यादौ विधिश्रवणेऽपि 'ब्रह्मविदाप्नोति परमि'त्यादौ विध्यश्रवणात्तेषां वाक्यानां का गतिरित्याशङ्क्य समाधत्ते—'**तस्माद्यत्रापी**'त्यादिना । यथा 'वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनमि'त्यादौ विध्यश्रवणेऽपि द्रव्यदेवताश्रवणेन तदन्यथानुपपत्त्या विधिकल्पनं पूर्वत्र सिद्धं तथाऽत्रापि 'ब्रह्मविदाप्नोती'त्यादौ विधिं परिकल्प्य तत्रत्यानां 'सत्यं ज्ञानमनन्तमि'त्यादीनां विधिशेषत्वं कल्पयितव्यमिति सर्वत्रैव निर्वाहे

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

सर्वथा ज्ञानस्य कृत्यसाध्यत्वे 'तपसा ब्रह्म विजिज्ञासस्वे'त्यादिसाधनबोधकश्रुतिविरोध इति भावः । **सर्वक्रिये**त्यादि । साक्षात्परम्पराकृतिसामान्यफलत्वं निराकार्यमित्यर्थः । **यत्रापि** उत्तरकाण्डे 'ब्रह्मविदाप्नोति पर'मित्यादिवाक्येषु । **विध्यश्रवणं** ब्रह्मविदाप्नुयादित्याकारकविध्यश्रवणम् । **विधिं परिकल्प्य** आप्नोतीत्यत्र पञ्चमलकारत्वं परिकल्प्येत्यर्थः । **तत्रत्यानां** 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिवाक्यानाम् । **तच्छेषत्वं** तद्विध्येकवाक्यतया प्रामाण्यमुरीकार्यमित्यर्थः । **इत्नी**ति हेतौ । पूर्वोक्त-

स्यादेतत् । ब्रह्मविचार एवारम्भणीयो न धर्मविचारः । सर्ववेदव्यासकर्त्रा वेदव्यासेनाऽकृ-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

तच्छेषत्वं कल्प्यमिति पूर्वयैव गतार्थत्वान्नाऽनयोत्तरया मीमांसयाऽर्थः प्रयोजनं सेत्स्यतीत्यस्या अकरणमेवापतति । नहि प्रयोजनमनुद्दिश्य कस्यापि प्रवृत्तिर्दृष्टा । ननु नात्र ब्रह्मविदाप्नोतीत्यादौ विधिकल्पनम् । वास्तार्थमात्रप्रतिपादकत्वेनैव वाक्यानां निराकाङ्क्षत्वादित्याशङ्क्य परिहरन्ति–'अन्यथे'ति । अन्यथा विध्यकल्पने । तत्रत्यानां विधिशेषत्वाभावेन सिद्धार्थप्रतिपादकत्वात् । आम्नायस्य सर्वस्यापि क्रियार्थत्वमिति पूर्वतन्त्रसिद्धान्तस्य विरोधोऽपि भवेदित्यर्थः ।

अत्र सिद्धान्त्यैकदेशी प्रत्यवतिष्ठते । 'स्यादेतदि'ति । यदुक्तं निष्प्रयोजनं नाऽऽरम्भणीयमिति तत्तु स्यादेव । तर्हि किमनुपपन्नमिति चेत्तत्राऽऽहुः–'ब्रह्मे'ति । ब्रह्मजिज्ञासैवाऽऽरम्भणीया, न धर्मजिज्ञासेति वैपरीत्यस्यैव वक्तुमुचितत्वात् । धर्मजिज्ञासाया निष्प्रयोजनत्वात् । कथं तदित्याकाङ्क्षायामुपपत्तिमाहु–'सर्ववेदे'ति । व्यासो हि सर्वज्ञो भगवद्रूपः सर्वस्यैव वेदस्य विस्तारं कृतवान् । नहि ब्रह्मस्व-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

विरोध इत्यर्थः । अपिपदेन सर्वस्य वेदस्य धर्मप्रतिपादकाऽभावे, वेदोऽखिलो धर्ममूलमिति स्मृतिविरोधोऽपि सगृह्यते । वितण्डावादी प्रत्यवतिष्ठते–'स्यादेतदि'ति । वेदव्यासकर्त्रा वेदविभागकर्त्रा । सर्वज्ञेनेति यावत् । तुच्छफलत्वात् पुनरावृत्त्या स्वर्गस्य तुच्छफलत्वात् ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

ज्ञानमनन्तं ब्रह्मेत्यादिवाक्यानां तद्विधिशेषत्वं कल्पनीयमिति न प्रयोजनमनयोत्तरमीमांसया । 'अन्यथे'ति । उक्तविधोत्तरकाण्डविचारानङ्गीकारे आम्नायस्य क्रियार्थत्वरूपपूर्वतन्त्रसिद्धान्तविरोधः । अपिना, वेदोऽखिलो धर्ममूलमिति स्मृतिविरोधः सगृहीतः ।

अत्र सिद्धान्त्यैकदेशी प्रत्यवतिष्ठते–'स्यादेतदि'ति । एतद्वक्ष्यमाणं पूर्वमीमांसाया एव वैयर्थ्यम् । 'ब्रह्मे'ति । सप्रयोजनत्वाद्ब्रह्मविचारस्तथा । निष्प्रयोजनत्वं दर्शयन्ति–'सर्ववेदे'ति ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

पूर्वमीमांसयैवोत्तरमीमांसाया गतार्थत्वमित्यर्थः । 'अन्यथा विरोधोऽपी'ति । विधिक-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

रकाण्डद्वयार्थस्यापि पूर्वमीमांसयैव गतार्थत्वात् हेतोः । 'नार्थोऽनये'त्यादि । अनया उत्तरमीमांसया । नार्थः न प्रयोजनम् । इत्थं तथा च 'प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते' इतिन्यायादुत्तरमीमांसाया प्रवृत्तिरेव न सम्भवतीत्यर्थः । अन्यथा 'ब्रह्मविदाप्नोति परमि'त्यत्र विधिं परिकल्प्य तत्रत्यवाक्याना तदेकवाक्यतया प्रामाण्यमित्यस्य पक्षस्यानङ्गीकारे । विरोधोपि उत्तरकाण्डस्य सर्वस्य सिद्धार्थमात्रबोधकतया गतार्थत्वाङ्गीकारे विरोधः । 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना'मिति स्मृतिबलादुत्तरकाण्डस्यानर्थक्यापत्तिरूपो विरोध इति भावः ।

सिद्धान्त्यैकदेशी पूर्ववादिसिद्धान्तं दूषयितुं प्रत्यवतिष्ठते–'स्यादेतदि'ति । एतत् वक्ष्यमाणं पूर्वमीमांसाया अपि निःप्रयोजनत्वम् । तदेवोपपादयति–ब्रह्मेत्यादिना । सर्ववेदव्यासकर्त्रा सर्व-

१ पूर्वयैवेति क्पुस्तकम् ।

तत्वात्तुच्छफलत्वाच्च । कल्पोक्तप्रकारेण निःसन्दिग्धं करणसम्भवाच्च । आचारपरम्परयापि करणसम्भवाच्च । एतदर्थमपि सन्देहे सूत्रभाष्ययाज्ञिकानामेवानुवृत्तिः क्रियते । न मीमांस-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

रूप तदतिरिक्तेन ज्ञातु शक्यम् । 'न हि ते भगवन् व्यक्तिमि'तिवाक्यात् । तथा च यदि धर्मजिज्ञासया किञ्चित्प्रयोजन सिद्ध्येज्जीवानां तदा तदुपयोगित्वेन तेनैव सा कृता स्यात् । न चैवम् । तदेतदुक्तं 'सर्ववेदव्यासकर्ता वेदव्यासेनाकृतत्वादि'ति ।

किञ्च । धर्मजिज्ञासा हि तदनुष्ठानफला । नहि तदनुष्ठान पुरुषार्थपर्यवसायि । '**तद्यथेह कर्मजितो लोकः क्षीयत**' इति श्रुतेः । ननु धर्मानुष्ठानस्यापि निष्कामस्य चित्तशुद्धिद्वारा पुरुषार्थपर्यवसायित्वं सर्वत्र श्रूयते । तथा च कथमकर्तव्यतेत्याशङ्क्याऽऽह—'**कल्पोक्तप्रकारेणे**'ति । निष्कामस्य तस्य पुरुषार्थपर्यवसायित्वेऽपि कल्पसूत्रोक्तप्रकारेणैव तदुपपत्तौ जिज्ञासाया निष्प्रयोजनत्वमेव । ननु कल्पसूत्ररहस्याऽनवबोधे, जिज्ञासैव शरणमिति चेत्तत्राऽऽहुः—'**आचारे**'ति । '**श्रुतिः स्मृतिः**

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

ननु पूर्वमीमांसाभावे केवल स्वर्गकामनावता पुरुषेण कथं यागः कर्तव्य इत्यत आह—'**कल्पोक्ते**'ति । तत्रापि सशये सत्याह—'**आचारे**'ति । इदानीं स्वर्गकामनार्थं यागः कर्तव्य इति

किश्चिद्विरचिता वेदान्तचन्द्रिका ।

अनेकधा वेदविभागकर्त्रा । निष्प्रयोजनत्वेनैव तथात्वात् । तथाच सर्ववेदव्यासकर्तुः सर्वज्ञस्य तत्करणे क प्रयासः स्यादतोऽकरणान्निष्प्रयोजनत्वमेव तस्य दर्शितं भगवद्व्यासचरणैरितिभावः । ननु धर्मज्ञानफलत्वात्कथ वैयर्थ्यमित्यत आहु—'**तुच्छे**'ति । **तद्यथेह कर्मजितो लोकः क्षीयत** इतिश्रुतेः क्षयिष्णुत्वात् । ननु धर्मानुष्ठानफलकस्य तस्य कथ वैयर्थ्यम् । निष्कामस्य तस्य चित्तशुद्धिद्वारा ज्ञानफलत्वाद्धर्मज्ञानार्थं तद्विचार आवश्यक इत्याहुः—'**कल्पोक्ते**'ति । ननु कल्पसूत्रैः कर्तव्यताप्रकारः प्रदर्श्यते, ननु कर्तव्यतासन्देहो निरस्यत इति तदर्थं तदावश्यकतेत्यत आहुः—'**एतदर्थ**'ति । आचारपरम्परासन्देहे । '**सूत्रे**'ति । कल्पसूत्रम् । भाष्यम् । **याज्ञिकाः** कृतकारित-

श्रीलालूभट्टकृता सूक्ष्मार्थदीपिका ।

त्पत ऐकार्थ्याभावेन वाक्यभेदापत्तावैकशास्त्र्यविरोध इत्यर्थः । '**कल्पोक्तप्रकारेणे**'त्यादि । कल्प-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

वेदार्थतत्त्ववेत्रा इत्यर्थः । **तुच्छफलत्वात्** । 'तद्यथेह कर्मजितो लोकः क्षीयत' इतिश्रुत्युक्तसान्तफलप्रतिपादकत्वेन तुच्छफलत्वादित्यर्थः । ननु निष्कामकृतकर्मणामपि पुरुषार्थपर्यवसायित्वात्तादृशधर्मानुष्ठानार्थं पूर्वमीमांसा सप्रयोजना भविष्यतीत्यत **कल्पोक्तेत्यादि** । कल्पसूत्रोक्तेतिकर्तव्यतामादाय नि सन्दिग्ध करणसम्भवादित्यर्थः । ननु यस्य सूत्रार्थनिर्णयो न जातस्तस्य धर्मानुष्ठानार्थं धर्ममीमांसावश्यकतैवेत्यत आहु । '**आचारे**'त्यादि । तथा 'श्रुतिः स्मृतिः सदाचार' इत्यत्र सदाचारस्यापि धर्महेतुत्वेन निरूपणात्परम्पराचारदर्शनादेव धर्मानुष्ठानसम्भवादप्रयोजिकैव धर्ममीमांसेत्यर्थः । नन्वाचारेपि मूलान्वेषणेच्छायां आचारस्यानुष्ठापकत्वासम्भवान्मीमांसावश्यकतेत्यत आहु —'**एतदर्थपी**'त्यादि । आचारस्य समूलकतासन्देहेपि । **सन्देहे** अनुष्ठानप्रकारसन्देहे । **सूत्रभाष्यं** कल्पसूत्रभाष्य **याज्ञिकानां** निरन्तरयज्ञानुष्ठानशीलानाम् । **करणसम्भवात्** यज्ञादिकरणसम्भवादित्यर्थः । धर्ममीमांसायाः

कस्य । तस्मात्साङ्गवेदाध्येतुर्निःसन्देहकरणसम्भवान्न पूर्वयापि कृत्यम् । किञ्च परमकृपालुर्वेदः संसारिणः संसारान्मोचयितुं कर्माणि चित्तशुद्ध्यर्थं बोधितवानिति कूपेऽन्धपातनवदप्रामाणिकत्वभियाऽवसीयते । विपरीतबोधिका तु पूर्वमीमांसा । तस्मादपि न कर्तव्येति ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

'सदाचार' इत्यादौ सदाचारस्यापि धर्महेतुत्वश्रवणात्तेनैव तत्सम्भवे जिज्ञासा निरर्थिकेति भावः । ननु सदाचारेऽप्युपपत्त्यपेक्षायां किं कर्तव्यमिति चेत्तत्राऽऽहुः '**एतर्ह्यपी**'ति । परम्पराप्राप्ताचारदर्शनानन्तरमपि सन्देहे कल्पसूत्रभाष्यं द्रष्टव्यम् । तेनैव सन्देहनिवृत्तेः सम्भवादित्यर्थः । ननु तत्राप्यशक्तौ किं विधेयमित्यत आहुः—'**याज्ञिकानामि**'ति । ये हि याज्ञिकास्ते सूत्रतद्भाष्यद्रष्टारस्तथा च तदनुवृत्तौ सर्वमेव सेत्स्यतीति न धर्मज्ञानार्थं मीमांसकस्य कस्याप्यनुवृत्तिः कर्तव्या । मीमांसको हि धर्मजिज्ञासाद्वारैव तद्बोधकः । तथा च याज्ञिकेनैव तद्बोधे सिद्धे न तदनुवृत्तिः कर्तव्येति भावः । उपसंहरन्ति '**तस्मादि**'ति । यस्मात्स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिः साङ्गमेव स्वाध्यायमध्ययनविषयत्वेनाऽऽकाङ्क्षते । तच्चोपनयनादिसापेक्षम् । तच्च श्रोत्रियसापेक्षमिति स्थितिः । तस्मात्साङ्गाध्ययनकर्तुः पूर्वोक्तकल्पादिकारणकलापैस्तदर्थानुष्ठानस्य निःसन्दिग्धं करणसम्भवान्न पूर्वयाऽपि धर्ममीमांसया कृत्यं कर्तव्यमस्तीत्यस्या अपि निष्प्रयोजनत्वादकर्तव्येयमिति भावः । धर्ममीमांसारम्भे दूषणान्तरमाहुः—'**किञ्चे**'ति । '**स वै नैव रेमे तस्मादेकाकी न रमत**' इति श्रुतावेकाकिनो

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

श्रुत्यभिप्रायो नास्तीति वदति '**किञ्चे**'ति । वेदः स्वस्मिन्नप्रामाणिकत्वभिया संसाराख्यान्धकूपपतितान् चित्तशुद्धिद्वारोद्धर्तुं कर्माणि बोधितवानित्यवसीयत इत्यर्थः । कामनां तु प्रवृत्त्यर्थं बोधितवा-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

यागाः । सूत्रेतिपदे द्वन्द्वः । उपसंहरति—'**तस्मादि**'ति । अपि हि । पूर्वपक्षगर्हायाम् । धर्ममीमांसारम्भे दूषणान्तरमाहुः—'**किञ्चे**'त्यादिना । '**विपरीते**'ति । स्वर्गाद्यभिलाषिणोऽधिकारित्वनिरूपणेन संसा-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

सूत्रोक्तप्रकारेणैव निःसन्दिग्धकर्मकरणसम्भवात्पूर्वमीमांसा न कर्तव्येत्यर्थः । '**आचारपरम्परये**'त्यादि । 'श्रुतिः स्मृतिः सदाचार' इति वाक्येन सदाचारेणैव निःसन्दिग्धप्रवृत्तेः पूर्वमीमांसा निरर्थिकैवेत्यर्थः । '**एतर्ह्यपि सन्देह**' इत्यादि । परम्पराप्राप्तसदाचारदर्शनानन्तरमपि सन्देहे कल्पसूत्रभाष्यं द्रष्टव्यम् । तत्राप्यसामर्थ्ये याज्ञिकानुवृत्तिः कर्तव्या । न तु पूर्वमीमांसायाः प्रयोगकत्वमित्यर्थः । '**परमकृपालुरि**'त्यादि । '**कूपेन्धपातनवदप्रामाणिकत्वभिये**'त्यवसीयत इत्यन्वयः । तथाच यथा कूपेन्धस्य पातनमप्रामाणिककार्यं तद्वद्वेदोऽपि संसाराऽऽसक्तत्वेनान्धान्पारमार्थिकदृष्टिरहितान्पशुपुत्रादिफलेषु योजयंश्चेद्भवेत्तदा ह्यप्रामाणिकः स्यादेव वेदेष्वप्रामाणिकत्वभिया वेदश्चित्तशुद्ध्यर्थं..

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

प्रकारान्तरेणाप्रयोजकत्वं सिद्धान्तैकदेशी साधयति—'**किञ्चे**'ति । **संसारिणः** सांसारिकभोगात् परमपुरुषार्थत्वेन मन्यमानान् । **संसारात्** सांसारिकभोगेभ्यः । **चित्तशुद्ध्यर्थं** चित्तशुद्धिद्वारा मोक्षप्राप्त्यर्थं । इतीत्यवसीयत इत्यत्रान्वेति । '**कूपे**'त्यादि । इत्थं च चित्तशुद्धिद्वारा मोक्षार्थं कर्मकृतिबोधकः परमकृपालुर्वेदात्मको भगवान् संसारमध्यपातिक्षयिष्णुस्वर्गादिफलार्थं 'जीवान्

मैवम् । किं विचारमात्रं न कर्तव्यं, पूर्वकाण्डविचारो वा?। नाद्यः। तुल्यत्वात् । सम-

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

वैचित्र्यं विना रमणासम्भवादनेकभूतभौतिकदेवतिर्यङ्मनुष्यानेकलोकाद्भुतरचनायुक्तब्रह्माण्डकोटिरूपप्रपञ्चरूपेणाऽऽविर्भावोक्तेः । तत्राऽऽसक्तानां तु सूक्ष्मपरिमाणानां तदासक्तिजन्यानेकविधदुःखोपप्लुतत्वदर्शनेन निरुपधिपरदुःखप्रहाणेच्छया तदुपायमन्विष्यमाणः स्वयं वेदरूपेणाऽऽविर्बभूव । तत्र चाग्निहोत्रादीनि कर्माणि तदुपायत्वेन बोधितवानिति गम्यते । ननु तत्र स्वर्गकामादिपदानां सत्त्वात्कथं तेषां तदुपायत्वं वक्तुं शक्यमिति चेत् । उच्यते । वेदो हि सर्वानेव संसारिणस्तत्तापतप्तास्ततो मोचयितुमेव स्वात्मानं प्रकटीचकार । अन्यथा वेदस्याप्यत्यन्ताऽऽसक्तिजनकत्वेन प्रतारकत्वादप्रामाणिकत्वप्रसङ्गात् । तथा च स्वर्गकामादिपदानां प्रथमतः प्ररोचनार्थत्वेन ,सांसारिकानेकविधकर्मभ्यस्तद्विमुखीकरणमेव प्रयोजनमित्यर्थापत्त्या गम्यते । तथा च चित्तशुद्ध्यर्थकान्येव कर्माणीति निश्चीयते । पूर्वमीमांसा तु तद्विपरीतस्य कामितफलजनकत्वस्य बोधिकेतोऽपि स्वेष्टसाधनतत्परैः कर्तव्येत्यर्थः । तदेवं सिद्धान्तैकदेशिनि प्रत्यवस्थिते पुनः पूर्वपक्षी समाधत्ते—'मैव'मिति । एवं

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

निति भावः । अप्रामाणिकांशे दृष्टान्तमाह—'कूपे'ति । अयमेव मार्ग इति केनचित्प्रतारकेण कूपेऽन्धस्य पातनं यथा क्रियते तद्वदित्यर्थः । 'अपी'ति । परा न कर्तव्या चेदस्तु नाम परन्तु पूर्वा त्वयापि न कर्तव्येत्ययमर्थोऽपिशब्देन ध्वन्यते । एतेनाऽस्य वैतण्डिकत्वं बोध्यम्, इदं च वैतण्डिकत्वं तवैव शोभते न ममेत्यभिमानेन स्वमतस्थापनं कर्तुं मीमांसकः समाधत्ते—'मैवमि'ति । 'तुल्यत्वादि'ति । परमते यद्दूषणं तदेव स्वमते चेन्नोद्धार्यमिति भावः । ननु मयापि स्वीक्रियतेऽयं दोष इत्यत आह—

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

राऽऽसक्तिजनिका । उत्तरकाण्डविचारस्य पूर्वमस्माभिर्दूषितत्वात्पूर्वकाण्डविचारस्याऽपि त्वन्मनोविचारेण दुष्टत्वाद्विचारमात्रं न कर्तव्यमुत पूर्वकाण्डविचारो वेति विकल्प्य दूषयन्ति 'किमि'त्या-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

कर्माणि बोधितवानित्याशयो निगमानामवसीयते । पूर्वमीमांसा तु नैवं वदतीत्यतोऽपि पूर्वमीमांसा न कर्तव्येत्यर्थः ।

ननु 'फलार्थको धर्म' इत्येव जैमिनिसूत्रभाष्ये दृश्यते नत्वाम्नायाभिप्रेतचित्तशुद्ध्यर्थकत्वमतो वेद-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

कूपतुल्यकर्मगहनेऽन्धतुल्यान् प्रक्षिपन् प्रतारकोऽप्रामाणिकश्च भवेत् तत्त्वभिया मोक्षार्थं कर्माणि बोधितवानिति । अवसीयते फलितोऽर्थः । ननु तथापि क्षयिष्णुफलार्थं कर्मगहने पातयतः प्रतारकत्वं कथं वारितमिति चेत्—इत्थम् । नरकहेतुसांसारिककर्मभ्यस्तेषां जीवानां निवृत्त्यर्थं प्ररोचनार्थं वैदिके कर्मणि तादृशी फलश्रुतिः कृता । तथा सति पापाभावेन सत्संगेनेव कदाचित् चित्तशुद्ध्या कामाभावे सति मोक्षोऽपि भवेत् । इत्यत्र वेदतात्पर्यादिति न प्रतारकत्वगन्धोपीत्यवसेयम्। विपरीतबोधिका वेदातात्पर्यविषयक्षयिष्णुसांसारिकफले वेदतात्पर्यनिर्द्धारिका ।

इतः परं सिद्धान्तैकदेशिदूषणं समाधातुं पूर्वपक्षी प्रतिवदति—'मैव'मिति । पूर्वपक्षी पृच्छति 'किमि'त्यादिना । विचारमात्रं मया न कर्तव्यं पूर्वकाण्डविचारो वेति ? नाद्यः । विचारमात्रं त्वया न

र्थितत्वाच्च । द्वितीये सामान्यन्यायेन सन्देहे निवार्ये लक्षणवत्तदुपयोगः । अनिष्टतया निरू-

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

पूर्वकाण्डविचारो न कर्तव्य इति न वक्तव्यम् । यत उत्तरकाण्डविचारस्यास्माभिर्निराकृतेन किं विचारमात्रं न कर्तव्यमुत पूर्वकाण्डविचार एव न कर्तव्य इति विकल्प्य दूषयति–'नाद्य'इति । तत्र हेतुमाहुः'तुल्यत्वादि'ति । यथाह्यस्माकं धर्मविचार एवेष्टो न ब्रह्मविचारः । तस्य पूर्वेणैव गतार्थत्वात्तथा विचारमात्रस्याकर्तव्यत्वे धर्मविचारवद्ब्रह्मविचारस्यापि तुल्ययोगक्षेमत्वे नोभयोरपि पक्षयोः, समीहितसिद्ध्यभावस्य तुल्यत्वात्, हेत्वन्तरमाहुः–'समर्थितत्वाच्चे'ति । न हि विचारमात्रं न कर्तव्यमित्यत्र विनिगमकमस्ति । विचारमात्रस्य सर्वत्र फलवत्त्वस्य दृष्टत्वात् । तस्य च निषेधे मानाभावात् । द्वितीयं पक्षं दूषयति–'द्वितीयमि'ति । तथा सति विरुद्धशास्त्रसंभेदजन्यबुद्धिदोषोद्भूतसन्देहवारकत्वेन ब्रह्मविचार एव कर्तव्यो न धर्मविचार इति सिद्धं भवति, तस्य कल्पसूत्रादिसाधनैरन्यथा सिद्धत्वात् । न चैवं शास्यतेऽनेनेति व्युत्पत्त्या शास्त्रमात्रस्य सन्देहवारकत्वेन धर्मजिज्ञासाया अपि

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

'समर्थितत्वादि'ति । त्वया तु अप्रतिज्ञानादित्यादिना विचारः प्रतिपादित एवेत्यर्थः । 'सन्देह' इति । तं हैतमेके पशुबन्ध एवोत्तरवेद्यां चिन्यत इतिश्रुत्या पशुबन्धे, नाचिकेताङ्गत्वेन अक्ताः शर्करा उपदधातीति विधिना शर्करोपधाने विहिते तत्र घृताक्ता वा तैलाक्ता वा इति सन्देहे तेजो वै घृतमितिवाक्यशेषात् घृताक्ता एव शर्करा ग्राह्येति पूर्वमीमांसाया उपयोग इत्यर्थः । 'लक्षणवदि'ति । प्रातिशाख्यवदित्यर्थः । इदं चोक्तं प्राक् । ननु पुनरावृत्तिरनिष्टा । स्वर्गे च पुनरावृत्तिश्रवणादनिष्टजनकयागादिप्रतिपादकत्वात्पूर्वमीमांसायां दोष इत्यत आह–'अनिष्टतये'ति । वेदे तु कामनाश्रवणं प्रवृत्त्यर्थम् । सूत्रस्य वेदतात्पर्यावगाहित्वान्नायं मीमांसादोष

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

विना । 'तुल्यत्वादि'ति । आवयोस्तुल्यत्वात् । 'समर्थित्वादि'ति । भवतैवेति शेषः । 'सामान्ये'ति । वेदमधीत्य स्नायादितिवाक्यादधीते वेदे *गुरुकुलात्समावर्तितव्यमुत*, दृष्टो हि तस्यार्थः कर्मावबोधनं नामेति वेदवाक्यानि विचारयितव्यानीति सामान्यन्यायेन प्राप्ते सन्देहे निवार्ये लक्षणवत्कल्पसूत्रवन्मीमांसोपयोगः । ननूक्तं विपरीतबोधिका हि सेति । तत्रोच्यते–'अनिष्टतये'ति । विचारकर्तृदोषो विचारे न सिद्ध्यतीति भावः । तस्य स्वरूपतो दोषराहित्यात् ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

विपरीताऽर्थज्ञापकत्वान्मीमांसाया अप्रामाण्यमेवेत्याशङ्क्य परिहरति—'अनिष्टतये'ति । अनिष्टवेदेनाऽ

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

कर्तव्यमिति नेत्यर्थः । तुल्यत्वात् उत्तरमीमांसाविचारकर्त्रा त्वया ममापि तुल्यत्वात् । यथोत्तरमीमांसाविचारस्तवेष्टस्तथा पूर्वमीमांसाविचारो ममापीति तुल्यता । दूषणान्तरमाह–'समर्थितत्वाच्चे'ति । त्वयोत्तरमीमांसाविचारो विधेयो मया च पूर्वमीमांसाविचारो न विधेय इत्यत्र विनिगमकाभावेन समर्थितत्वादित्यर्थः । द्वितीये पूर्वकाण्डविचारो न कर्तव्य इतिपक्षे । तथा चोत्तरमीमांसाविचार एव कर्तव्यो महाफलत्वात् । न तु पूर्वमीमांसाविचारोऽपि । कल्पसूत्रसदाचारादिनाऽन्यथासिद्धत्वादिति

---

१—उपसद्दरतीति खपुस्तकम् ।

**पणं न मीमांसादोषः । किन्तु विचारकाणाम् । स्वभावभेदात् । किञ्च, आवश्यकत्वादपि ।**

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

सन्देहवारकत्वस्य दुर्निवारत्वेन कल्पसूत्रादिवत्तदुपयोगस्यापि सम्भवान्नाकर्तव्यत्वम् । तत्र दृष्टान्तमाह–'**लक्षणे**'ति । कल्पादीनां सत्त्वेऽपि प्रातिशाख्ये लक्षणानां करणं कल्पादिसाधनाऽसाध्यसन्देहवारकं तथायमपीति भावः ।

ननूक्तं सर्वत्र जैमिनीयसूत्रभाष्ये फलोद्देशेनैव धर्मनिरूपणस्योपलभ्यमानत्वान्मीमांसाया आम्नायाभिप्रेतचित्तशुद्ध्यर्थकत्वविपरीतबोधकत्वेनाप्रामाण्यं स्यादित्यत आह–'**अनिष्टतये**'ति । न हि सूत्रार्थविचारकर्तृभिस्तथा निरूपणे सूत्रकारः पर्यनुयोगार्हो भवति । ननु तेऽपि महान्तः कथमेवमुक्तवन्तस्तत्राऽऽह–'**स्वभावभेदादि**'ति । वेदो हि विशिष्टार्थप्रतिपादकस्तज्ज्ञानं च न लौकिकैः साधनैर्भवितुमर्हति । किन्त्वलौकिकैस्तपःप्रभृतिभिः । अत एव भृगोर्वरुणान्तिके पुनःपुनर्गमनं योग्यतासम्पत्त्यनन्तरं च तद्बोधे पुनर्गमनाऽभावश्च । तथा च विचारकाणामलौकिकसाधनाभावात्स्वस्वभावानुसारेण निर्णये तथोक्तवन्त इत्यर्थः । धर्मविचारस्य कर्तव्यत्वे साधकान्तरमाह–किञ्च । आवश्यकत्वादपीति । यागादिज्ञानार्थं हि धर्ममीमांसा । तज्ज्ञानं हि न सकामानामेवेष्टं येन

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

इत्यर्थः । ननु केषांचित् मीमांसाविचारकाणां ग्रन्थे 'स्वर्गार्थं सोमेन यक्ष्य' इत्यादिसङ्कल्पो दृश्यत इति चेत्तेषामेव दोष इत्याह–'**विचारकाणामि**'ति । ननु सदा मीमांसया विचारं कुर्वन्ति तेषामयं दोषः कथमित्यत आह–'**स्वभावभेदादि**'ति । **तेषां प्रकृतिवैचित्र्यादि**त्येकादशस्कन्धोक्तत्वादित्यर्थः । ननु स्वर्गादिकामना तु प्रवृत्त्यर्था । अन्यत्किञ्चित्फलं तु न दृश्यत इति तवैवास्या आवश्यकत्वमस्तीत्यत आह–'**किञ्चे**'ति । '**अपी**'ति । त्वयापि पूर्वमीमांसाकर्त्रैति शेषः । आवश्यकत्व-

केनचिद्विरचिता वेदान्तचन्द्रिका ।

कर्तृदोषे हेतुमाहुः—'**स्वभावे**'ति । **तेषां प्रकृतिवैचित्र्यादि**त्येकादशीयवाक्योक्तरीतिकात् उपयोगे हेत्वन्तरमाहुः—'**किञ्चे**'त्यादिना । '**आवश्यकत्वादि**'ति । अत्र कर्तव्य इति शेषः ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

भिप्रायविषयीकृतो योऽर्थस्तत्परत्वेन यत्सूत्रभाष्ये निरूपणं तत्र सूत्रकृतो दोषः, किन्तु भाष्यकारस्य । अतः सूत्ररूपस्य मीमांसाशास्त्रस्य निर्दुष्टत्वमेवेत्यर्थः । '**आवश्यकत्वादपी**'ति । फलकाङ्क्षातो

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

सिद्धान्तैकदेश्यभिप्रायः । पूर्वपक्षी समाधत्ते—'**सामान्ये**'त्यादिना । **सामान्यन्यायेन** कर्मानुष्ठाने येन केनचित्सन्देहे निवार्य इत्यर्थः । **लक्षणवत्** कल्पसूत्राणां सन्देहवारकाणां सत्त्वेऽप्यसाधारणसन्देहवारणार्थं यथा प्रातिशाख्यलक्षणानां करणं तथा तद्विलक्षणसन्देहवारणार्थं धर्मविचारस्याप्युपयोग इति भावार्थः । ननु चित्तशुद्धिद्वारा कर्मणां मोक्ष उपयोगो वेदतात्पर्यविषयस्तद्विपरीतं सकामाधिकारकं विनाशिफलं वेदतात्पर्यविषय इति निरूपणं पूर्वमीमांसायाः दोष इत्यत आह–'**अनिष्टतये**'त्यादि । तथा च सूत्रेषु न क्वापि विनाशिफलसाधकत्वं कर्मणां वेदतात्पर्यविषय इत्युक्तमिति न मीमांसादोष इत्यर्थः । **विचारकाणां** सूत्रभाष्यकाराणाम् । **स्वभावभेदात्** कर्मैव ब्रह्मेति ज्ञानप्रयोजकस्वभाववत्त्वादित्यर्थः । **आवश्यकत्वात्** कर्मविचारस्यावश्यकत्वादपि कर्तव्यतेत्यर्थः । आवश्यकतामेवोपपाद-

निवृत्तानामपि यागादिज्ञानस्य आवश्यकत्वम् । चित्तशुद्ध्यर्थत्वात् । परमाश्रमभेदेन प्रकारभेदः । कायिकादिभेदात् । तत्राद्यस्य वाचिको द्वितीयतृतीययोः कायिकश्चतुर्थस्य मानसिक इत्याश्रमिणाम् । तस्मादेकेनैव चरितार्थत्वात्किं द्वितीयेनेति प्राप्ते—

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

मीमांसाया विपरीतबाधकत्वमेव निश्चिनुमः । किन्तु निवृत्तानामपि फलानुसन्धाने रहितानामपि यागादिज्ञानस्यावश्यकत्वम् । चित्तशुद्धिजनकत्वेन तेषामपि कर्मकरणापेक्षायाः सत्वात् । तच्च ज्ञानसापेक्षं ज्ञानं च मीमांसासापेक्षमिति विपरीतबोधकत्वाभावात्सर्वथैव कर्तव्येति भावः । ननु निवृत्तानामुपकरणाभावेन तत्करणासम्भवान्न मीमांसापेक्षेत्याशङ्क्य प्रकारभेदेन तत्करणं दृढीकरोति । '**परमाश्रमभेदेने**'ति । वस्तुतस्त्वेक एव यज्ञः परं शाखाभेदादिव कायिकादिभेदात्प्रकारभेदः । कायिकादिभेदमेव विवृणोति—'**तत्रे**'ति । आद्यस्य ब्रह्मचारिणः । वाचिकः स्वाध्याययज्ञः । द्वितीयतृतीययोर्गृहस्थमेवाऽऽह—'**निवृत्तानामपी**'ति ।

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

'**प्रकारभेद**' इति । कायिकवाचिकमानसिकभेदात्प्रकारभेद इत्यर्थः । आद्यस्य ब्रह्मचारिणः । तस्य वेदपाठे एवाऽधिकारत्वात् । एवमग्रेऽपि बोध्यम् । उपसंहरति—

केशवविरचिता वेदान्तचन्द्रिका ।

तदेवाहुः—'**निवृत्तानामि**'ति । '**चित्ते**'ति । यागस्येति शेषः । ननु वित्तानामुपकरणाऽभावे तत्करणाऽसम्भवान्न तदपेक्षेत्यत आहुः—'**परमि**'ति । आद्यस्य ब्रह्मचारिणः । '**द्वितीये**'ति । गृहस्थवानप्रस्थयोश्चतुर्थः परिव्राड् '**आश्रमिणामि**'ति । तदुपयोग इति शेषः । '**तस्मादि**'ति । आवश्यकत्वात् । एकेन पूर्वविचारेण पुरुषार्थसिद्धेः । द्वितीयेनोत्तरकाण्डविचारेण । एतन्मत उक्तप्रकारेण

श्रीलालूभट्टकृता गूढार्थदीपिका ।

निवृत्तानामपि चित्तशुद्ध्यर्थं यागकरणस्याऽऽवश्यकत्वात् यागकरणस्य योगादिज्ञानाऽधीनत्वाद्यागादिज्ञानस्य मीमांसाधीनत्वान्मीमांसाया आवश्यकत्वादपि लक्षणावत्तदुपयोग इति पूर्वेणान्वयः । तथा च यागस्य आश्रमभेदेन प्रकारभेदात्सर्वैरेव यागः कर्तव्य इति शास्त्रार्थास्सर्वेषां कर्ममीमांसाया अपेक्षेति मीमांसाया आवश्यकत्वम् । '**तत्राऽऽद्यस्ये**'ति । आद्यस्य ब्रह्मचारिणो वाचिको यागः स्वाध्यायाध्ययनात्मकः । '**द्वितीयतृतीययोः**' कायिक इति । गृहस्थवानप्रस्थयोः कायिको याग इत्यर्थः ।

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

यति—'**निवृत्ताना**'मित्यादिना । **निवृत्तानां** निष्कामानां मुमुक्षूणामित्यर्थः । '**यागादी**'त्यादि । तथा च यागादिज्ञानार्थं पूर्वमीमांसायाः आवश्यकत्वमित्यर्थः । ननु निवृत्तानां ब्रह्मचारिपरमहंसादीनां यज्ञसामग्र्या असम्भवेन करणासम्भवान्न पूर्वमीमांसावश्यकतेत्यत आह—'**पर**'मित्यादि । **आद्यस्य** ब्रह्मचारिणः । **वाचिकः** ब्रह्मयज्ञः । **द्वितीयतृतीययोः** गृहिवानप्रस्थयोः । **कायिकः** अग्निहोत्रादिरूपः । **चतुर्थस्य** प्रव्रजिनः । **मानसिकः** मानसिकमूर्तिपूजनादिरूपः । **तस्मात्** '**स्यादेतत् अथात**' इत्यारभ्य एतावत्पर्यन्तनिरूपणात् । **एकेनैव** धर्मविचारेणैव । **चरितार्थत्वात्** मोक्षासिपर्यन्तफलस्य सम्भवात् । **द्वितीयेन** ब्रह्मविचारेण । इति प्राप्ते पूर्वमीमांसयोत्तरमीमांसायाः गतार्थत्वरूपे पूर्वपक्षे प्राप्ते ।

१ यागादिकज्ञानस्येत्यपि पाठ ।

उच्यते । उपासनाया धर्मत्वेऽपि न ब्रह्मणो धर्मत्वम् । ज्ञानरूपत्वात् । धर्मस्य च क्रियारू-

---

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या ।

वानप्रस्थयोः । चतुर्थस्य यतेः । आश्रमिणामिति प्रकारभेद इति पूर्वेणैवान्वयः । उपसंहरति 'तस्मादि'ति । स्यादेतदित्यारभ्याऽऽश्रमिणामित्यन्तग्रन्थोक्तात्कारणकलापादेकेनैव धर्मविचारेण ब्रह्मविचारस्याऽपि चरितार्थत्वात्पार्थक्येन ब्रह्मविचारेण किं फलं भविष्यति न किमपीत्येव प्राप्ते । अत्र सिद्धान्ती समाधत्ते—'उच्यत' इति । यदुक्त 'आत्मेत्येवोपासीते'त्यादि नोदनावाक्यानां श्रवणाद्ब्रह्मज्ञानस्य धर्मत्वेन, तज्जिज्ञासयैव गतार्थत्वान्न पार्थक्येन जिज्ञासा कर्तव्येति तत्रोत्तरमाह—'उपासनाया' इति । यथा 'ज्योतिष्टोमेन यजेते'त्यादौ ज्योतिष्टोमादेर्देवतोद्देशेन द्रव्यत्यागात्मकभावनारूपत्वेन धर्मत्वं, न तथा 'आत्मेत्येवोपासीते'त्यादौ क्रियामात्रमस्ति । उपासनाया मानसक्रियारूपत्वेन धर्मत्वेऽपि तद्विषयीभूतस्य ब्रह्मणोऽक्रियात्वान्न धर्मत्वम् । 'सत्यं ज्ञानमनन्तमि'त्यादौ ब्रह्मणश्चिद्रूपत्वोक्तेः । धर्मस्य तु 'चोदनालक्षणोऽर्थो धर्म' इत्यत्र क्रियारूपत्वोक्तेश्च । यदुक्त-

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

'तस्मादि'ति । त्रैवर्णिकाधिकारपक्षस्वीकारात् । समाधानमाहु.—'उच्यत' इति । आत्मेत्येवोपासीतेति विधिवाक्यमुपासनाविधायकम् । तस्यास्तु ब्रह्मज्ञानसाधनत्वान्न मुख्यत्वमित्याशयेनाऽऽह—'उपासने'ति । तथा च सर्वोपनिषद्वाक्यानां ब्रह्मणि तात्पर्यान्मुख्यत्वेन ब्रह्मप्रतिपादकत्वमेव, न तु धर्मप्रतिपादकत्वमिति भावः । 'ज्ञानरूपत्वादि'ति । ब्रह्मण इत्यनुषज्यते । अर्थवादवाक्यानां ब्रह्म-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

चित्तशुद्धौ पडङ्गाध्येतुः स्वत एव ज्ञानोदयादिति रहस्यम् । समादधते—'उच्यत' इत्यादिना । यदुक्तं धर्मलक्षणाक्रान्तत्वाज्ज्ञानस्यापि धर्मत्वं, धर्मविचारश्च पूर्वविचारेणैव सिद्ध इत्यनुपयुक्तत्वाद्ब्रह्ममीमांसावैयर्थ्यं, तत्र स्याद्वैयर्थ्यं यदि तथात्वेन । तद्रूपोपासनैव ब्रह्ममीमांसाविषयः स्यात् । तदेव तु न । किन्तु ब्रह्मविषयेयम् । तच्च ज्ञानरूपम् । धर्मश्च क्रियारूपः । अर्थत्वे सति चोदनालक्षणत्वात् । नचेद ब्रह्म तथा । तस्मान्नेय तथेति । तदेतदुक्तमुपासनाया' इत्यादिना । यच्चोक्त 'मारोपे'त्यादिना सृष्ट्यादिवाक्यानामुपासनाविषयस्तावकतयाऽर्थवादत्वेनोपासनाविधावेवाऽन्वय, इति तन्निराकुर्वन्ति—

श्रीलालूभट्टकृता गूढार्थदीपिका ।

'चतुर्थस्ये'ति । यतेर्मानसिको याग इत्यर्थः । 'इत्याश्रमिणामि'ति । इति एवंप्रकारेणाऽऽश्रमिणां प्रकारभेद इति पूर्वेणैवाऽन्वयः । 'उपासनाया धर्मत्वेऽपी'त्यादि । अयमर्थः । उपासनाया यद्यपि मानसिकक्रियारूपत्वेन धर्मत्व तथापि नोपासनाप्रतिपादकत्वमुत्तरकाण्डस्य किन्तु ब्रह्मणः । ब्रह्म तु न क्रियारूपम् । 'सत्य ज्ञानमनन्त ब्रह्मे'ति श्रुतेश्चिद्रूपत्वात् अतो न धर्मत्वं ब्रह्मणः । तथाच ब्रह्मजिज्ञासाया न धर्मजिज्ञासया गतार्थत्वम् ।

नतु सृष्ट्यादिवाक्यानामर्थवादतैव वाच्या विधिमन्त्रादिरूपत्वाऽभावात् । ततश्च ब्रह्मस्ताव-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

उच्यते सिद्धान्तिभिः समाधानमुच्यते इत्यर्थः । धर्मत्वेऽपि मानसक्रियारूपतया धर्मत्वेऽपीत्यर्थः । न धर्मत्वं ज्योतिष्टोमादेरिव क्रियारूपत्वाभावेन न धर्मत्वमित्यर्थः । ज्ञानरूपत्वात् 'सत्य ज्ञान'मित्यादिना ज्ञानरूपत्वोक्त्या कृत्यसाध्यत्वादित्यर्थः । सृष्टिवाक्यानां उपासनाविधिशेषतया

पत्वात् । न चार्थवादानां धर्म इव ब्रह्मण्युपयोगः कर्तुं शक्यः । उत्पत्तिप्रकारफलभेदानाम-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

मारोपापवादविषयधर्मप्रतिपादकत्वेन विधेयोपासनाविषयस्तावकत्वात्सृष्ट्यादिवाक्यानामर्थवादत्वं, तन्निराकुर्वन्ति—'न चार्थवादानामि'ति । यथा 'वायुर्वै क्षेपिष्ठे'त्यार्थवादानां 'वायव्यं श्वेतमालभेते'त्यादिविषये धर्मे उपयोगस्तथा न सृष्ट्यादिवाक्याना'मात्मेत्येवोपासीते'त्यादिपूपयोगः सम्भवति । कथं तदसम्भव इत्याशङ्क्य तत्र हेतुमाहु—'उत्पत्ती'ति । अर्थवादा ह्युत्पत्त्यधिकारप्रयोगविनियोगभेदेन चतूरूपाणां विधीनां यथासम्भवमुपकारिणो भवन्ति । उत्पत्तिविधिर्ज्ञातकर्मस्वरूपबोधनपरः । यथाऽग्निहोत्रं जुहुयादिति । अधिकारः फलसम्बन्धबोधनम् । यथा

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

ण्युपयोग खण्डयन्ति—'नचे'ति । न हीत्यर्थः । 'उत्पत्ती'ति । कर्मणि विद्यमानानामुत्पत्त्यादित्रयाणां ब्रह्मण्यभावादर्थवादवाक्यं तत्र न प्रवर्तत इत्यर्थः ।

ननु कथमुत्पत्त्यादित्रयेऽर्थवादानां प्रवृत्तिरितिचेत् । इत्थम् । तथाहि—उत्पत्तावर्थवादयान्य यथा—असावादित्यो न व्यरोचत तं देवाः प्रायश्चित्तमैच्छन्नित्यादि । प्रकारे यथा—अयं वै सोमेनेजानादित्यादि । फले यथा—वायुर्वै क्षेपिष्ठा देवतेत्यादि । ननु ब्रह्मण्युत्पत्त्यादित्रयाणामभावः किमर्थं स्वीकर्तव्य इति चेत् । न । नित्यत्वात्सर्वदेकरसत्वात्फलरूपत्वाच्चेति भाव. ।

वैश्लिद्गिरविता वेदान्तचन्द्रिका ।

'न चार्थवादानामि'ति । तत्र हेतुः—'उत्पत्ती'ति । अत्र द्वन्द्वान्ते इति न्यायेन भेदशब्दस्योत्पत्त्यादिनिष्वप्यन्वयः । तथाच यत्रोत्पत्त्यादिभेदास्तत्रैवाऽर्थवादानामुपयोगः । ब्रह्मणि तु तदभावान्न तदुपयोग इत्यर्थः । उत्पत्तिभेदस्तावत् सोमेन यजेत । अग्निहोत्रं जुहुयात् । दर्शपूर्णमासाभ्यां यजेतेत्यादिः । प्रकार इतिकर्तव्यता । तद्भेदो 'यथा पर्यग्निकृतं पत्नीवन्तमुत्सृजति', समिधो यजतीत्यादिः । फलभेदो यथा—आज्येन आयुःकामस्य । स्वादिरं वीर्यकामस्य । दध्नेन्द्रियकामस्येत्यादिः ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

कत्वात्तेषां न स्वार्थे प्रामाण्यमतस्तद्विचाररूपाया ब्रह्मजिज्ञासायाः कुत्रोपयोग इत्याशङ्क्य समादधते—'न चार्थवादानां धर्मं इवे'त्यादिना । सृष्ट्याद्यर्थवादा यदि ब्रह्मण्युपयुज्येरंस्तदा पूर्वकाण्डीयाऽर्थवादविचारेणैव गतार्थत्वं स्यात् । इह तु न तदीयार्थवादानामुपयोगो ब्रह्मणि सम्भवतीत्यर्थः । कथं नोपयोग इत्याकाङ्क्षायां उपयोगत्रयं निवारयन्ति—'उत्पत्तिप्रकारफलभेदानामभावादि'ति ।

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

प्रामाण्यमिति यायुक्त तद्दूषयितुमाहु. । 'नचे'त्यादि । ब्रह्मण्यर्थवादानामुपयोगाभावमुपपादयन्ति । उत्पत्तीत्यादि । तथाचोत्पत्तिविधौ प्रकारबोधकविधौ फलबोधकविधौ चार्थवादानामुपयोगः ब्रह्मोपासनाविधिस्तु नैतेषां एकतर इति न तत्रार्थवादानामुपयोग इति भावः । तत्रोत्पत्तिविधिः 'सोमेन यजेते'त्यादिरूपः । प्रकारभेदः 'समिधो यजती'त्यादिरूप. । फलभेदः 'खादिरो यूपो भवति खादिरं वीर्यकामस्ये'त्यादिरूपः । तत्र 'एष वाव प्रथमो यज्ञो यज्ञाना यज्ज्योतिष्टोम' इत्युत्पत्तावर्थवादः । 'वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजा इज्यन्ते' इति प्रकारभेदेऽर्थवादः । 'यदाक्षे चक्षुरेव

भावात् । प्रकृते तु माहात्म्यज्ञानार्थं तदुपयोगः । अस्य च ज्ञानोपयोगो यथा तथा वक्ष्यते

गोस्वामिश्रीमुरलीधरविरचिता भाष्यव्याख्या ।

'स्वर्गकाम' इति प्रयोगानुष्ठापनम् । यथा 'वैश्वानरं द्वादशकपालं निर्वपेत्' 'व्रीहीन्प्रोक्षति' 'व्रीहीनवहन्ती'त्यादीनि । विनियोगः क्रियायाः फलशेषत्वज्ञापनम् । यथा 'सोमेन यजेते'त्यादि । यद्यपि सर्वेऽपि भेदाः सर्वत्र सन्ति तथापि 'मुख्ये कार्यसंप्रत्यय' इति न्यायेन यस्यैव मुख्यत्वं तस्यैव व्यपदेश इति । तथा चात्राऽऽत्मेत्येवोपासीतेत्याद्युपासनाविधिपरत्वं वेदान्तानामभ्युपगच्छता नित्यशुद्धबुद्धत्वादिरूपब्रह्मता जीवस्योपासनाविषयस्य विधेः फलं कल्प्यं, तच्च न सम्भवति । नित्यत्वेनाऽकार्यत्वात्तस्याः । नाप्यनाद्यविद्यापिधानाऽपनयः । तस्य स्वविरोधिविद्योदयादेव भावात् । नापि विद्योदयः । तस्यापि श्रवणमननपूर्वकोपासनजनितसंस्कारसचिवादेव चेतसः

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

ननु यतो वा इमानि भूतानीत्यादिवाक्यानां कुत्रोपयोग इत्यत आह—'प्रकृत' इति । तस्य माहात्म्यज्ञानस्य । चतुर्थे चतुर्थाध्याये 'आदित्यादिमतय' इत्यस्मिन्सूत्रे । तस्य भक्तिद्वारा

वैदिकहरिविरचिता वेदान्तचन्द्रिका ।

एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम इत्याद्युत्पत्त्यर्थवादः । वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजा इज्यन्त इति प्रकारे । यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्त इति फले । तथाच कर्मण्युत्पत्त्यादित्रयस्याऽपि सत्त्वात्तत्रैवार्थवादा उपयुज्येरन् । ब्रह्मणि तूत्पत्त्यादीनामभावान्न त उपयुज्यन्त इत्यर्थः ।

अथवा यदुक्तं'मारोपे'त्यादिना ,सृष्ट्यादिवाक्यानामर्थवादत्वं, तन्निराक्रियते–'न चार्थे'-त्यादिना । यथा वायुर्वै क्षेपिष्ठेत्यार्थवादानां, वायव्यं श्वेतमालभेतेत्यादिविध्युपयोगस्तथा न सृष्ट्यादिवाक्यानामात्मेत्येवोपासीतेत्यादिविधिपूपयोगसम्भवः । तत्रोपपत्तिं श्रुवते–'उत्पत्ती'त्यादि । अर्थवादा ह्युत्पत्त्यधिकारविनियोगप्रयोगभेदेन चतूरूपाणामपि विधीनां यथासम्भवमुपकारिणो भवन्ति । तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः । यथाग्निहोत्रं जुहोति सोमेन यजेतेत्यादिः । फलस्वाम्यबोधको विधिरधिकारविधिः । स्वाम्यञ्च कर्मजन्यफलभोक्तृत्वम् । स

श्रीलालभट्टकृता सूत्रार्थदीपिका ।

अयमर्थः । अर्थवादानां शेषोपयोगः कर्मणि । असावादित्यो न व्यरोचतेत्यादीनां सौर्याद्युत्पत्तौ । यथाचाऽयं वै सोमेनाजानादित्यत्राष्टाक्षरा गायत्रीत्यस्याग्नेयपुरोडाशीयेऽष्टाकपालत्वरूपे प्रकारे । यथाच वायुर्वै क्षेपिष्ठेत्यादीनां भूत्यादिरूपे फल उपयोगः । ब्रह्मणि तु तथा नोपयोगः । नित्यत्वेनोत्पत्तेरभावात् । सदैकरसत्वेन प्रकारविशेषस्याऽभावात् । स्वयं फलरूपत्वेन फलाऽभावाच्च । ब्रह्मणि सृष्ट्याद्यर्थवादानां माहात्म्यज्ञानार्थमुपयोगः । माहात्म्यं च सदेव ज्ञातं फलाय, नत्वारोपितम् । एवं सति ब्रह्मणि जागरूकस्य जगज्जन्मादिकारणस्य निरूपकाणां सृष्ट्याद्यर्थवादानां प्रामाण्यमक्षुण्णमेवेति

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीप ।

भ्रातृव्यस्य वृङ्क्ते' इति फलेऽर्थवादः । इत्थं चात्मेत्येवोपासीतेत्यादिविधौ नोक्तार्थवादोपयोग इति फलितम् । ननु तर्हि सृष्ट्यादिप्रतिपादकानामुपयोगाभावाद्वैयर्थ्यमित्यत आहुः । 'प्रकृते'त्यादि । प्रकृते

१ तस्येति वेदान्तचन्द्रिकापाठ । २ फलसम्बन्धबोधक इति श्रीपुरुषोत्तमाः ।

**चतुर्थे । उपासनादर्शनादिपदानां मनोव्यापारत्वमेव । विचारस्याऽपि यथा ज्ञानोपयोगित्वं**

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

सम्भवात् । तस्माद्वेदान्तार्थोपासनायां जीवब्रह्मभावफलकत्वाभावान्नोपासीतेत्यादिभिर्विधिसरूपैस्त-त्कामस्तत्कार्यमवबोद्धुमर्हति । न च ब्रह्मभूयादन्यत्किञ्चिदार्थवादिकमुपासनायाः फलं भवितुमर्हति येन तत्काम उपासनायामधिक्रियेत । तस्माद्ब्रह्मभूयस्याऽविद्यापिधानाऽपनयमानेणाऽऽविर्भावात्तस्य च वेदान्तार्थविज्ञानादवगतिपर्यन्तादेव सम्भवा'त्रात्मेत्येवोपासीते'त्यादयो त्रिधयोऽपि तु तत्स्व-रूपा एव । तथा चोत्पत्तिरुत्पत्तिविधिः, प्रकारः, प्रयोगविधि', फलमधिकारविधिस्त एव ये भेदास्तेषां सर्वेषामेवोपासीतेत्यादावभावान्नार्थवादानामिव सृष्ट्यादिवाक्यानामुपयोगः सम्भवतीत्यर्थः ।

नन्वेवं सति सृष्ट्यादिवाक्यानां कुत्रोपयोग. । स्वरूपप्रतिपत्तेः **'सत्यं ज्ञानमि'**त्यादिभिः सम्भवादित्यत आह–**'प्रकृते त्वि'**ति । अन्यत्र पूर्वकाण्डेऽर्थवादाना प्रवर्तनापरत्वेऽपि प्रकृते ब्रह्मकाण्डे सृष्ट्यादिवाक्यानां माहात्म्यज्ञान उपयोग इति न तेषा वैयर्थ्यमिति । ननु स्वरूपप्रतिपत्तौ माहात्म्य-ज्ञान कथमुपयुज्यते । लोके देवदत्तादिस्वरूपज्ञाने तदनुपयोगस्य दृष्टत्वादित्यत आह–**'तस्य चे'**ति । ननूत्पत्त्यधिकारप्रयोगभेदानामभावेऽपि विनियोगभेद एव कस्मान्न भवतीत्यत आह–**'चतुर्थे'** इति ।

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

भगवत्प्राप्तिरूपसाक्षात्कारे उपयोग इति वक्ष्यते । ननूपासनारूपधर्मस्य कथं क्रियारूपत्वमत आह–**'उपासने'**ति । **आत्मेत्येवोपासीत, आत्मा वा अरे द्रष्टव्य** इत्यादिविधीनामित्यर्थ. ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

घ यजेत स्वर्गकाम इत्येवरूपः । अङ्गसम्बन्धबोधको विधिर्विनियोगविधिः स च दध्ना जुहोती-त्यादिरूप. प्रयोगप्राशुभावबोधको विधि । स हि साङ्गप्रधानमनुष्ठापयन् विलम्बे प्रमा-णाऽभावादविलम्बापरपर्याय प्रयोग प्राशुभाव विधत्ते । स च पौर्णमास्या पौर्णमास्यां यजेतेति । अयमेव प्रधानविधि. । इतरे तु त्रय एतच्छेषभूता. । तथाचोत्पत्तिरुत्पत्तिविधिः । प्रकारः प्रयोग-विधिः । फल फलविधिः । तत्र द्रव्यदेवताभावान्नोत्पत्तिविधित्वम् । देशकालाद्यभावान्न प्रयोग-विधि. । फलत्वाऽभावान्न फलविधिः । न च जीवस्य ब्रह्मभावरूपमेवोपासनाफलमिति शङ्क्यम् ।

श्रीकाल्लूभट्टकृता गूढार्थदीपिका ।

न पूर्वमीमासया गतार्थत्वम् । माहात्म्यज्ञानस्योपयोगमाहु.–**'तस्य चे'**ति । तस्य माहात्म्यज्ञानस्य ज्ञानो-पयोग. । साक्षात्कारात्मकाऽपरोक्षानुभवात्मकज्ञान उपयोग । स चतुर्थे फलाध्याये वक्ष्यते । सिद्ध-माहु.—**'उपासनादर्शनादिपदानामि'**त्यादि । यदुक्त उपासीत द्रष्टव्य इत्यादिविधिभिर्शो-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

उत्तरकाण्डे । **तदुपयोगः** सृष्ट्यादिवाक्यानामुपयोग' । तस्य माहात्म्यज्ञानस्य । **ज्ञानोपयोगः** तरतमतया भजनीयताज्ञाने । **वक्ष्यते** अग्रे वक्ष्यत इत्यर्थ. । 'चतुर्थे'त्यादि । तथा च पूर्वोक्त उत्प-त्त्यधिकारप्रयोगे विधित्रयस्यासम्भवेऽपि विनियोगविधिबोधितधर्मस्योत्तरकाण्डेऽपि सम्भवाद्धर्मविचारेणैव गतार्थत्वान्नोपयोग उत्तरमीमांसाया इत्याशङ्क्य समादधु 'श्चतुर्थे' इत्यादिना । चतुर्थे सम्भवत्यपि चतुर्थे विनियोगविधानित्यर्थ. । 'उपासने'त्यादि । 'आत्मेत्येवोपासीत' 'आत्मा वा अरे द्रष्टव्य' इत्याद्युपास-

१—तथा चास्य त्रिदत्पत्तिविधिरित्यादि क्पुस्तक पाट ।

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या ।

नाचतुर्थे विनियोगविधौ सम्भव'त्युपासीत द्रष्टव्य' इत्यादिपदानां मनोव्यापारपरत्वमेव कल्पनीयमिति नाऽत्रानुपपत्तिः काचिदिति भावः । ननु सृष्ट्यादिवाक्यानां माहात्म्यप्रतिपादनमुखेन ज्ञानोपयोगित्वेऽपि विचारस्य कथं तदुपयोगित्वमित्यत आह—विचारस्यापीति । एवं ब्रह्मविचारस्य धर्मविचारेणैव गतार्थत्वेनाऽकर्तव्यत्वाऽऽशङ्का निरस्ता । इदानीं सर्वोऽपि वेदराशिर्धर्म उपयुक्त इति

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

मनोव्यापारत्वमेव मानसिकक्रियाबोधकत्वमेव । तथा चैतादृशव्यापारविषयत्वात् ब्रह्मणो मुख्यत्वेन प्रतिपादनम् । क्वचिन्माहात्म्यप्रतिपादकानां च सर्वेषां वाक्यानां ब्रह्मण्येव तात्पर्यमिति मुख्यतया ब्रह्मप्रतिपादकत्वमेव धर्मप्रतिपादकत्वम् । एव चैतादृशवाक्यविचारेण कृत्वा मनोव्यापारत्वेन च ब्रह्मसाक्षात्कारोऽग्रे च भगवत्प्राप्तिरित्येवरीत्योत्तरमीमांसाया अत्यावश्यकत्वमिति न पूर्वया गतार्थत्वमित्या-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

तस्य सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चनेति, तत्त्वमसीत्यादिश्रुतिवाक्येभ्य एव सिद्धेः । तस्मान्नोपासीतेत्यादयो विधयः । अपि तु विधिसरूपाण्येवेमानि वाक्यानीति ज्ञेयम् । एतेन श्रोतव्यो मन्तव्य इत्यादीन्यपि वाक्यानि व्याख्यातानि । नन्वेवं सति सृष्ट्यादिवाक्यानां कुत्रोपयोगः । स्वरूपप्रतिपत्तेः सत्यं ज्ञानमनन्तमित्यादिवाक्यैरेव सिद्धेरित्यत आहुः—'प्रकृते त्वि'ति । ब्रह्मकाण्डे सृष्ट्यादिवाक्यानां माहात्म्यज्ञानायोपयोगः । 'तस्य चे'ति । तस्य माहात्म्यज्ञानस्य । ज्ञानं साक्षात्कारः । यथा येन प्रकारेण तथा स प्रकारः । चतुर्थे आदित्यादिमतय इति सूत्रे । 'उपासने'ति । 'व्यापारत्वमेवे'ति । व्यापारार्थत्वमित्यर्थः । तेन तेषां मनोव्यापारत्वेन सविषयतया विषयाऽधीनत्वात्र तद्विषयस्य ब्रह्मणो गौणत्वप्रसक्तिरिति सिद्धम् । अन्यथोपासीतेत्यादिवाक्यानां विधित्वे तच्छेषभूतार्थवादनिरूप्यमाणस्य ब्रह्मणोऽपि तच्छेषत्वं प्रसज्येत । अतोऽपि न ब्रह्ममीमांसाया गौणत्वम् । सत्यं ज्ञानमनन्तं ब्रह्म, तस्माद्वा एतस्मादात्मन इत्यादिवाक्यैः स्वरूपमाहात्म्यज्ञानयोः सम्भवादित्यत आहुः—'विचारस्यापी'ति । 'वक्ष्यत' इति । तृतीयाध्यायस्य द्वितीये पादे उभयव्यपदेशाद्यधिकरणे । ननु यथा पूर्वमीमांसायाः प्रवृत्तिपराणां चि-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

नस्य विधेयत्वेन धर्मत्वात्पूर्वमीमांसया गतार्थत्वम् । तत्र । उपासनादर्शनादिपदानामुपासीत द्रष्टव्य इत्यादीनां मनोव्यापारत्वमेव वाच्यमिति शेषः । तथाच तादृशमनोव्यापारस्य धर्मत्वोपनतज्ञानस्य धर्मत्वं न ब्रह्मणो धर्मत्वम् । अतो ब्रह्ममीमांसा पृथगेव करणीयेति न पूर्वया गतार्थत्वमुत्तरस्या इत्यर्थः । अतःपर केवल कर्मण्येव निरतस्यापि ब्रह्मज्ञानाऽऽवश्यकत्वात् ब्रह्मज्ञानस्य तु ब्रह्ममीमांसाधीनत्वेनोत्तर-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

दर्शनादिपदानामित्यर्थः । मनोव्यापारत्वमेव मनोव्यापारबोधकत्वमेव । एवकारेण करणीभूतक्रियारूपधर्मबोधकत्वव्यवच्छेदः । इत्थं च न पूर्वयोत्तरस्यागतार्थत्वशङ्कापीति भावः । ननु सृष्ट्यादिवाक्यानां सार्थक्यस्योपपादनेऽपि व्यासविचारस्य कथं ज्ञानोपयोग इत्यत आहुः । 'विचारस्ये'त्यादि । यथा

1—अस्याष्टीकाया एकमेव पुस्तक लब्धम् । तच्चैतद्ग्रन्थस्थलेष्वशुद्धम् । तथाप्येकेनैव शोधन विहितमिति ग्रन्थान्तेऽशुद्धा पाठा परं किं विधेयमन्यदस्मिन्नतिदुर्लभपुस्तके समये ।

तथा वक्ष्यते। किञ्च औपनिषदज्ञानस्याऽपि कर्मोपयोगित्वम् 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवती'ति। अत एव ब्रह्मविदामेव जनकादीनां कर्मणि सर्वदेवसान्निध्यम्। अन्यथाऽऽभासत्वमेव। नच ब्रह्मरूपाऽऽत्मविज्ञाने देहाद्यध्यास-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

धर्मस्यैव मुख्यत्वेन तद्विरुद्धब्रह्मप्रतिपत्तिफलकतद्विचारस्यात्रानुपयुक्तत्वादकर्तव्यमित्याशङ्कां निराकुर्वन्ति—'किञ्चे'ति। औपनिषदस्योपनिषत्प्रतिपादितस्याऽऽत्मनो ज्ञानस्यापि 'यदेव विद्यया करोती'त्यादिश्रुतिभिस्तत्पूर्वकस्य कर्मणो वीर्यवत्तरत्वस्य निरूप्यमाणत्वात्कर्मोपयोगित्वम्। वस्तुतस्तु तज्ज्ञानस्य कर्मोपयोगित्वाभावेऽपि नास्माकं क्षतिः। सर्वतोधिकब्रह्मप्राप्तिफलकत्वस्य 'ब्रह्मविदाप्नोती'त्यादिभिर्निरूप्यमाणत्वात्। 'अधिकं तत्रानुप्रविष्टं न तु तद्धानि'रिति न्यायेन धर्मोपयोगोपन्यास इति ज्ञेयम्। तत्पूर्वकस्यैव कर्मणो वीर्यवत्तरत्वे ज्ञापकमाहुः—'अत एवे'ति। यतो विद्यादिपूर्वकस्य कर्मणो वीर्यवत्तरत्वमत एव जनकादीनां कर्मणि यावन्तो देवास्तत्राऽधिकृतास्तेषां सान्निध्यं श्रूयते। कर्मणो वीर्यवत्तरत्वेन देवतासन्निधापने सामर्थ्यात्। तदभावेऽस्मदादिकृतानां कर्मणामाभासत्वमेव।

नन्वेवं ब्रह्मस्वरूपात्मविज्ञानस्य कर्मकरणात्पूर्वमपेक्षितत्वे देहाद्यध्यासमारोपितकर्तृत्वाभिमानेन हि कर्मकृतेः सर्वत्र दृष्टत्वात्तत्तु देहादेर्निरध्यस्तत्वात्कथं तत्सम्भव इत्याशङ्क्य परिहरन्ति—'नचे'ति।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

खण्डलार्थः। इदं च सर्वं साधनप्रकरणे तृतीयाध्याये द्वितीये पाद उभयव्यपदेशाधिकरणे विस्तरेण वक्ष्यन्ति श्रीमदाचार्यचरणाः। इदानीमुत्तरमीमांसयैव पूर्वमीमांसायाश्चारितार्थ्यमन्यथा नेति विपरीतं दूषणमुद्भावयन्ति—'किञ्चे'ति। अन्यथा औपनिषदज्ञानाभावे। आभासत्वमेव कर्माभासत्वमेव।

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

मुमुक्ष्वर्थतया निवृत्तिपराणां चोपयोगस्तथा नोत्तरमीमांसाया अतः पूर्वयैव फलसिद्धौ किमेतयेत्यत आहुः—'किञ्चे'त्यादि। औपनिषदस्योपनिषत्प्रतिपाद्यस्य ब्रह्मणो ज्ञानमपि, पूर्वकाण्डप्रतिपाद्यं कर्म ज्ञानं समुच्चिनोति। तत्र हेतुः 'यदेवे'ति। विद्याशब्देनाऽत्र ब्रह्मसाक्षात्कारः। उपनिषच्छब्देन च शाब्दं ज्ञानम्। तथाच यदेव वैदिकं कर्ममात्रं ब्रह्मज्ञानपूर्वकं करोति तदेव वीर्यवत्तरं भवति फलोत्पादनसमर्थम्। फलं च भगवदानन्दरूपम्। योढाविहितस्याऽभिव्यक्तत्वात्। एतादृशाधिकारस्य

श्रीलालूभट्टकृता गूढार्थदीपिका।

मीमांसायाः सर्वथा कर्तव्यतामाहुः—'किञ्च औपनिषदज्ञानस्यापी'त्यारभ्य 'ब्रह्म जिज्ञास्य-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

मोहकशास्त्रसम्पादितविरुद्धबुद्धिनिराकरणप्रकारेण। वक्ष्यते जन्माद्यधिकरणमारभ्य सर्वत्र वक्ष्यते इत्यर्थः। अत्र ब्रह्मसाक्षात्कारोपयोग्युपासनार्थमेव ब्रह्मविचारकरणमिति न किन्तु ब्रह्मसाक्षात्कारोपयोगिकर्मसाफल्यायापि ब्रह्मविचारकरणमावश्यकमिति न पूर्वयोत्तरस्या गतार्थत्वानुपयोगावित्याहुः। 'किञ्चौपनिषदि'त्यादि। औपनिषदज्ञानस्य व्यासविचारनिष्पन्नस्येत्यर्थः। कर्मोपयोगित्वं कर्मणा फलसम्पादनेऽसाधारणसहकारिकारणत्वम्। विद्यया करणीभूतब्रह्मज्ञानेन। श्रद्धया फलावश्यं-

१ फलकस्येति कपुस्तकम्।

भावेन कर्तृत्वाऽभावात्कर्माऽनधिकार इति वाच्यम् । निरध्यस्तैरेव देहादिभिः कर्मकरणसम्भवात् । अत एव जीवन्मुक्तानां सर्वे व्यापाराः । तथा च स्मृतिः—

नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

तत्र हेतुमाहु—'निरध्यस्तैरेवे'ति । देहाद्यध्यासाभावेन फलानुसन्धानराहित्यमात्रं जायते न तु कर्मकृत्यभावः । अत्र ज्ञापकमाहुः—'अत एवे'ति । कर्मणो वैदिकस्य का वार्ता । अन्ये लौकिका अपि सर्वे व्यापारास्तत्र दृश्यन्ते । नहि तेषां फलाऽनुसन्धानपूर्वकं तत्कृतिः सम्भवति । तथा सत्यस्मदादिसादृश्ये जीवन्मुक्तत्वहानिप्रसङ्गः । तस्माद्व्यापारसत्त्वेऽपि तदनुसन्धानराहित्यं तेषु वर्तत इति न लौकिकैस्तैस्तेषां लौकिकत्वम् । तथा च यत्र लौकिकव्यापाराणामपि सम्भवस्तत्राऽलौकिकानां वैदिकानां सम्भवे किं वक्तव्यमिति भावः । लौकिकव्यापारसत्त्वे स्मृतिं प्रमाणयन्ति—'तथा च स्मृति'रिति । जीवन्मुक्तानां वैदिककर्मकृतेरावश्यकत्वं दर्शयन्ति—'अत' इति । यतो

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

कर्म इव आभासते स कर्माभासस्तस्य भावस्तत्त्वम् । अनुमित्यजनकहेत्वाभासवदित्यर्थः । अन्यत्सुगमम् ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

दुर्लभत्वेन क्वाचित्कत्वादाह—'श्रद्धये'ति । वाशब्दोऽनादरे । एवञ्च केवलश्रद्धापूर्वकं कृतं कर्म स्वर्गलोकप्रापकमात्रम् । श्रद्धोपनिषद्भ्यां सहितं कर्माऽऽत्मसुखं जनयति । एतद्द्वयमपि गौणम् । पूर्वोक्तं मुख्यम् । एतत्त्रितयाऽन्यतरस्याऽपि सत्त्वं एव यथाधिकारं फलम् । अन्यथा तु कर्माऽऽभासत्वान्न ततः फलमित्यर्थः । तत्र निदर्शनमाहुः—'अत एवे'ति । यतो विद्यापूर्वककर्मकरणेन कर्मणो वीर्यवत्तरत्वम् । अतस्तत्कर्मणि सर्वदेवसान्निध्यम् । 'अन्यथे'ति । उक्तप्रकारेण सर्वदेवसान्निध्याऽभावे । ब्रह्मविदोऽनधिकारित्वमाशङ्क्य दूषयन्ति—'नचे'ति । तत्र हेतु—'निरध्यस्तैरि'ति । अत्र ब्रह्मविद इत्यादि । तत्र निदर्शनमाहुः—'अत एवे'ति । 'सर्वे' इति । लौकिकाऽलौकिकाः । तत्सत्त्वे प्रमाणमाहुः—'तथा चे'त्यादिना । अत्र पश्यन्नित्यारभ्य धारयन्नित्यन्तेन लौकिका उक्ताः ।

श्रीबालकृष्णभट्टकृता गूढार्थदीपिका ।

मेवे'त्यन्तेन । एवं गतार्थत्वं परिहृत्य, कर्मण्युपयोगं च, न ब्रह्मजिज्ञास्यं किन्तु पूर्वकाण्डोक्तेऽपि कर्मणि मुख्यफलार्थेऽन्वयं ब्रह्म जिज्ञास्यमिति नास्या मीमांसाया गतार्थत्वं, न वाऽनुपयोग इत्यर्थः ।

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

भावनिश्चयेन । उपनिषदा प्रत्येकोपनिषदर्थज्ञानेन । वीर्यवत्तरं फलायोगरहितम् । अत एव पूर्वोक्तकारणकलापवता कृतकर्मणां वीर्यवत्तरत्वनियमादेव । सर्वदेवेति वक्ष्यमाणद्रव्यभागिदेवसान्निध्यमित्यर्थः । अन्यथा कर्मण्युक्तदेवसान्निध्याभावे । आभासत्वं प्रतिष्ठादिलौकिकफलसमर्पकत्वम् । एवकारेण मुख्यफलव्यवच्छेदः । कर्मानधिकारः ब्रह्मविद्यावत. कर्मण्यनधिकार. । निरध्यस्तैः अविद्यापर्वाविषयीभूतै. । तादृशानां कर्मकरणसम्भवे सम्मतिमाहु । 'अत एवे'त्यादि । व्यापाराः श्रूयन्ते

१—अनेति खपाठ ।

प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ इति ।

अतो ब्रह्मविदामेव कृतं कर्म शुभफलं भवति । अतो धर्मविचारकाणामपि ब्रह्म जिज्ञास्यमेव । तस्मान्न गतार्थत्वानुपयोगौ ।

ननु फलप्रेप्सुरधिकारी । फलञ्च विचारस्य शाब्दं ज्ञानम् । तस्य मननादिद्वारा अनु-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

विद्यापूर्वकस्यैव कर्मणो वीर्यवत्तरत्व तत एव तेषामेव तच्छुभफल शुभफलजनक क्रममोक्षजनक भवति । अत एवोक्त श्रीभागवततत्वदीपे—'ज्ञानिनस्तदभिव्यक्तौ कर्तुर्मोक्षः क्रमाद्भवे-दि'ति । तस्माद्धर्मानुष्ठानसिद्ध्यर्थं धर्मविचारस्येव ब्रह्मज्ञानपूर्वकतत्करणार्थं ब्रह्मजिज्ञासाया अपि सर्वैथैव कर्तव्यत्वमित्याह—'अत' इति । फलितमाह—'तस्मादि'ति । धर्मजिज्ञासया गतार्थत्वमनुपयोगश्च ब्रह्मजिज्ञासाया न वक्तु शक्याविति भाव । अधिकारी तु त्रैवर्णिक एवेति पूर्व-मुक्त तदेव दृढीकर्तुं शङ्कते—'नन्वि'ति ।

अथ शब्दस्याधिकारार्थत्वे को वाऽत्राधिकारी यमुद्दिश्येयं जिज्ञासाऽऽरभ्यत इति शङ्कायां त्रैव-र्णिक एवाधिकारीत्युक्तम् । तत्र पूर्वपक्षी शङ्कते—'नन्वि'ति । नहि फलकामनाऽभावे कस्यापि

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

वैराग्याऽऽनन्तर्यवादी सिंहावलोकनन्यायेन पुनराशङ्कते–'नन्वि'ति । 'फलं चे'ति । अस्य चाऽऽ-

केनचिद्विरचिता वेदान्तचन्द्रिका ।

ब्रह्मणीत्यारभ्य करोतीति वेदिका । अग्रे च लिप्यत इत्यनेन तत्फलाभावश्चोक्त । तथा चाऽत्राऽभि-मानाऽभावेन फलाऽभावमाप्नोतीति न पुन कर्मकृत्यभाव –'अत' इति । वीर्यवत्तरत्वादेव । शुभफल क्रममुक्तिफलमित्यर्थ । उपसहरन्ति—'अत' इति । कर्मफलसाधकत्वात् । फलितमाहु –'तस्मा-दि'ति । आवश्यकत्वादेव । यदुक्त त्रैवर्णिक एवाऽधिकारीति, तत्र शङ्कते–'नन्वि'ति । न हि प्रयो-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

नन्वथशब्दस्यानन्तर्यार्थे शमदमाद्यानन्तर्यकथनाच्छमादिवानधिकारी लभ्यते । अधिकारार्थत्वे को वा-धिकारी यमुद्दिश्य जिज्ञासाशास्त्रमारब्धमित्याकाङ्क्षायां त्रैवर्णिक एवाऽत्राऽधिकारीति पूर्वमुक्त तत्र पूर्वपक्षी शङ्कते–'ननु फलप्रेप्सुरि'त्यादिना । फलकामनाऽभावे प्रवृत्तेरसम्भवात्फलप्रेप्सुरधिकारी । तथाच ब्रह्मजिज्ञासाया शाब्दमेव ज्ञान फलम् । शब्दशेषत्वात् । शाब्दज्ञानस्य फल मननादिद्वारा स्व-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

इत्यर्थ । 'युक्त' पूर्वोक्तज्ञानशाली न तु युक्तस्य सर्वदा ज्ञानमित्येवरूप । तादृशयुक्तस्य शुकवाम-देवादेस्तादृशकर्मकरणासम्भवादिति भाव । उपसहरन्ति 'तस्मादि'त्यादि । 'गतार्थत्वे'त्यादि पूर्व-मीमासाया गतार्थत्वानुपयोगौ नेत्यर्थ ।

१ पूर्वक तदित्यादि नपुस्तकम् ।

भवः। तस्य चाऽनर्थनिवृत्तिपूर्वकपरमानन्दावाप्तिः। तथा च विरक्तोऽनर्थजिहासुः परमेप्सुश्चाधिकारी कस्मान्न भवति?। 'शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि। श्रमस्तस्य फलं मन्ये ह्यधेनुमिव रक्षत' इति भगवद्वचनात्केवलस्य निन्दाश्रवणादिति चेत्। न।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

कुत्रापि प्रवृत्तेः सम्भवोऽतः फलप्रेप्सुरधिकारी। तथा च ब्रह्मजिज्ञासाया. शाब्दमेव ज्ञानं फलम्। तस्य शब्दश्रेपश्चात्, तस्य मननादिद्वाराऽपरोक्षानुभवस्तस्य चानर्थरूपाऽविद्यातत्कार्यनिवृत्तिपूर्वकं परमानन्दस्य पुरुषोत्तमस्यावाप्ति. सायुज्यम्। तथा चानर्थजिहासुः परस्य पुरुषोत्तमस्य प्रेप्सुश्चाधिकारी कस्मान्न भवति। ननु शाब्दमेव ज्ञान विचारकस्य फलमस्तु, किं पुरुषोत्तमप्राप्तिपर्यन्त धावनेनेत्यत आह— 'शब्दे'ति। केवलस्य शाब्दज्ञानमात्रपर्यवसितस्य। तथा च फलप्रेप्सुरधिकारी न त्रैवर्णिकमात्रमिति स्थिते निषेधन्ति—'ने'ति। कुत इत्याकाङ्क्षायां हेतुमाहुः—'फलकामनाया' इति। यस्तु वेदाधिकारी

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

नन्दावाप्तिरित्यनेनान्वय। तथा च फलप्रेप्सोरधिकारित्वे च। एवं च साङ्गो वेदोऽध्येयो ज्ञेयश्चेति विधिना सार्थवेदाध्ययन विहितम्। तथा च वेदार्थज्ञानवान् त्रैवर्णिको विरक्तः सन्नेव फलप्रेप्सुर्भविष्यतीति वैराग्याऽऽनन्तर्यमावश्यकमिति भाव.।

ननु वेदार्थज्ञानस्य साक्षात् विचार एव फलं, न तु परप्राप्तिः। एवं च न तत्र वैराग्यापेक्षेत्यत आह—'शब्दे'ति। भगवद्वचनात् भागवते निन्दार्थवादरूपभगवद्वचनादित्यर्थः। अत्र समाधानमाहु—'ने'ति। 'अनुपयोगादि'ति। फलकामनावानधिकारी तदा वक्तव्यो—यदा स्वर्गकामो

केनचिद्विरचिता वेदान्तचन्द्रिका।

जनमनुदिश्येरेति न्यायात्त्रैवर्णिके फलप्रेप्सुत्व विशेषणीयम्। ननु तावन्मात्रम्? अनधिकारिफलत्व जिज्ञासापदसूचितसंशयनिवृत्तिद्वारा शाब्द ब्रह्मज्ञानम्। 'तस्ये'ति शाब्दज्ञानस्यानुभवः साक्षात्कार.। 'तस्य चे'ति। साक्षात्कारस्य। सकार्याऽविद्याऽनर्थः। जीवभावप्रापकतिरोहिताऽऽ-

श्रीलालूभट्टकृता गूढार्थदीपिका।

परोक्षानुभव.। तस्याऽपरोक्षानुभवस्याऽपि विद्यारूपाऽनर्थनिवृत्तिपूर्वक परमानन्दरूपपुरुषोत्तमप्राप्तिः फलम्। तथाचाऽनर्थनिवृत्तिकाम. परप्रेप्सुरत्राऽधिकारीति पूर्वपक्षिण आशयः। तदाह—'तथाच विरक्तोऽनर्थजिहासुः परप्रेप्सुश्चाधिकारी कस्मान्न भवती'ति। तत्रोत्तरमाहु—'फलकामनाया अनुपयोगादि'ति। ब्रह्मविदाप्नोति परमिति श्रुतेः परप्रेप्सुरधिकारी स्यादिति यदुक्त तत्तु तदा स्याद्यदि प्रतिज्ञासूत्रे ब्रह्मजिज्ञासापदात्प्राप्येत। तत्तु नैव। शब्दार्थस्याऽनन्यलभ्यत्वात्। अतस्त्रैवर्णिकोऽर्थजिज्ञासुरेव ब्रह्मजिज्ञासायामधिकारीत्यर्थः। परप्राप्तिरूपफलकामना तु ब्रह्मविदाप्नोति परमितिवाक्यार्थज्ञानोत्तरभाविनीति न ब्रह्मजिज्ञासाधिकारकोटौ प्रविशतीत्याहुः—

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप।

वेदान्तविचारे त्रैवर्णिकोऽधिकारीति पूर्वं निर्णीते आनन्तर्यार्थकाथशब्दवादी शङ्कते 'ननु फले'त्यादि। फलप्रेप्सुः फलकामनावान्। तस्य शाब्दज्ञानस्य। अनुभवः निदिध्यासनरूप.। तस्य निदिध्यासनस्य। अनर्थः ससाररूप। अवाप्तिः साक्षात्कार। निष्णातः औपनिषदज्ञानवान्।

फलकामनाया अनुपयोगात् अन्येनैव तत्समर्पणात्। नित्यत्वादप्यर्थज्ञानस्य न फलेप्सुरधिकारी। निन्दार्थवादस्तु मननादिविधिविशेष इति मन्तव्यम्।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

स एव तच्छेषभूते विचारेऽपीत्यधिकारे फलकामनाया अनुपयोगः। तत्र हेतुमाहुः—'अन्येने'ति। अन्येन त्रैवर्णिकत्वमात्रेणैव तस्याधिकारस्य समर्पणात्। फलेप्सोरधिकारित्वबाधकान्तरमप्याह—'नित्यत्वा'दिति। फलेप्सुरर्थज्ञानस्याधिकारी न भवति। कुतः। नित्यत्वात्फलस्येति शेषः। तथा

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

यजेतेति वाक्यवत्फलकामनावता पुरुषेण विचारः कर्तव्यः-इत्याकारकबोधजनकं प्रतिज्ञावाक्यं चेत्। तदेव नास्ति। कुतः। अथातो ब्रह्मजिज्ञासेत्यस्माद्वाक्यात्कामनाया अप्रतीतेः। अतस्त्रैवर्णिक एवाधिकारीति भावः। ननु तर्हि परप्राप्तिरूपं फलं मुख्यं तदेव केनचिद्वाक्येन न बोधितं चेत्कस्यापि शास्त्रे प्रवृत्तिरेव न स्यादित्यत आहुः—'अन्येनैवे'ति। ब्रह्मविदाप्नोति परमित्यनेन वाक्येनैव तत्समर्पणात् परप्राप्तिरूपफलबोधनात्। तथा च वेदाध्ययनानन्तरं ब्रह्ममीमांसापूर्वकवेदार्थज्ञाने जाते ब्रह्मविदाप्नोति परमित्यस्य वाक्यार्थज्ञानानन्तरं फलकामनोत्पद्यते। ततः पूर्वं कामनाया अभावा-

केश्चिद्विरचिता वेदान्तचन्द्रिका।

नन्दस्याऽऽप्तिराविर्भावः। पुरुषोत्तमप्राप्तिस्तु भक्त्यैव नान्यथा। उपसंहरन्ति—'तथा चे'ति। बाधकाऽभावाद्ब्रह्मस्यैवेत्यर्थः। ननु जिज्ञासापदात्संशयनिवृत्तिपूर्वकवेदार्थब्रह्मणः शाब्दमेव ज्ञानं फलत्वेन वक्तुरिष्टमिति नोक्तविशेषणसार्थक्यमित्यत आहुः—'शब्दे'ति। तदधिकारित्वविशेषणं सार्थकमेवेति भावः। समादधते—'ने'त्यादिना। 'अनुपयोगादि'ति। सन्देहनिवृत्तिद्वारकज्ञानैकफलकविचारशास्त्रेऽधिकारिणः प्रवृत्तौ फलकामनाया अन्यथासिद्धत्वेनाऽकारणत्वात्। ज्ञेयश्चेति विधिना ज्ञानमात्रस्यैव विधानात्तत्फलस्य तु ज्ञानविध्यतिरिक्तब्रह्मविदाप्नोति परमित्यादिवाक्येन बोधनादि-

श्रीलालूभट्टकृता गूढार्थदीपिका।

'अन्येनैव तत्समर्पणादि'ति। 'नित्यत्वादप्यर्थज्ञानस्ये'ति। स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थमिति निन्दाश्रुतेरर्थज्ञानस्य नित्यत्वम्। अकरणे प्रत्यवायत्वात्। अकरणे प्रत्यवायजनकस्य नित्यत्वाभ्युपगमात्। तथा चार्थज्ञानस्य प्रत्यवायपरिहाराय-ऽवश्यसम्पाद्यत्वं सिद्धमिति न फलेप्सुरधिकारी कल्पनीयः। तत्कल्पने काम्यत्वापत्तेर्नित्यत्वं भज्येत। अतो यस्त्रैवर्णिको वेदवेदान्तेष्वधिकारी स एव वेदान्तसूत्ररूपमीमांसायामधिकारीति निष्कर्षः। नन्वेवं शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि। श्रमस्तस्य फलं मन्ये इति

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप।

'न निष्णायादि'त्यादि। परब्रह्मविषयकसाक्षात्कारवान्न भवेद्यदीत्यर्थः। केवलस्य फलशून्यार्थज्ञानरूपसाधनवतः।

इत्थं चाधिकारिविशेषणीभूतवैराग्यादीनां विचारात्पूर्वमावश्यकत्वात्, तेषामानन्तर्यमेवाथशब्दशक्यार्थो भवेन्न तु आनन्तर्यनिरूपकस्यालाभेनाधिकाररूपोप्यथशब्दस्यार्थः स्यादिति वायभिप्रायः सिद्धः। तद्दूषयन्ति—'ने'त्यादि। अनुपयोगात् अधिकारिविशेषणार्थं अनुपयोगात्। अन्येनैव 'ब्रह्मविदाप्नोति परमि'ति वेदेनैव। तत्समर्पणात् परप्राप्तिकामनावतो ब्रह्मविदोधिकारिणो बोधनात्। नित्य-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

च फलस्य नित्यत्वेनाऽर्थज्ञानमनर्थकमेव स्यादिति भावः । नन्वेवं 'शब्दब्रह्मणि निष्णातो' 'स्थाणुरय'मित्यादिनिन्दार्थवादानां कुत्रोपयोग इत्याशङ्क्याऽऽहुः—'निन्दार्थवादस्त्वि'ति । ब्रह्मजिज्ञासापदं व्याख्यातुं शङ्कन्ते—'ननु ब्रह्मण' इति । यत्प्रतिज्ञातं तदेव निरूप्यमिति शास्त्रकृतां मर्यादा । तथा च समन्वयस्य प्रथमाध्यायार्थस्य प्रतिज्ञातत्वेऽपि विरोधनिराकरणसाधनप्रयोजनानां द्वितीयातृतीयाचतुर्थीयाऽर्थानामप्रतिज्ञातत्वेन जिज्ञासयाऽवरोद्धुमशक्यत्वात् । ननु तेषामप्रतिज्ञातार्थत्वे न

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

दर्थजिज्ञासुस्त्रैवर्णिक एवाऽधिकारी, न तु फलप्रेप्सुरिति भावः । ननु तदर्थज्ञानमेव फलमस्तु, तावतैव फलप्रेप्सुरधिकारी भवतीत्यत आह—'नित्यत्वादि'ति । सन्ध्यावन्दनादिवत् ज्ञेयश्चेति विधिबोधितत्वेन नित्यत्वात् । नित्ये कामनाया अभावादित्यर्थः । ननु यद्यर्थजिज्ञासुरेवाधिकारी तर्हि तस्य परनिष्णातत्वाऽभावात् शब्दब्रह्मणीत्यादिनिन्दार्थवादस्य का गतिरित्यत आहुः—'निन्दार्थवादे'ति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यत्र श्रवणोत्तरं मननं

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

त्याहुः—'अन्येने'ति । अथवा ज्ञानविधिना ज्ञानशब्देन साक्षात्कारोऽप्युक्त एवेत्याशङ्क्याहुः—'अन्येनैवे'ति । साक्षात्कर्तव्य इत्यनेनैव साक्षात्काररूपफलकामनाया ज्ञापनाद्ब्रह्मविदाप्नोति परमित्यनेन चेति । फलकामनाया अधिकारिविशेषणत्वे दूषणमाहुः—'नित्यत्वादि'ति । साङ्गोऽध्येयो ज्ञेयश्च, ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजमित्यादिश्रुतिस्मृतिभ्यो नित्यार्थज्ञानं फलं, कामयमानं नाधिकारिणमपेक्षते । यस्तं नवेदेति, स्थाणुरयं भार हार इति, गीती शीघ्रीत्यादिनिन्दाश्रवणादपि नित्यमेवार्थज्ञानमित्यतोऽपि तथा । शब्दब्रह्मणीत्यादिनिन्दार्थवादस्य व्यवस्थामाहुः—'निन्दे'ति । ब्रह्मजिज्ञासापदं विवरिषवः सर्वस्याऽपि समन्वयादिरूपस्य शास्त्रार्थस्य

श्रीलालूभट्टकृता गूढार्थदीपिका ।

निन्दार्थवादात्परनिष्णातत्वस्य नित्यत्वेन तस्य च वेदान्तमीमांसाधीनत्वेन वेदान्तमीमांसाधिकारे परप्रेप्सोः कुतो न निवेश इत्याशङ्क्याऽऽहुः—'निन्दार्थवादस्त्वि'ति । शब्दब्रह्मणि निष्णात इति निन्दार्थवाद इत्यर्थः । 'मननादिविधिशेष' इति । आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्य इति श्रुतावात्मशब्दवाच्यस्य परब्रह्मणो मननादि विधीयते । तत्र सहायभूतोऽयमर्थवादः सर्वथा परनिष्णातत्वं सम्पादनीयमिति बोधयन् परनिष्णातत्वस्य मननाधीनत्वान्मननमावश्यकमिति द्रढयत्यतो मननादिशेषत्वाद्वेदान्तमीमांसाधिकारे परप्रेप्सुं निवेशयितुं न समर्थ इति बोध्यम् ।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

स्यादिति । तथा च सन्ध्यावन्दनवद्वेदान्तविचारसम्पाद्यब्रह्मज्ञानस्य नित्यत्वेन फलत्वेन फलकामनावतोऽधिकारकल्पने कामनाशून्येन तादृशज्ञानासम्पादने प्रत्यवायो न भवेदिति भावः । निन्दार्थवादः 'अधेनुमिवे'त्यादिनिन्दार्थवादः । मननेत्यादि । तथा च मनननिदिध्यासनाकरणे श्रमफलबोधक इत्यर्थः ।

---

१—शास्त्रकृताऽर्थमर्यादेति क पुस्तकम् । २—द्वितीयार्थतृतीयार्थचतुर्थार्थेत्यादि पाठः कदाचित्स्यात् ।

ननु ब्रह्मणो विचारे प्रतिज्ञाते, विरोधनिराकरणादीनामप्रतिज्ञातार्थत्वम् । नचावक्तव्यत्वम् । निर्विचिकित्सज्ञानानुदयप्रसङ्गादिति चेत् । न । ब्रह्मण इति न कर्मणि षष्ठी,

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

तानि कर्तव्यानीत्याशङ्क्य परिहरन्ति—'नचे'ति । तत्र हेतुमाहुः—'निर्विचिकित्से'ति । विरोधनिराकरणादीनामनिरूपणे वाक्यानां परस्परविरुद्धत्वेन भासमानत्वात्कृतोऽपि समन्वयो न निःसन्देहं हृदयमारोढुमर्हतीति । तथा च कृतोऽप्यकृत एव भवेदिति तस्याऽऽवश्यकत्वम् । तथा सत्यप्रतिज्ञातार्थनिरूपणमित्युभयतःपाशा रज्जुरिति चेन्नेत्याहुः—'ने'ति । तत्र हेतुः—'ब्रह्मण' इति । 'न कर्मणी'ति । ब्रह्मजिज्ञासा इत्यत्र ब्रह्मण इति न कर्तृकर्मणोः कृतीति कर्मणि षष्ठी । किन्तु कर्मादीनामपि सम्बन्ध-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

विहितम् । निन्दार्थवादवाक्येऽपि शब्दे निष्णातः परे यद्यनिष्णातस्तस्य निन्दा श्रूयते । तेन च कृत्वा मननविधेरर्थवादोऽयमिति ज्ञायते । एवं च मननविध्येकवाक्यतया प्रामाण्यं मन्तव्यमिति भावः । एतावता प्रबन्धेनाऽधिकारी, परप्राप्तिरूपं प्रयोजनं चोक्तम् । शङ्कामुखेन विषयं निर्वक्तुमाहुः—'नन्वि'ति । 'विरोधे'ति । द्वितीयाद्यध्यायोक्तानामिति शेषः । विरोधनिराकरणादीनामनावश्यकत्वादस्त्वप्रतिज्ञातार्थत्वमित्याशयेन शङ्कते—'नचे'ति । न हीत्यर्थः । अवक्तव्यत्वं द्वितीयाद्यध्यायार्थस्याऽनिरूपणीयत्वं स्वीक्रियत इति न हीत्यर्थः । तथा सति दूषणमाहुः—'निर्विचिकित्से'ति । परमतनिराकरणपूर्वकस्वमतव्यवस्थापनं हि निरूपणम् । एवं चैतादृशनिरूपणाऽभावात्साङ्ख्यादीनां निराकरणाभावे जगत्कर्तृ ब्रह्म वा प्रधानं वेति सन्देहे निःसन्दिग्धं ब्रह्मविषयकं शाब्दबोधात्मकं ज्ञानं न स्यादिति भावः । समाधान-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

प्रतिज्ञाविषयत्वप्रदर्शनार्थमप्रतिज्ञातत्वमाशङ्क्य निराकुर्वन्ति—'नन्वि'त्यादिना । 'ब्रह्मण' इति । प्रतिज्ञातद्विचारस्य वेदान्तवाक्यैः करिष्यमाणत्वेन वेदान्तवाक्यसमन्वयरूपस्य प्रथमाऽध्यायाऽर्थस्य प्रतिज्ञातत्वेऽपि विरोधनिराकरणसाधनफलरूपाणामन्येषामध्यायार्थानामप्रतिज्ञातस्य सिद्ध्यति । नन्वप्रतिज्ञातत्वान्मास्तु तन्निरूपणमित्यत आहुः—'नचे'ति । तत्र हेतुः—'निर्विचिकित्से'ति । 'ब्रह्मण इती'ति । इयमाशङ्का तदा स्याद्यदि कर्मषष्ठीयम् । नच कर्तृकर्मणोः कृतीति विशेषविधानाज्जिज्ञासमात्रापेक्षत्वाच्च जिज्ञासायाः कर्मषष्ठ्येव कुतो न स्यादिति वाच्यम् । पूर्वोक्तदोषतादव-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ननु शेषषष्ठ्यङ्गीकारे ब्रह्मसंबन्धिपदार्थजिज्ञासायां प्रतिज्ञातायां ब्रह्मणो गौणत्वापत्तिरजिज्ञा-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

ब्रह्मणो विचारे सर्ववेदान्तवाक्यानां ब्रह्मणि समन्वयरूपे विचारे । 'विरोधे'त्यादि । तथाचाविरोधसाधनफलानामध्यायत्रितयनिरूप्याणामप्रतिज्ञातनिरूपणमधिकं निग्रहस्थानमित्यर्थः । नचावक्तव्यत्वं समन्वयभिन्नस्य अविरोधादित्रयस्यानिरूपणीयत्वं मीमांसायामित्यर्थः । 'निर्विचिकित्से'त्यादि । सिद्धान्तविरोधिप्रकारनिरसनपूर्वकब्रह्मज्ञानानुदयप्रसङ्गादित्यर्थः । इति चेत् ब्रह्ममात्रनिरूपणे निर्विचिकित्सब्रह्मज्ञानानुदयः निर्विचिकित्सब्रह्मज्ञानसम्पादकाविरोधादित्रयनिरूपणे चाप्रतिज्ञातनिरूपणदोष इत्युभयतःपाशा रज्जुरिति चेत् ।

नेत्यर्थः । तत्र हेतुरूपं समाधानमुपवर्णयन्ति । 'ब्रह्मण' इत्यादिना । न कर्मणि, 'न कर्तृ-

किन्तु शेषषष्ठी । तथा च ब्रह्मसम्बन्धि तज्ज्ञानोपयोगि सर्वमेव प्रतिज्ञातं वेदितव्यम् । नच

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

मात्रविवक्षायां षष्ठ्येवेति सम्बन्धमात्रषष्ठीति ब्रह्मसम्बन्धितज्ज्ञानोपयोगिसर्ववस्तुविषयो विचार इत्युक्तं भवति । तथा च ब्रह्मलक्षणप्रमाणयुक्तिसाधनप्रयोजनविचाराः सर्वेऽपि जिज्ञासयाऽवरुद्धा भवन्ति । साक्षात्पारम्पर्येण ब्रह्मसम्बन्धादिति नाऽप्रतिज्ञातार्थनिरूपणमिति भावः । कर्मषष्ठीपरिग्रहे ब्रह्ममात्रमेव जिज्ञास्यं स्यान्न त्वितराणि । ब्रह्मण इति षष्ठीसमासप्रदर्शनेन 'ब्रह्मणे जिज्ञासेति' चतुर्थीसमासो वृत्तिकृदभिमतः परास्तो वेदितव्यः । पाणिनिः किल '**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैरि**'ति तादर्थ्यसमासं सस्मार । चतुर्थ्यन्तः शब्दस्तदर्थवचनादिभिः शब्दैः समस्यते । चतुर्थ्यन्तशब्दार्थस्तच्छब्देन परामृश्यते । तस्मा इदं तदर्थम् । यथा कुण्डलाय हिरण्यमित्यत्र कुण्डलं चतुर्थ्यन्तशब्दार्थः । तच्छेषो हिरण्यम् । तत्र कुण्डलशब्दश्चतुर्थ्यन्तः कुण्डलशेषवाचिना हिरण्यशब्देन समस्यते कुण्डलहिरण्यमिति । तथार्थशब्दादिनापि । ब्राह्मणार्थं पय इत्यादि द्रष्टव्यम् । कात्यायनेन स्वयं समासः प्रकृतिविकृत्योर्नियमितः । तादर्थ्यसमासे प्रकृतिविकृतिग्रहणं कर्तव्यमिति । तथा च यूपदार्वादिष्वेव प्रकृतिविकारभूतेषु चतुर्थीसमासो नाऽप्रकृतिविकारभूत इति । नन्वेवमश्वघासादिशब्देष्वप्रकृतिविकारभूतेषु कथं तादर्थ्यसमास इति चेत् । उच्यते । '**अश्वघासादयः षष्ठीसमासा भविष्यन्ती**'ति कात्यायनेनैव तत्र षष्ठीसमासप्रतिविधानादित्यलं प्रसक्तानुप्रसक्त्या ।

प्रकृतमनुसरामः । नन्वत्र कर्मषष्ठ्येवोच्यतां जिज्ञास्यमात्रापेक्षत्वाज्जिज्ञासाया इति चेत्तर्हि विरोधनिराकरणादीनामनिरूपणीयत्वमेव स्याज्जिज्ञासया कर्मत्वेन ब्रह्मण एवाऽवरुद्धत्वादिति चेत् । न । प्रधाने जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येवेति न पृथक्सूत्रयितव्यानि । यथा 'राजासौ गच्छती' त्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति, तथेति

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

माहुः-'ने'त्यादि । '**न कर्मणि षष्ठी किन्तु शेषषष्ठी**'ति । कर्मषष्ठ्यां स्वीकृतायां केवलमब्रह्मकर्मकज्ञानोपयोगिविचार एव प्रतिज्ञातः स्यात् । तथा च द्वितीयाद्यध्यायार्थस्याऽप्रतिज्ञातत्वेनाकस्मिकत्वापत्तिरूपदोषः स्यात् । शेषषष्ठ्यां स्वीकृतायां तु तस्याश्च सम्बन्धवाचकत्वात्सम्बन्धस्य च द्विनिष्ठत्वेन

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

स्यात् । न च विरोधनिराकरणादीनामाक्षेपलभ्यत्वान्न दोष इति वाच्यम् । आक्षेपस्वरूपासिद्धेः । न हि शाब्देऽर्थे तदुपलक्षिताऽनुपपत्तिप्रतिसन्धानमन्तराऽऽक्षेपसम्भवः । न च विरोधनिराकरणाद्यन्तरेण गोत्वादिवज्जिज्ञासाया जिज्ञास्यलाभेनैवाऽऽकाङ्क्षोपशमाद्विचारस्य वा स्वरूपानुपपत्तिरस्ति । तद्विनापि ब्रह्मकर्मिका जिज्ञासा कर्तव्येति वाक्यार्थसिद्धेः । नाऽप्युक्तराजदृष्टान्तेन विरोधनिराकरणादीनामार्थिकी प्राप्तिः सम्भवति । एकाकिनोऽपि राज्ञो गमनदर्शनाद्दृष्टान्तस्यैवाऽसिद्धेः । अपि च विरोधनिराकरणस्य **कर्तृकर्मणोः** **कृतीति** विशेषविधानेऽपि विवक्षाऽधीनत्वाद्विभक्तीनां, ब्रह्मणः कर्मत्वे

भगवदीयश्रीमदिच्छारामप्रणीत- प्रदीप. ।

कर्मणोः कृति'इतिसूत्रविहिता षष्ठीत्यर्थः । तथा च ताद्दशषष्ठ्यङ्गीकारे 'हरिं भजेते' इत्यत्र हरिभिन्नभजनाबोधवत् ब्रह्मभिन्नविचारालाभोऽपि भवेदिति भावः । **शेषषष्ठी** विशेषरहितं सामान्यं शेष इति सम्बन्धसामान्ये षष्ठीति फलितमित्यर्थः । **तज्ज्ञानोपयोगि** ब्रह्मज्ञानोपयोगि । **सर्वमेव** वेदान्ते

१—सम्बन्धमात्रे इति क पुस्तकम् ।

**गौणतापत्तिरजिज्ञास्यत्वं च स्यादिति वाच्यम् । ब्रह्ममात्रे सन्देहाभावात् । सन्दिग्धस्यैव**

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

चेत् । उच्यते । कर्मषष्ठ्याः सम्बन्धविशेषवाचकत्वात् । न हि 'हरिं भजे' त्युक्ते तत्सम्बन्धिनोऽन्यस्य भजनमापतति । विशेषो हि सामान्यरहितः, सामान्यं तु न निर्विशेषमिति, कर्मषष्ठ्या सम्बन्धसामान्यग्रहणे कर्मादीनामपि सम्बन्धमात्रविवक्षायां 'षष्ठ्या वे'त्यस्य निर्विषयत्वापत्तिरेव भवेत् । न'न्वधीहि भगवो ब्रह्मे'ति भृगुप्रश्ने 'यतो वा इमानि भूतानी'त्यारभ्य 'तद्विजिज्ञासस्व तद्ब्रह्मे'त्यनेन सन्दर्भेण प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं प्रतीयते, तद्वदत्राऽपि भविष्यतीति चेत् । न । तत्र युक्तं ब्रह्मणः कर्मत्वम् । तन्मात्रस्यैव प्रश्नविषयत्वात् । अत्र तु विरोधनिराकरणादीनामपि सत्त्वेन ब्रह्मसंम्बन्धितज्ज्ञानोपयोगि सर्वमेव जिज्ञासाविषयत्वेनाङ्गीकर्तव्यम् । तच्च शेषषष्ठीपरिग्रह एव सम्भवतीति न कर्मषष्ठी परिग्रहीतुं शक्येत्यर्थः । नन्वेवं सति ब्रह्मणो जिज्ञासां प्रति गौणतापत्तिरजिज्ञास्यत्वं च स्याद्विरोधनिराकरणादीनामिवेत्याशङ्क्य परिहरन्ति—'नचे'ति । अजिज्ञास्यत्वं यदुक्तं तत्रोत्तरमाहुः—'ब्रह्ममात्र' इति । ब्रह्मणो हि स्वरूपतोऽजिज्ञास्यत्वमेव । यद्धि सन्दिग्धं तदेव जिज्ञास्यम् । नाऽसन्दिग्धम् । न हि ब्रह्मणि कस्यापि सन्देहोऽस्ति ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

ब्रह्मसम्बन्धि यद्विरोधनिराकरणादि ब्रह्म च एतदुभयज्ञानोपयोगि सर्वमेव प्रतिज्ञातं वेदितव्यमिति भावः । ननु विवक्षाधीनशेषषष्ठ्यां स्वीकृतायां तु दोष एव नास्ति, परन्तु न कर्मणि षष्ठीति भाष्यं न संगच्छते, कुतः, प्रतिपदविधाना षष्ठी न समस्यते इति वार्तिकात् समासनिषेधेन कर्मषष्ठ्यां समासप्रास्यभावादिति चेत् । न । कृद्योगा च षष्ठी समस्यत इति प्रतिप्रसवात्समासो भविष्यतीति

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

ऽविवक्षते सम्बन्धमात्रविवक्षायां शेषषष्ठी भवत्येवेति न कर्मणि षष्ठी । पाणिनीयसूत्रविरोधाभावाच्च । तत्फलमाहुः—'तथाचे'ति । शेषषष्ठ्येव । ब्रह्मसम्बन्धिनो ब्रह्मज्ञानोपयोगिनः सर्वस्यापि विरोधनिराकरणादेः प्रतिज्ञानान्न कस्याप्याकस्मिकत्वाऽऽपत्तिरित्यर्थः ।

नन्वेवं ब्रह्मसम्बन्धिनो विचारे प्रतिज्ञाते ब्रह्मणो गौणत्वादजिज्ञास्यत्वाऽऽपत्तिः स्यादित्यत आहुः—'नचे'ति । 'ब्रह्ममात्र'इति । आस्तिकानां ब्रह्मसत्तायां सन्देह एव नास्ति । किन्तु निर्धर्मकत्वं

श्रीलालूभट्टकृता गूढार्थदीपिका ।

'न च गौणतापत्ति'रित्यादिना । 'ब्रह्ममात्रे सन्देहाभावा'दिति । ब्रह्मणः समस्ताऽऽस्तिकतन्त्रसिद्धत्वेन सन्देहाऽभावान्न जिज्ञास्यत्वं किन्तु ब्रह्मधर्मादीनामेव सन्दिग्धत्वाज्जिज्ञास्यत्वमतो धर्मरूपादेर्ब्रह्मसम्बन्धिनो जिज्ञासैव ब्रह्मजिज्ञासेत्यर्थः । ननु सत्वं च स्यादित्याशङ्क्य समादधते ।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

निरूप्य सर्वमेवत्यर्थः । 'नच गौणते'त्यादि । तथा च जिज्ञास्यकोटिप्रविष्टविरोधादितुल्यतया ब्रह्मणो गौणतापत्तिरित्यर्थः । अत एवाविरोधादितुल्यतयाऽजिज्ञास्यत्वमपि स्यादित्यर्थः । ब्रह्ममात्रे ब्रह्मस्वरूपसत्तायां । जिज्ञास्यता निश्चयार्थं विचार्यता । नन्वेवं ब्रह्मणोऽजिज्ञास्यत्वे प्रतिज्ञासूत्रविरोध

१ संबन्धीत्येव खपुस्तकम् ।

जिज्ञास्यता । गौणत्वं तु शब्दत एव, नत्वर्थतः । वेदप्रामाण्यं तु प्रतितन्त्रसिद्धत्वात् न विचार्यते । तस्मात् ब्रह्म जिज्ञासितव्यमिति सिद्धम् ।

॥ इति प्रथमाध्याये प्रथमे पादे जिज्ञासाधिकरणम् ॥

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

सर्वोऽहमिति प्रत्येति । नाहमनहं चेति । नन्वेवं ब्रह्मणोऽजिज्ञास्यत्वे प्रतिज्ञासूत्रमसङ्गतमेव स्यादिति चेत् । न । शास्त्रशब्दव्युत्पत्त्या शास्त्रस्य सन्देहवारकत्वेन ब्रह्मनिष्ठक्रियाशक्तिज्ञानशक्त्योः सन्दिग्धत्वात्तन्निराकरणार्थमेव शास्त्रारम्भ इति नासङ्गतत्वं शास्त्रस्य । कैव कथा प्रतिज्ञासूत्रस्येति भावः । गौणतापत्तेरुत्तरमाहुः—गौणत्त्वमिति । प्रतिवादिनाऽपि षष्ठीसमासाभ्युपगमे ब्रह्मणो जिज्ञासाव्यावर्तकत्वेन गौणत्वापत्तेः षष्ठीसमासपरिग्रहेऽपि ब्रह्मणो वास्तवप्राधान्योपपत्तेरित्यनेन शब्दतो गौणत्वेऽप्यर्थतः प्राधान्योपपत्त्या परिहृतत्वात् । यथा ब्रह्मविदाप्नोतीत्यादौ ब्रह्मणो ज्ञानविषयत्वेन शब्दतो गौणत्वेऽप्यर्थतः प्राधान्येन न किञ्चिदनुपपन्नं तथात्रापीत्यर्थः । ननु प्रतिज्ञासूत्रे ब्रह्मजिज्ञासा प्रतिज्ञाता । सा च वेदान्तवाक्यान्तर्गतशब्दशेषभूता । तथा सति सिद्धे वेदान्तवाक्यप्रामाण्ये महता प्रयासेन सा कर्तुमुचिता । तदेव तु जिज्ञासायाः पूर्वं विचारणीयमित्याशङ्कायामाहुः—'वेदप्रामाण्यमि'ति । कैव कथा वेदान्तवाक्यानाम् । सर्वस्याऽपि वेदस्य प्रामाण्यं तु । प्रति प्रतिकूलानि तन्त्राणि । सिद्धान्ताः कणादन्यायमायावादादिरूपाः । तेषु सिद्धत्वान्न विचारस्यावकाशः । सन्देहे हि विचाराः । वेदाऽप्रामाण्यं तु न सर्वेणाऽपि सिद्धमिति द्वितीयकोट्युपस्थित्यभावात्सन्देहाभावस्ततो विचाराऽभाव इत्यर्थः । उपसंहरन्ति–'तस्मादि'ति ।

इति जिज्ञासाधिकरणम् ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

कर्मषष्ठ्येव स्वीकार्येति प्राप्ते न कर्मणि षष्ठीति भाष्यं संगतमिति भावः । अत्र शेषषष्ठ्याः ज्ञो विदर्थस्य करणे इत्यादि जगत्कर्तृत्वादीनां विधानाभावात् प्रतिपदेति वार्तिकस्याऽप्रवृत्त्या समासो भविष्यतीत्यलमप्रकृतविचारेण ।

ननु तर्हि प्रथमाध्यायोक्तानां भगवद्गुणानां द्वितीयाध्यायोक्तानामविरोधादीनां ब्रह्मसम्बन्धिनां जिज्ञास्यत्वेन प्रतिज्ञातार्थत्वे धर्मांशे ब्रह्मणो गुणभूतत्वाद्गौणत्वापत्तिः । एवं यदंशे प्रतिज्ञातं तदंशे एव जिज्ञासा प्रवर्तत इति ब्रह्मणोऽजिज्ञास्यत्वं च स्यादित्याशयेन शङ्कते—'नचे'ति । सर्वं ज्ञानं धर्मिण्यंशेऽभ्रान्तं प्रकारे तु विपर्यय इत्यनेन धर्म्यंशे भ्रान्तिरेव नास्ति । यथा दूरादृष्टे पुरुष उच्चैस्त्वविशिष्टे

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

सधर्मकत्वं वेति सन्देह इति, धर्मा एव सन्दिग्धा इति धर्मिणोऽपि सन्दिग्धस्य जिज्ञास्यता । 'गौणत्वन्त्वि'ति । शब्दतो गौणत्वेऽपि न स्वरूपतो गौणत्वं भवति । पित्रा सहाऽऽगतः पुत्र इत्यादौ

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ब्रह्मणो जिज्ञासेति षष्ठीतत्पुरुषे षष्ठ्यन्तपदवाच्यस्य विशेषणत्वाद्ब्रह्मणो गौणत्वापत्तिरित्याशङ्क्य समादधते 'गौणत्वं तु शब्दत एव नत्वर्थत' इति । यथा राज्ञः सेवक-इत्यादौ षष्ठ्यन्तपदवाच्यस्य

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

इति चेन्न । परे ब्रह्मणि ज्ञानक्रियाशक्त्योः सन्दिग्धत्वेन तन्निर्णयार्थमेव व्यासशास्त्रप्रवृत्तेः धर्मिनिर्णयं विना च तन्निर्णयासम्भवात् ब्रह्मणोपि जिज्ञास्यतोपपत्तेरिति । 'गौणत्व'मित्यादि । तथा च 'ब्रह्मवि-

गोस्वामिश्रीपुरुषोत्तमविरचिता अणुभाष्यव्याख्या ।

सूत्रान्तरमवतारयितुं शङ्कते—'नन्वि'ति । मुमुक्षुणा ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इति प्रतिज्ञायां शेषषष्ठीपरिग्रहेण ब्रह्मस्वरूपविचारवत्प्रमाणयुक्तिसाधनफलविचाराणामपि प्रतिज्ञातत्वेन कथं प्रथमं ब्रह्मैव विचार्यत इति चेत् । उच्यते । अत्र यद्यपि प्रमाणादीनि सर्वाण्यपि प्रतिज्ञातानि तथापि स्वरूपस्य प्राधान्यात्प्रथमं तदेवाऽऽक्षिप्य समर्थ्यते । तत्राऽनेकार्थत्वाद्ब्रह्मशब्दस्य भवति संशयः । कस्य ब्रह्मणो जिज्ञासेति । अस्ति च ब्रह्मशब्दो विप्रत्वजातौ यथा—'जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेदि'त्यादौ । अस्ति च वेदे । यथा—'शब्दब्रह्मणि निष्णातो न निष्णायात्परे

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

पुरोवर्तिनि सन्देह एव नास्ति स्थाणुत्वपुरुषत्वांश एव सन्देह इति तत्रैव जिज्ञासा । तथा पठनकाल एव सत्यं ज्ञानमनन्तं ब्रह्मेत्यस्य वाक्यार्थे ज्ञाते केवल ब्रह्मांशे तु सन्देह एव नास्ति । परन्तु एतादृशं ब्रह्म जगत्कारणं वा न वा, धुन्नादीनां विधारकं वा नवेति, सन्देहो जायते । कुतः साङ्ख्यैः साङ्ख्यादिस्मृत्युक्तप्रधान एवैतादृशगुणवत्त्वस्वीकारात् । एवं च यदंशे संशयस्तदंश एव जिज्ञासेति भगवद्गुणानां जिज्ञास्यत्वे सिद्धे एतादृशगुणवत्त्वेन ब्रह्मण एव जिज्ञासासिद्धेर्नोजिज्ञास्यत्वं न वा गौणत्वमित्याशयेन समाधानमाहुः—'ब्रह्ममात्रे'ति । ब्रह्मांशे निश्चये सति, ब्रह्म एतादृशं वा नवा, ब्रह्म एतादृशमेव कुतो नेत्याकारकः संशयो वा विचारो वा प्रवर्तत इत्येतदर्थं मात्रपदम् । 'सन्दिग्धस्यैवे'ति । सन्देहविषयीभूतस्य जगत्कर्तृत्वादिधर्मस्येत्यर्थः । जिज्ञास्यता विचार्यता । राज्ञः-सहागतोऽस्मास्य इत्यत्र शब्दतो राज्ञः गौणत्वेऽपि तद्गौणत्वस्य-मुख्यत्वविघातकं न-भवतीत्याशयेनाऽऽहुः—'गौणत्वं त्वि'ति । इष्टापत्त्यर्थे तुशब्दः । निराधारगुणवर्णनासम्भवाद्भगवत्सम्बन्धिगुणवर्णने भगवद्वर्णनमेवेत्याशयेनाऽऽहुः—'न त्वर्थत' इति । ननु वेदप्रामाण्यांशे संशये सति वेदार्थविचारस्याऽजागलस्तनायमानत्वात्तत्रैव कर्तव्य इत्यत आहुः—'वेदप्रामाण्यमि'ति । न्यायादितःप्रसिद्धत्वान्न विचार्यत इत्यर्थः । आस्तिकानां वेदप्रामाण्यांशे सन्देह एव नास्तीति तदर्थं न विचार इति

कश्चिद्विरचिता वेदान्तचन्द्रिका ।

तथा दर्शनात् । ननु वेदान्तवाक्यैरेवाग्रे विचारस्य करिष्यमाणत्वात्पूर्वं वेदप्रामाण्यं कुतो न विचारितमित्यत आहुः—'वेदप्रामाण्यमि'ति । प्रतितन्त्राणि विरुद्धशास्त्राणि काणादाक्षपादीयमायावादिप्रभृतीनि । तेष्वपि सिद्धत्वान्न विचार्यते । सिद्धमाहुः—'तस्मादि'ति । उक्तरीत्या लौकिकानां सन्दिग्ध-

श्रीलालभट्टकृता गूढार्थदीपिका ।

विशेषणत्वाच्छब्दतो राज्ञो गौणत्वेऽप्यर्थे विचार्यमाणे सेवकस्यैव गौणत्वं न तु राज्ञस्तथेहापि ब्रह्मण इति षष्ठ्यन्तपदवाच्यस्य ब्रह्मण शब्दतो गौणत्वेऽप्यर्थे विचार्यमाणे सर्वैः प्रकारैर्ब्रह्मण एवाऽस्मिन् शास्त्रे मुख्यतेति भावः । ननु वेदार्थब्रह्मणो वेदानुकूल एव विचार इति पूर्वमुक्तत्वात्पूर्वं वेदनिरूपणमावश्यकं तस्य च वेदस्य प्रामाण्यं प्रथमतो विचारणीयमतो वेदान्तसूत्रकृता भगवता बादरायणेन

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

दाप्नोति पर'मित्यत्र ब्रह्मणो ज्ञानविशेषणतया शब्दमर्यादया गौणत्वेप्यर्थतो यथा प्राधान्यं, तथा ब्रह्मणो जिज्ञासेत्यत्र षष्ठ्यर्थसम्बन्धविशेषणतया शब्दतो ब्रह्मणो गौणत्वेप्यर्थतः प्राधान्यमस्त्येवेत्यर्थः ।

ननु वेदान्तवाक्यविचारेणैव सर्वनिर्णयः कार्यः स च वेदप्रामाण्यनिर्णयाधीन इति स आदौ

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या ।

यदि'। ब्रह्मोनमित्यादौ । अस्ति च परमात्मनि—यथा 'ब्रह्म वेद ब्रह्मैव भवती'ति । तस्माद्ब्रह्म किंलक्षणम् । लक्षणं हि सजातीयविजातीयवस्तुव्यावृत्तिप्रयोजनधर्मः । तच्च द्विविधम् । स्वरूपकार्यभेदेन । तत्र कार्यलक्षणं तावज्जगन्न सम्भवति । यद्यावदनुभूयते तत्सर्वं परिमितमविशुद्धमबुद्धं विध्वंसि न तेनोपलब्धेन तद्विरुद्धस्वभावस्य ब्रह्मणः स्वरूपं लक्षयितुं शक्यम् । न जातु कोऽपि कृतकत्वेन हेतुना नित्यत्वं साधयितुं शक्नोति ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

भावः । 'तस्मादि'ति । गुणविचारे ब्रह्मणोऽर्थतो मुख्यत्वादित्यर्थः । विद्यमानगुणवत्त्वैव ब्रह्मजिज्ञास्यमिति शेषपष्ठ्येव युक्तेत्यत्र गमकमाहुः—'किञ्चे'त्यादि 'इती'त्यन्तम् । ब्रह्मविचारविषयणीं प्रतिज्ञां कृत्वाऽग्रे कार्यलक्षणं वदति, तेन कृत्वा किं ज्ञायते ब्रह्मसम्बन्धि गुणपरत्वेन 'ब्रह्मण एव वेदार्थत्वमि'ति सम्बन्धषष्ठ्या चोच्यत इति भावः । एवं चैतादृशगुणविशिष्टं ब्रह्मप्रतिपादनं विषयः । सम्बन्धश्च प्रतिपाद्यप्रतिपादकभावः । अधिकारी प्रयोजनं च द्वयं पूर्वमुक्तम् । एतावताऽग्रन्थेनाधिकारिविषयसम्बन्धप्रयोजनरूपमनुबन्धचतुष्टयं प्रेक्षावतां प्रवृत्त्यर्थं निरूपितमिति प्रथमाधिकरणम् ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

त्वाद्ब्रह्मप्रतिपत्त्यर्थं हि ब्रह्मसम्बन्धिनां विचार, इत्यर्थतः प्रधानत्वाच्च, वेदार्थभूतं ब्रह्म वेदानुकूलविचारविषयीकर्तव्यमिति सिद्धम् ।

इति वेदान्तचन्द्रिकायां जिज्ञासाऽधिकरणम् ।

श्रीलालभट्टकृता गूढार्थदीपिका ।

वेदप्रामाण्यं कुतो न विमृष्टमित्याशङ्क्याऽऽहुः—'वेदप्रामाण्यमि'त्यादि । आस्तिकप्रतीतप्रसिद्धत्वान्न सूत्रकृता विचार्यत इत्यर्थः ।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

कुतो न कृत इत्यत आहुः । 'वेदे'त्यादि । प्रतितश्चेत्यादि । गौतमकणादादिसकलशास्त्रसिद्धत्वेनाप्रामाण्यकोट्यनुपस्थितेरिति भावः ॥ १ ॥

इति जिज्ञासाधिकरणम् ॥

---

द्वितीयं जन्माद्यधिकरणम् ।

किञ्च, तत्र किंलक्षणं किंप्रमाणकमिति जिज्ञासायामाह सूत्रकारः—

जन्माद्यस्य यतः शास्त्रयोनित्वात् ॥ २ ॥

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

ननु तद्धर्मेण नित्यत्वादिनैव तल्लक्ष्यतामिति चेत् । न । तस्योपलब्धिविषयत्वाऽभावात् । उपलब्धे हि लक्षणं भवति । नानुपलब्धं, नाऽप्रसिद्धमित्यनुसन्धायोक्तं किं लक्षणमिति । नन्वनुभूयमानस्य सर्वस्य ब्रह्मस्वभावविरुद्धत्वेन लक्षणत्वं मास्तु । शब्दप्रमाणप्रतिपादितेन नित्यत्वादिना स्वरूपलक्षणेनैव तल्लक्ष्यतामिति चेत् । न । अत्यन्ताऽप्रसिद्धत्वेन ब्रह्मणोऽपदार्थस्य वाक्यार्थत्वाऽभावात् । तस्माल्लक्षणप्रमाणयोरभावान्न ब्रह्मजिज्ञासितव्यमित्याक्षेपाभिप्रायः । तमिममाक्षेपं सूत्रकारः परिहरति—'**जन्माद्यस्य यतः शास्त्रयोनित्वात्**' । ननूदितसन्देहे शास्त्रप्रवृत्तिरत्र तु सन्देह

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

पूर्वसूत्रेण ब्रह्मविचारे प्रतिज्ञाते, कथं कर्तव्य इत्याकाङ्क्षा जायते । तदर्थं, समन्वयाविरोधाभ्यां कर्तव्य इति बोधयितुं सर्वेषां वाक्यानां ब्रह्मणि समन्वयः प्रथमाध्याये प्रतिपाद्यते । अविरोधश्च द्वितीयाध्याये । तत्रादौ **यतो वा इमानि** भूतानीत्यादिवाक्यानां ब्रह्मणि समन्वयं वक्तुं लक्षणप्रमाणबोधकं जन्माद्यधिकरणमवतारयन्ति—'तत्रे'ति । **जन्माद्यस्य यतः शास्त्रयोनि-**

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

**जन्माद्यस्य यतः शास्त्रयोनित्वात्** । २ । गुणवत्त्वेनैव ब्रह्मणो जिज्ञास्यत्वे गमकमाहुः—'**किञ्चे**'ति । 'तत्रे'ति । ब्रह्मणोऽधिजिज्ञास्यत्वे, अथवा शेषषष्ठीपरिग्रहे ज्ञापकान्तरं प्रदर्शयन्नेव सूत्रमवतारयन्ति—'किञ्चे'ति । तत्र ब्रह्मसम्बन्धिनो विचारे प्रस्तुते । लक्ष्यते ज्ञायते येन तल्लक्षणमसाधारणो धर्मः । प्रमाणं तादृशलक्षणकाऽवगतिसाधनम् । अत्र पदद्वयेऽपि बहुव्रीहिः । '**इती**'ति । प्रधानत्वात्पूर्वं ब्रह्मण एव पूर्वोक्ताकारकज्ञानेच्छायां ब्रह्मसूत्रनिर्माणकर्ता भगवान् वेदव्यास इदं सूत्रं प्रणीतवान्—'**जन्माद्यस्य यतः शास्त्रयोनित्वादिती**'ति । तथाचाऽनेन सूत्रेणैव ब्रह्मसम्बन्धिलक्षणप्रमाणयोः प्रदर्शनाच्छेषषष्ठ्येव सूत्रकाराशयगोचर इति ज्ञेयम् ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

**जन्माद्यस्य यतः शास्त्रयोनित्वात्** ।२। सूत्रार्थस्तु, अस्य प्रपञ्चस्य यतो जन्मादि तद्ब्रह्म ।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

**जन्माद्यस्य यतः शास्त्रयोनित्वात्** ॥ २ ॥ उक्तरीत्या वेदान्तार्थब्रह्मणो जिज्ञास्यत्वे प्रतिज्ञाते केन प्रकारेण जिज्ञास्यतेत्याकाङ्क्षायां समन्वयाविरोधाभ्यां जिज्ञासा कर्तव्येति तत्रादौ समन्वयनिरूपणं सूत्रकाराभिप्रेतमिति सूत्रमवतारयन्ति—'**किञ्च तत्रे**'त्यादिना । तत्र जिज्ञासाविषयीभूते ब्रह्मणि । आह सूत्रेण लक्षणप्रमाणे आहेत्यर्थः । योगविभागेन **शास्त्रयोनित्वा**दिति सूत्रं पृथगिति केचित् वदन्ति । तन्न सम्यक्, अग्रिमसूत्रेषु सर्वत्र हेतुसाध्यनिर्देशपूर्वकमधिकरणरचनादर्शनादत्रापि तथैवोचितत्वादिति ।

१ अप्रसिद्धत्व इति खपुस्तकम् ।

ननु कथमत्र सन्देहः, यावता 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्याह श्रुतिरेव । विरुद्धं चैतत् । स्वरूपलक्षणाऽकथने कार्यलक्षणस्य वक्तुमशक्यत्वात् । विवादाध्यासितत्वाच्च ।

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या ।

एव नोदेतीति कथं जन्माद्यस्य यत इत्यादेः प्रवृत्तिरित्याशङ्कन्ते—'नन्वि'ति । सन्देहः कथं, किमाकारकोऽत्र । किंलक्षणं किंप्रमाणकमित्याकारकस्य तस्य वक्तुमशक्यत्वात् । कथमशक्यत्वमित्याकाङ्क्षायां तदेवोपपादयन्ति—'यावते'ति । ब्रह्मप्रपाठके 'ब्रह्मविदाप्नोति पर'मित्यत्र किं तदित्याकाङ्क्षायां 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति स्वरूपलक्षणमुक्त्वा 'तस्माद्वा एतस्मादि'त्यादिना कार्यलक्षणमुक्तम् । तथा च तद्विना पूर्वमेव तत्सूत्रे कार्यलक्षणोक्तिर्विरुद्धेत्याहुः—'विरुद्धं चैतदि'ति । एतत्कार्यलक्षणकथनं सूत्र उपपत्त्या श्रुत्या च 'सत्यं ज्ञानमि'त्यादिकया विरुद्धम् । तदुपपादयन्ति—'स्वरूपे'ति । स्वरूपलक्षणं हि कार्यलक्षणस्योपजीव्यम् । तथा चोपजीव्यस्य प्राधान्यात्तद्विना तस्य वक्तुमशक्यत्वात् । अथमं कार्यलक्षणोक्तिरुपपत्त्या श्रुत्या च सूत्रे विरुद्धैव ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

त्वात् । २ । लक्षणज्ञाने सति संशयो न जायत इति कृत्वा जगज्जन्मादिकर्तृत्वं ब्रह्मत्वमिति ब्रह्मलक्षणं वक्तव्यम् । तच्च न सम्भवति । स्वरूपलक्षणेनैव संशयानुदयादित्याशयेन शङ्कते—'नन्वि'ति । यावदित्यवधारणे । तथा चाध्ययनानन्तरं विचारात्पूर्वमेव लक्षणज्ञाने जाते संशयो नोदेतीति भावः । 'विरुद्धमि'ति । वेदे यस्मिन्प्रपाठके स्वरूपलक्षणं तदग्रिमप्रपाठके कार्यलक्षणमुक्तम् । अत्र तु विपरीतमिति श्रुतिविरुद्धमित्यर्थः । चोऽप्यर्थे । एतत् कार्यलक्षणप्रतिपादनमपीत्यर्थः । 'वक्तुमशक्यत्वादि'ति । लक्ष्याऽज्ञानाल्लक्ष्ये लक्षणसमन्वयं कर्तुमशक्यत्वादित्यर्थः । 'विवादे'ति । कार्यलक्षणस्य विवादग्रस्तत्वेन संशयनिराकरणं न भविष्यतीति भावः । ननु तस्यागमोक्तत्वान्निराकरण

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

ननु सन्दिग्धे हि विषये तज्ज्ञानार्थं लक्षणं, अत्र तु सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्या निश्चितस्वरूपमिति कथं लक्षणप्रवृत्तिरित्याशङ्कामुत्थापयन्ति—नन्वि्वति । अत्र ब्रह्मणि । यावतेत्यवधारणे । निश्चयेनेति यावत् । 'विरुद्धमि'ति । स्वरूपलक्षणमन्तरा कार्यलक्षणमुक्तश्रुतिविरुद्धम् । जिज्ञासाविरुद्धं वा । 'एतदि'ति । कार्यलक्षणम् । तत्र हेतुः—'स्वरूपे'ति । स्वरूपज्ञाने हि माहात्म्यजिज्ञासा भवति । हेत्वन्तरमाहुः—'विवादे'ति । विवादाश्रितत्वादित्यर्थः । तदेव दर्शयन्ति—

श्रीलालूभट्टकृता गूढार्थदीपिका ।

तत्र हेतुः—शास्त्रोक्तकारणत्वादिति । 'तत्र सन्देह' इति । तत्र नित्यशुद्धमुक्तस्वभावत्वजगज्जन्मा-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

लक्षणार्थं वादी शङ्कते—'नन्वि'त्यादि 'कथमत्रे'त्यादि । निर्धर्मके ब्रह्मणि साधारणधर्मवद्धर्मिज्ञानरूपसंशयसामग्र्यसत्त्वात्कथं सन्देह इत्यर्थः । यावता निश्चयेन । 'विरुद्ध'मित्यादि । श्रुतौ 'सत्यं ज्ञान'मित्यादिना स्वरूपलक्षणमुक्त्वा पश्चात्कारणलक्षणमुक्तं 'तस्माद्वा एतस्मादात्मन आकाशः

१ इत्यादिप्रवृत्तिरिति स्वपुस्तकम् । २ कार्यलक्षणे कृते स्पष्टत्वाज्जिज्ञासाया पूर्णत्वादग्रिमशास्त्रवैयर्थ्यापत्ति । स्वरूपलक्षणे तु माहात्म्यजिज्ञासायामग्रिमग्रन्थसार्थक्यमिति विरुद्ध कार्यलक्षणसूचक जन्माद्यस्येति वक्तव्यमत्र ।

नहि ब्रह्मणो जगत्कर्तृत्वं सर्वसम्मतम् । नचाऽऽगमोदितमिति वेदमात्रस्य ब्रह्मप्रमाणकत्वं वक्तुं शक्यते । किञ्च व्यर्थश्चैवं विचारः । लक्षणप्रमाणाभ्यां हि वस्तुज्ञानं भवति । तच्च स्वरूपलक्षणेनैव भवतीति किमनेन । तस्मादयुक्तमुत्पश्याम इति—

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

दूषणान्तरमाहुः—'**विवादे**'ति । जगत्कर्तृत्वस्येति शेषः । तदेवोपपादयन्ति—**नहीति** । जगत्कर्तृत्वस्य ब्रह्मधर्मत्वे निश्चिते तल्लक्षणत्वं वक्तुं शक्यम् । नच तदस्ति । वेदान्तव्यतिरिक्तानां सांख्यादीनामसम्मतत्वात् । नन्विदमा निर्दिष्टस्य प्रपञ्चस्य प्रत्यक्षसिद्धत्वेऽपि तत्कर्तुरप्रत्यक्षत्वादागमोदित एव स इति वेदमात्रमेव तत्र प्रमाणम् । तथाच कथं तन्निष्ठस्य कर्तृत्वस्य विवादाध्यासितत्वमित्याशङ्क्याह—**न चागमोदितमिति** । न हि वेदमात्रमेव जगत्कर्तृसत्त्वे प्रमाणम् । इदं कार्यं सकर्तृकं कार्यत्वाद्घटवदित्याद्यनुमानादिप्रमाणान्तराणामेव मुख्यत्वेन तत्राङ्गीकृतत्वात् । आगमस्य तु तदनुरोधेन गौण्यापि नेतुं शक्यत्वात् । कार्यलक्षणोक्तौ दूषणान्तरमप्याहुः—किं चेति । एवं कार्यलक्षणोक्तिपूर्वकं ब्रह्मणो विचारो व्यर्थः । तत्कथं वैयर्थ्यमित्यत आह—'**लक्षणे**'ति । अत्राऽमृतत्वप्राप्तिसाधनीभूत-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

भविष्यतीत्यत आह—'**नचेति** । '**आगमोदितमि**'ति । कर्तृत्वमिति शेषः । '**मात्रस्ये**'ति । वेदस्यैवेत्यर्थः । अनुमानस्याऽपि ब्रह्मणि प्रमाणत्वादिति भावः । ननु वेदनिरूपितं प्रामाण्यमेव गृह्यत इत्यत आहुः—'**किञ्चे**'ति । '**अयुक्तमि**'ति । सूत्रोक्तं कार्यलक्षणमिति शेषः । कार्यलक्षणेन

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

'**नही**'त्यादि । कपिलादिभिः प्रकृत्यादेः कर्तृत्वेनाऽङ्गीकारात् । नहि सन्दिग्धं साध्यं वा लक्षणं भवितुमर्हति । ननु प्रमाणमूर्धन्येन वेदेन परमात्मा कर्तृत्वेनोक्त इति तदेवाद्रियतामत आहुः—'**नचे**'ति । आगमेन परमात्मा कर्तेत्युक्त इति हेतोः सर्वस्यापि वेदस्य, ब्रह्मण एव कर्तृत्वे प्रमाणकत्वमिति शक्यवचनं नेत्यर्थः । प्रजापतिप्रभृतीनामपि तत्रैव कर्तृत्वोक्तेः । अत्र—ब्रह्मप्रमाणत्वं ब्रह्मप्रमाणताकत्वमिति वा ग्रन्थः प्रतिभासते । सर्वस्य जगतः कर्त्ता मत्कृतेश्च तथात्वतः । सर्वात्मन्करणाशक्त्या ताद्रूप्यात् प्रकटीभव ॥ सर्वात्मत्वाच्च भवतात्ताद्रूप्यात्क्रीडसि स्वयमित्यस्योत्तरार्द्धोऽपि(?) । स्वार्थे कप्रत्यय इति वा(?) । कार्यलक्षणवैय्यर्थ्यमाहुः—'**किञ्चे**'ति । '**एवमि**'ति । जगत्कर्तृत्वेन प्रकारेण ब्रह्मणो विचारः । तदुपपादयन्ति—'**लक्षणे**'त्यादिना । असाधारणधर्मवचनं हि लक्षणम् । असाधारण्यं हि तदितराऽवृत्तित्वे सति तन्मात्रवृत्तित्वम् । अनधिगतार्थगन्तृ प्रमाणम् । '**तच्चे**'ति । वस्तुज्ञानम् । '**स्वरूपे**'ति । '**सत्यं ज्ञानमनन्तं ब्रह्मे**'त्याकारकेण । अत्रैव(?) कारणश्रुतित्वात्प्रमाणा-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

सम्भूत' इत्यादि । अत्र तु स्वरूपलक्षणमनुक्त्वाऽऽदौ कारणलक्षणमुक्तमिति श्रुतिविरोध इत्यर्थः । अशक्यत्वात् लक्ष्यज्ञानं विना लक्षणस्य कर्तुमशक्यत्वादित्यर्थः । **विवादे**त्यादि मायाशबलितेश्वररूपकार्यब्रह्मण एव कारणत्वं निर्गुणस्य वा परब्रह्मण इति जगज्जन्मादिकारणत्वस्य जिज्ञास्ये ब्रह्मणि विवा-

---

१ अयं श्लोकपंक्त्यात्मको ग्रन्थोऽलग्न इव भाति । प्रतिलिपेरभावात् ।

उच्यते,

सन्देहवारकं शास्त्रं वेदप्रामाण्यवादिनाम् ।
क्रियाशक्तिज्ञानशक्ती सन्दिह्येते परस्थिते ॥

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

ज्ञानविषयीभूतब्रह्मनिर्धारार्थं लक्षणप्रमाणे वक्तव्ये तत्र स्वरूपलक्षणेनैव तत्सम्भवे किमनेन कार्यलक्षणेन । पूर्वपक्षमुपसहरति—'तस्मादि'ति । कार्यलक्षणकथनं जन्मादिसूत्रेऽयुक्तमुत्तरयाम इति । नन्वत्र सन्देहस्याशक्यवचनत्वे कथं शास्त्रप्रवृत्तिरित्याशङ्क्य तत्प्रवृत्त्यर्थं विषयप्रकारमाह—'उच्यत' इति । नहि वयं विषयमात्रमशक्यवचनमिति ब्रूमः, किन्तु त्वदुक्तप्रकारकम् । अन्यथा विषयवारकत्वाऽभावेन तत्प्रवृत्तिरेव न स्यात् । सोऽपि वेदप्रामाण्याऽभ्युपगन्तॄणामेव । अन्यथा तदुक्तेऽलौकिकेऽर्थे बाधबुद्धिरेव भवेत्कुतस्तरां सन्देहः । तर्हि कथमत्र सन्देह इत्याकाङ्क्षायां तत्स्वरूपमाहुः—'क्रिये'ति । परस्मिन्ब्रह्मणि स्थिते परस्थिते । नन्वस्मदुक्तप्रकारक एव विषयः कस्मान्न भवतीत्या-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

यः संशयो निवर्तते तं सशयं वक्तुं समाधानमाहुः—'उच्यत'इति । 'सन्देहवारकमि'ति । ननु वेदव्याख्यानकारकमित्यर्थः । शास्त्रं मीमांसारूपम् । परस्थिते परे ब्रह्मणि स्थितिर्ययोस्ते, परस्थिते । एतादृशे ये क्रियाशक्तिज्ञानशक्ती । उपनिषत्प्रतिपाद्ये ये सर्वज्ञत्वजगत्कर्तृत्वे ते उभे अपि सन्दिह्येते । स्वरूपलक्षणे सन्देहविषयी भवतः । स्वरूपलक्षणस्य निर्विशेषब्रह्मप्रति-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

न्तरस्य कार्यलक्षणस्य च व्युदासः । अनेन कार्यलक्षणेन । 'तस्मादि'ति । अनपेक्षत्वेन वैयर्थ्यात् । कार्यलक्षणमनुपपन्नमित्यर्थः ।

एवं पूर्वपक्षे, समाधातुं तं गृह्णन्ति—'उच्यत' इत्यादि । तत्र पूर्वं वैयर्थ्यं परिहरन्ति—'सन्देहे'ति । सर्वस्याऽपि वेदस्य ये प्रामाण्यं वदन्ति तेषां जन्माद्यस्येतीत्यादिलक्षणशास्त्रं सन्देहनिवारकमिति नैव विचारवैयर्थ्यमित्यर्थः । ननु सन्देह एव कथमित्याशङ्कायां सन्देहप्रकारमाहुः—'क्रियाशक्ती'ति । विरुद्धत्वदोषं निराकुर्वन्ति—'नही'ति । तथा सति श्रौतक्रमानुसारेणैव लक्षणं वदेदिति भाव. । सन्देहप्रकारं व्यक्तीकुर्वन्ति—'तत्रे'त्यादिना 'अकर्त्रि'त्यन्तेन । अत्र नित्येत्यादि-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

दाध्यासितत्वादित्यर्थः । 'नही'त्यादि । मायावादिभि. कार्यब्रह्मण. कर्तृत्वाङ्गीकारात्साङ्ख्यैश्च प्रकृतेरेव कारणत्वाङ्गीकारादित्यर्थ. । 'नचागम' इत्यादि । ब्रह्मणि जगत्कारणत्वस्य सकलप्रमाणमूर्धन्यो यो वेदः 'यतो वा इमानि भूतानि' 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत.' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादिरूपस्तेनैव सिद्धत्वान्न विवादाध्यासितत्वमिति । आरोपेणापि कारणत्वस्य श्रुतेर्गतार्थतासम्भवात् । अनुमानेनापि कारणसिद्धेर्न वेदमात्रप्रमाणकत्वं वक्तुं शक्यत इत्यर्थ. । एवं विचारः पूर्वोक्तरीत्या कारणलक्षणप्रयास. । वैयर्थ्यमेवोपपादयन्ति । शक्यमित्यर्थ. । 'लक्षणे'त्यादिना । तच्च ब्रह्मात्मकवस्तुज्ञानं चेत्यर्थ. । स्वरूपलक्षणेन 'शुद्धबुद्धमुक्तस्वभाव'मित्यादिस्वरूपलक्षणेनेत्यर्थ । किमनेन कारणलक्षणेन । किञ्चित्प्रयोजनमित्यर्थ. । पूर्वपक्षमुपसहरन्ति—'तस्मादि'त्यादि । अयुक्तं जगज्जन्मादिलक्षणकरणमयुक्तमित्यर्थः ।

न हि श्रुतिं व्याख्यातुं प्रवृत्तः सूत्रकारः । किन्तु सन्देहं वारयितुम् । तत्र 'सत्यं ज्ञानमनन्तं' 'नित्यशुद्धमुक्तस्वभाव'मितिश्रुत्या कर्तृत्वादिप्रापञ्चिकधर्मराहित्यं प्रतीयते । 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती'ति कर्तृत्वञ्च । तत्र सन्देहः—किं ब्रह्म कर्तृ आहोस्विदकर्तृ । किं तावत् प्राप्तम् ? । अकर्तृ । कथम् ?—

'ब्रह्मविदाप्नोति पर'मिति प्रधानवाक्यम् । फलसम्बन्धात् ।' ऋचापि विवृतम् ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

शङ्कश्लोके विनिगमकमाहुः—'न ही'ति । ब्रह्मपाठके 'ब्रह्मविदाप्नोति पर'मित्यत्र किं तदित्याकाङ्क्षायां 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति स्वरूपलक्षणमुक्त्वा 'तस्मादि'त्यादिना भूतभौतिकसृष्टिनिरूपणमुखेन कार्यलक्षणमुक्तम् । यदि सूत्रकारः श्रुतिं व्याख्यातुमेव प्रवृत्तः स्यात्तदा त्वदुक्तप्रकारकमेव संशयं जन्मादिसूत्रेण निराकुर्यान्न त्वेवम् ।

ननु कथमेवमवगम्यत इति चेत्पूर्वं स्वरूपलक्षणाऽनुक्तेरिति बुद्ध्यस्व । ननु 'यः सर्वज्ञः सर्वशक्ति'रित्यादिना ज्ञानक्रियाशक्ती निस्सन्दिग्धमेव प्रतिपाद्येते इति कथं तयोः संशय इत्यत आह—'तत्रे'त्यादिना । सत्यमिति नित्यत्वं प्रतिपादयति । ज्ञानमिति शुद्धत्वम् । अनन्तमिति मुक्त-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

पादकत्वादिति भाव इति कारिकार्थः । 'सूत्रकार' इति । सूत्रकारो व्याख्याने प्रवृत्तश्चेत् क्रमेण व्याख्यानं कर्तव्यमिति, पूर्वोक्तं श्रुतिविरुद्धत्वं, लक्षणयोः पूर्वापरकथनरूपं दूषणं च स्यात्तदेव नास्तीति भावः । स्वरूपलक्षणप्रतिपाद्यमाहुः—'तत्रे'ति । कार्यलक्षणप्रतिपाद्यमाहुः—'यतो वे'ति । एतदधिकरणाङ्गभूतसंशयाकारमाहुः—'तत्रे'ति । पूर्वपक्षमाहुः—'किं तावदि'ति । कार्यलक्षणं न सम्भवतीति पूर्वपक्ष्याशयं वक्तुं तत्पूर्वपक्षं विवृण्वन्ति—'ब्रह्मविदे'ति । यथा स्वर्गकामो यजेतेति वाक्यस्य स्वर्गरूपफलसम्बन्धात्प्रधानवाक्यत्वमित्यर्थः ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

पदानि सत्येत्यादिपदानां विवरणं ज्ञेयम् । इति शब्दो हेत्वर्थकः । तथा चैतादृशं ब्रह्मेति । श्रुत्या सत्यं ज्ञानमितिश्रुत्या, तथा प्रतीयत इत्यन्वयः । 'तत्रे'ति । श्रुतिसिद्धत्वान्निःसन्दिग्धयोरपि क्रि-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

दिकारणत्वयोः सन्देह इत्यर्थः । तदेव संशयस्वरूपमाहुः—'किं ब्रह्म कर्तृ आहोस्विदकर्त्रि'ति । उभयोरपि श्रौतत्वेनाऽन्यतरबाधस्याऽशक्यत्वात्संशय इत्यर्थः । 'फलार्थं चे'ति । ब्रह्मविदाप्नोति परमितिश्रुतौ ब्रह्मविदः परप्राप्त्युक्तेर्ब्रह्मज्ञानं फलार्थमित्यर्थः । 'फलवाक्योक्तब्रह्मज्ञानादेवे'-

मथुरादीयश्रीमदिच्छारामप्रणीत-प्रदीप ।

ननु निरूप्ये ब्रह्मणि सन्देहाभावात्कथं व्यासशास्त्रप्रवृत्तिरिति शास्त्रप्रवृत्तिमुपपादयितुमाहुः—'उच्यते' इत्यादि । नहि ब्रह्मस्वरूपनिर्णयार्थं शास्त्रं प्रवृत्तं स्वरूपस्य सर्वशास्त्रनिर्णीतत्वात्, किन्तु ब्रह्मणि वेदविरुद्धवाद्यभ्युपगतप्रकारनिराकरणेन वेदसिद्धप्रकारस्थापनार्थमित्याहुः—'सन्देहे'त्यादि । ननु कथं ब्रह्मणि सन्देहो येन शास्त्रप्रवृत्तिः स्यादित्याकाङ्क्षायां सन्देहप्रकारमाहुः—'क्रियाशक्ती'त्यादि । सन्देहबीजमाहुः—'तत्रे'त्यादि ।

'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति । फलार्थं च ब्रह्मज्ञानम् । फलञ्च फलवाक्योक्तधर्मज्ञानादेव ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

स्वभावत्वम् । न ह्यपरिच्छिन्नं केनचित्संस्पृष्टम् । नहि नित्यशुद्धमुक्तस्वभावे ब्रह्मणि ज्ञापयिका धर्माः सम्भवन्ति । तस्मादकर्तृ । 'यतो वे'त्यादिना तूत्पत्त्यादिकर्तृत्वं च प्रतीयते । नह्येकस्य बाधः कर्तुं शक्यः । उभयोरपि श्रौतत्वात् । तथा चैकतरनिश्चयाऽसम्भवाद्भवति संशयः कर्त्रकर्तृ वेति । तत्रादौ पूर्वपक्षमाहुः–'अकर्त्रि'ति । चोदयति–'कथ'मिति । तदेवोपपादयन्ति—'ब्रह्मे'त्यारभ्य 'पूर्वः पक्ष' इत्यन्तेन । अत्र ब्रह्मविदाप्नोतीत्यनेन ब्रह्मप्राप्तिलक्षणस्य फलस्योक्तत्वात्तत्प्रतिपादकत्वादिदं वाक्यं प्रधानं स्वप्रकरणस्थवाक्यान्तरापेक्षया । तथा च प्रधानाऽनुरोधेनैवाप्रधानानि नेतु योग्यानीति सिद्धम् । ततस्तत्साधनापेक्षायां ब्रह्मविदित्यनेन ब्रह्मज्ञानमेव तत्साधनत्वेनोक्तम् । किमा·

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

ननु पूर्वकाण्डेऽयं नियमोऽस्तु न तूत्तरकाण्ड इति नाऽस्य प्रधानत्वमित्यत आहुः–'ऋचापी'ति । यद्यस्य प्रधानवाक्यत्वं न स्यात्तर्हि ऋचा विवरणं न स्यादित्यपिनाऽयमर्थो ध्वन्यते । विवरणमाहुः—

केनचिद्विरचिता वेदान्तचन्द्रिका ।

याज्ञानशक्त्योः स्वरूपलक्षणविरुद्धत्वात्सन्देह इति भावः । एतदधिकरणघटकाङ्गमप्ययमेव संशयो ज्ञेयः । पूर्वपक्षमाहुः—'अकर्त्रि'ति । 'कथमि'ति । प्रकारजिज्ञासायां ■ प्रकारमाहुः—'ब्रह्मविदि'त्यारभ्य फलाऽश्रवणादित्यन्तम् । 'फलसम्बन्धादि'ति । यत्र हि प्रधानीभूतेन फलेन सह साधनस्य सम्बन्धो विधीयते, भवति तत्प्रधानवाक्यम् । यथाऽग्निहोत्रं जुहुयात्स्वर्गकाम इति । तथाऽत्रापि साधनस्य ब्रह्मवेदनस्य परप्राप्तिलक्षणेन फलेन सम्बन्धबोधनात्स्वप्रकरणस्थवाक्यान्तरापेक्षया भवतीदं प्रधानवाक्यम् । फलस्य च प्राधान्यं पूर्वतन्त्रे शेषलक्षणे, कर्मफलार्थत्वादित्य-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

त्यादि । सत्यं ज्ञानमनन्तं ब्रह्मेतिश्रुत्या सत्यपदेन नित्यत्वं ज्ञानपदेन शुद्धत्वमनन्तपदेन मुक्तत्वमुक्तमिति फलवाक्योक्तनित्यशुद्धमुक्तस्वरूपब्रह्मज्ञानादेव फलमित्यर्थः । 'नान्यथे'ति । अन्यथा कर्तृत्वादिविशिष्टज्ञानान्मुख्यं फलं न भवतीति पूर्वपक्षिण आशयः ।

नतु तस्माद्वा एतस्मादात्मन इत्यत्र तच्छब्देन प्रकृतस्य ब्रह्मण एव परामर्शात्तस्यैव कर्तृत्वादिकमुक्तमिति कर्तृत्वादिविशिष्टज्ञानान्मुख्यं फलं कुतो न भवतीत्याशङ्क्य समाधत्ते–'कर्तृत्वं च परविवरणतयोक्तमि'ति । फलवाक्ये ज्ञेयं परं चेति द्वयमुक्तम् । तथा चोभयोरपि प्रकृतत्वम् । तत्र ज्ञेये शुद्धे ब्रह्मणि कर्तृत्वस्य बाधितत्वात्परमेव तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यत्र तच्छब्देन परामृश्य परस्यैव-कर्तृत्वमुक्तमिति, कर्तृत्वविशिष्टज्ञानं न तु मुख्यब्रह्मज्ञानमतो न

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

फलसम्बन्धात् फलसम्बन्धबोधकवाक्यस्य पूर्वतन्त्रे प्राधान्याङ्गीकारादित्यर्थः । ऋचा वक्ष्यमाणविवरणर्चा । फलं साक्षात्कृतब्रह्मात्मकं फलम् । 'वाक्यो'क्तेत्यादि । सत्यत्वज्ञानत्वानन्तत्व-

१ फलार्थे चेत्यपि पाठ ।

नान्यथा। कर्तृत्वञ्च परविवरणतयोक्तम्। परं किमित्युक्ते 'यः सर्वान्तर आनन्द' इति। कथं

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

कारकं तदित्याकाङ्क्षायां तदाकारस्य विषयस्य च प्रमाणान्तरावेद्यत्वस्य विदितपरब्रह्मकैरेव ज्ञातत्वात्तज्ज्ञापनार्थं तैः श्रुतिरेवोक्ता 'सत्यं ज्ञानमि'ति। तथा च नित्यशुद्धमुक्तस्वभावत्वज्ञापनात्। तदाप्तिरूपं यत्फलं, तत्फलवाक्योक्तं यद्ब्रह्म, तस्य ये धर्मा नित्यत्वादयस्तेषां ज्ञानादेव नान्यथा। अन्यथाज्ञानस्य तु 'योऽन्यथा सन्तमि'त्यादिना फलविरोधित्वात्।

नन्वेवं सति तत्प्रकरणे भूतभौतिकादिकर्तृत्वं तस्यैव कथमुक्तम्। तद्वैशिष्ट्यज्ञानस्य फलविरोधित्वात्। नित्यशुद्धत्वादिविशिष्टे तस्मिंस्तदसम्भवात्। तच्छब्देन हि पूर्वप्रकृतस्य तस्यैव परामर्शा-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

'सत्यमि'ति। 'विपश्चिते'त्यन्तम्। 'धर्मज्ञानादि'ति। परत्वज्ञानादित्यर्थः। परत्वज्ञानं च जगज्जन्मादिकर्तृत्वेनेति बोधयितुमाह–'कर्तृत्वमि'ति। 'तस्माद्वा एतस्मादि'त्यादिवाक्येनोक्तमित्यर्थः। 'आनन्द इती'ति। अन्योन्तर आत्मानन्दमयः, तेनैष पूर्ण इत्यादिवाक्येन बोधित इत्यर्थः। अनेन परस्वरूपमुक्तमिति भावः। ननु ब्रह्मविदाप्नोतीत्यस्मिन्प्रपाठकेऽयं क्रमः उक्तः। परन्तु

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

नेन सूत्रेण प्रतिपादितमेव। तथा च प्रधानवाक्याऽनुरोधेनैवाऽन्यानि प्राकरणकानि गुणभूतानि वाक्यानि नेतुं योग्यानीति नाऽप्रधानवाक्योक्तं कर्तृत्वं ब्रह्मणि शक्यनिरूपणमिति भावः। तत्र ब्रह्म तज्ज्ञानतत्फलानां स्वरूपं श्रुत्येकसमधिगम्यमित्येतेन सत्य ज्ञानमित्याद्युद्दिरूपितस्वरूपादतिरिक्तस्वरूपं ब्रह्मेति, फलप्रेप्सुभिरन्यथाज्ञाने च फलाऽभावं पश्यद्भिर्नाङ्गीकर्तुं शक्यमित्युक्तं भवति। जानन्त्या फलाय जिज्ञासुभ्यस्तत्स्वरूपज्ञानाय विदिततत्स्वरूपयैव श्रुत्या तत्स्वरूपं निर्णीतमपीत्याहुः–'कचापी'ति। अत्र विवृतपदमपि नाऽन्वेति(?)। विवरणमेवाहुः–'सत्यमि'त्यादि। विवरणसिद्धमर्थमाहुः–'फलार्थे'-मित्यादि 'नान्यथे'त्यन्तम्। फलवाक्योक्ता धर्माः सत्यत्वादयः। एतेन 'सत्यं ज्ञानमि'त्याद्युद्दिरूपितस्वरूपादतिरिक्तस्वरूप ब्रह्मेति जानन्त्या नाऽङ्गीकर्तुं शक्यमित्युक्त भवति। तथा सति विवरणवैयर्थ्यापत्तेः। ननु किमर्थं तद्ग्रेतना तस्माद्वा एतस्मादित्यादिप्रस्तावना। कर्तृत्वादिधर्मवैशिष्ट्यज्ञानं

श्रीलालूभट्टकृता गूढार्थदीपिका।

मुख्यं फलमित्याशयः। 'परं किमित्युक्ते यः सर्वान्तर आनन्द इती'ति। सर्वान्तर इत्यत्र

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप।

नित्यत्वशुद्धत्वादिवाक्योक्तधर्मज्ञानात्। नान्यथा, न कार्यब्रह्मगतकर्तृत्वादिधर्मज्ञानादित्यर्थः। परविवरणतया उपलक्षणतया परब्रह्मपरिचायनार्थमित्यर्थः। परविवरणमेवोपपादयन्ति—'परं कि'मित्यादिना। तथा च 'ब्रह्मविदाप्नोति पर'मित्यत्र ज्ञेयं परं च परिचायकधर्मविशिष्टं सोपाधिकं निरूपितं शुद्धबुद्धत्वादिधर्मशून्यं तत्र किमपेक्षया परत्वमित्युक्त इत्यर्थः। तत्र परत्वमुपपादयति—'यः सर्वान्तर' इति। तथा चान्नमयादिचतुष्टयापेक्षयान्तरत्वात्तेभ्य एव परं इति ज्ञेयापेक्षयाऽपरं इति च सिद्धमिति। ननु ज्ञेयब्रह्मापेक्षया कर्तृब्रह्मणि अवरत्वसाधकं सर्वान्तरत्वं गौणेतरापेक्षयाऽवरत्वसाधकं

१ अयमधिकः पाठोऽत्र पतित इति भाति।

सर्वान्तरमित्याकाङ्क्षायां परिचयार्थं भूतभौतिकसृष्टिमुक्त्वा गौणानन्तर्यं परिहृतम्। गौणो-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

दित्याशङ्कायामाहुः—'कर्तृत्वं चे'ति। प्रधानवाक्ये हि ज्ञेयं परं चेति द्वयमुक्तम्। तथा चोभयोरपि प्रकृतत्वात्पूर्वस्मिंस्तस्य बाधितत्वात्परमेव तच्छब्देनाऽपकृष्य तस्यैव कर्तृत्वमुक्तम्। तत्किं ज्ञेयाऽपेक्षया परमन्याऽपेक्षया वेति सन्देहो माभूदित्याशयेन सर्वान्तरमानन्दं निरूपयन्नन्नमयाद्यपेक्षयैव परत्वमाह। ननु सर्वान्तरत्वेऽपि कथं तत्परत्वं तस्य तदसाधकत्वादित्याशङ्क्य स्वयमेव भूतभौतिकादिकर्तृत्वेन तदपेक्षयोत्कृष्टत्वमेवोक्तम्। न तु सर्वान्तरत्वेन तत्सम्बन्धकृतं गौणत्वम्। ज्ञेयापेक्षया

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

अन्योन्तर आत्मेति वाक्यं पश्चादुक्तमिति परस्य गौणत्वं स्यादित्यत आह—'कथमि'त्यादिना। 'परिचयार्थ'मिति। उपलक्षणविधया ज्ञानार्थमित्यर्थः। 'भूतभौतिके'ति। आकाशाद्यन्नादिसृष्टिम्। 'परिहृतमि'ति। यथाऽन्नाऽनन्तरं प्राणस्य गौणत्वं, पर्यवसानाऽभावात्। यथा आनन्दस्य

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

च फलविरोधीत्यत आहुः—'कर्तृत्वं चे'ति। पूर्ववाक्ये ज्ञेयं परश्चेतिद्वयं प्रकृतम्। तत्र सत्यं ज्ञानमितिज्ञेयस्वरूपलक्षणविरोधेन पूर्वस्य बाधाद्द्वितीयमेव तच्छब्देन परामृष्यत इति। तथाच जगदुत्पत्तिस्थितिभङ्गकर्तृत्वमेव परत्वमिति पर्यवसितमित्यर्थः। ततः परस्य स्वरूपजिज्ञासायां सर्वाऽऽन्तरानन्द इति परस्वरूपमुक्तमित्याहुः—'परंकि'मित्युक्त इत्यादि। योऽन्नमयादिसर्वेभ्यश्चतुर्भ्य आन्तरोऽन्तवर्त्यानन्दः स एव परः फलरूप इत्यर्थः। अत्रोक्तमित्यनुषङ्गः। ननु केन प्रकारेण सर्वान्तरत्वमित्याकाङ्क्षायामाहुः—'कथ'मिति। अथवोक्तमेव विवरणं विशदयन्ति—'परमि'त्यारभ्य 'परहृत'मित्यन्तेन। 'पर'मिति। परस्वरूपजिज्ञासायां सर्वान्तर आनन्द इति तत्स्वरूपम्। तन्निरूपयिष्यमाणया श्रुत्या सर्वान्तरत्वज्ञानमेव कथं भविष्यतीत्याकाङ्क्षायां पूर्वमेव तज्ज्ञानार्थं तत एवाऽऽकाशादिपञ्चभूतानामोषध्यादित्रयभौतिकानांच सृष्टिमुक्त्वा, अन्नमयादिचतुर्णां गौणमन्यतोऽन्यत आनन्तर्यं निरूप्यते। सर्वान्तरत्वेनाऽऽनन्दनिरूपणेन प्राणादीनामिव गौणमानन्तर्यं निराकृतम्। मुख्यमेवाऽऽनन्तर्यं निरूपितमित्यर्थः। तथाच भूतभौतिकस्रष्टृत्वेन सर्वकारणरूपोऽऽन्नमयादिसर्वेषां पुच्छत्वविधायकस्तत्सर्वान्तर आनन्दः परपदार्थ इति सिद्धम्। एवं हि तस्माद्वा एतस्मादित्या-

श्रीकाल्लभट्टकृता गूढार्थदीपिका।

सर्वस्मादन्नमयादेरन्तर इत्यर्थो, न तु ज्ञेयाऽपेक्षयेति पूर्वपक्षिण आशयः। 'कथं सर्वान्तर' इत्यादि। तस्माद्वा इत्यादिना भूतभौतिकसृष्टिमुक्त्वा परस्य गौणं गुणसम्बन्धकृतं यदानन्तर्यमन्तरत्वभावरूपं तत्परिहृतम्। गुणसम्बन्धेन परस्मिन्नान्तर्यभावो नास्ति, किन्तु सर्वान्तरमस्त्येवेति भावः।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

कुतो नेत्यपेक्षायामाह—'कथं सर्वे'त्यादि। परिचयार्थं परब्रह्मापेक्षया तस्यावरत्वपरिचयार्थं विशेष्यमादाय शुद्धज्ञेयब्रह्मज्ञापनार्थं चेत्यर्थः। गौणानन्तर्यं गौणाकाशाद्यपेक्षया न्यूनत्वम्। परिहृतं गौणाकाशादिसर्वकर्तृत्वोक्त्या तत्सर्वादित्वस्य सिद्ध्या 'स्वतन्त्रः कर्ता' इत्यनेन स्वातन्त्र्यस्य च सिद्ध्या

[1] अत्र टीकादिषु भाष्यप्रकाशयोश्च 'आनन्तर्य'मिति दृश्यते। सरलस्तु 'आन्तर्य'मिति तथापि सर्व प्रतिलिपिप्रामाण्याच्च तथैव रक्षितः। समवेद्या व्याकरणस्य सर्वतोमुखवृत्तित्वात्।

पासनाफलञ्च प्रधानशेषतयोक्तम् । तत्राऽन्यगतकर्तृत्वाऽऽरोपानुवादोऽपि सम्भवति।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

गौणत्वे विनिगमनान्तरमाह—'गौणोपासने'ति । ज्ञेयापेक्षया-गौणस्य परस्य योपासना तस्याः फलं प्रधानस्य ज्ञेयफलस्य शेषतयोक्तम् । गौणोपासनाफलस्य कामभोगरूपत्वेनाऽनित्यत्वात्तद्दर्शनेन तत्र वैराग्योत्पादनद्वारा तच्छेषत्वम्। नन्वन्यत्र 'यतो वे'त्यादौ ज्ञेयस्यैव कर्तृत्वाद्युक्तेः । कथं परस्यैव कर्तृत्वमित्यत आह—'तत्रे'ति । तत्र कर्तृत्वप्रतिपादके वाक्येऽन्यस्मिन्परस्मिन्गत यत्कर्तृत्वं तस्य य आरोपश्चिद्रूपत्वात्सजातीयत्वेन ब्रह्मणि, तस्याऽनुवादो यतो वेत्यादौ सम्भवति । अत एवैकत्र निर्णीतः

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

तु-वक्तुं न शक्यते । अन्ते पर्यवसानात् । सृष्ट्यादिकर्तृत्वाचेति भावः । 'गौणोपासने'ति । येऽन्नं ब्रह्मोपासत इत्यादिवाक्येनोक्ता गौणा या अन्नब्रह्मोपासना, तस्या यत्फलमित्यर्थः । 'प्रधानशेषतये'ति । प्रधानस्य यत्फलं ब्रह्मानन्दावाप्तिरूपं, तच्छेषतया-तदङ्गत्वेनेत्यर्थः । एतेन परस्य सर्वोत्कृष्टत्वं ध्वनितम् । एतावता प्रबन्धेन परे ब्रह्मणि कर्तृत्वं प्रतीयते, स्वरूपलक्षणे तु प्रापञ्चिकधर्मराहित्यं ब्रह्मणि प्रतिपाद्यते, इति कृत्वा ब्रह्मविदाप्नोति परमिति वाक्यप्रतिपाद्य परप्राप्तिसाधनीभूतं यत् ब्रह्मज्ञानं तद्विषयीभूते ब्रह्मणि कर्तृत्वं न प्रतीयत इति विरोधः । एतादृशविरोधपरिहारार्थं, प्रजापति-

केशिद्विरचिता वेदान्तचन्द्रिका ।

रस्य ब्रह्मपुच्छं प्रतिष्ठेत्येतावद्भागस्य परिविवरणरूपं प्रयोजनमुक्त्वा, मध्ये गौणानामन्नमयादीनां चतुर्णामुपासनातत्फलनिरूपणस्य प्रयोजनमाहुः—गौणोपासनेति । 'सर्वे वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासत' इत्यादिना गौणान्नब्रह्माद्युपासनाफलं प्रधानशेषतया, प्रधानस्य फलस्या'ऽस्ति ब्रह्मेति चेद्वेदे'त्याद्यनुवाकचतुष्टयेन निरूपितस्य सत्त्वब्रह्मानन्दावाप्तिसर्वभयाभावरूपस्य शेषतया सर्वोत्कृष्टत्वज्ञापकतया निरूपितम् । नन्वेवं सति कर्तृत्वमेव सिद्धं ब्रह्मण इत्यत आहुः-'तत्रे'ति । सर्वान्तरत्वपरिचयार्थं कर्तृत्वे परस्मिन्निरूपणीये पूर्वकाण्डोक्तप्रजापतिगतस्य, सांख्योक्तप्रकृतिगतस्य वा

श्रीलालूभट्टकृता गूढार्थदीपिका ।

परस्य सर्वोऽऽन्तरत्वमन्नमयाद्यपेक्षया, न तु ज्ञेयापेक्षयेत्सनोपपत्तिमाह-'गौणोपासनाफलं चे'त्यादि । ज्ञेयापेक्षया-गौणस्य-परस्य या उपासना, तस्याः-फलं-कामाशनरूपम् । प्रधानस्य-ज्ञेयज्ञानफलस्य शेषतयोक्तम् । अतो ज्ञेयापेक्षयाऽऽन्तरत्वं परस्येत्यर्थः । 'तत्रान्यगतकर्तृत्वाऽऽरोपानुवादोऽपी'ति । तत्र ज्ञेये ब्रह्मणि । स्वरूपलक्षणविरोधेन कर्तृत्वस्याऽसम्भवात् । अन्यगतं प्रकृतिगतं यत्कर्तृत्वम् । तस्य कर्तृत्वस्याऽऽरोपेणाऽनुवादः सम्भवति । न तु तत्र कर्तृत्वमित्यर्थः । एकत्र निर्णीतः शा-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

परिहृतमित्यर्थः । नन्वानन्दमयस्यावरब्रह्मत्वे तस्योपासनं फलं च वेदो न ब्रूयादित्यत आह—'गौणे'त्यादि । गौणोपासनाफलं गौणस्यानन्दमयस्य उपासना सर्वकर्तृत्वादिनोपासना तस्याः फलं 'सोऽश्नुते' इत्यादिना काममोगादिरूपं क्षयिष्णु फलम् । प्रधानशेषतया नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मण उपासनाया यन्मोक्षरूपं फलं तच्छेषतया तस्य तस्य क्षयिष्णुत्वदर्शनेन वैराग्योत्पादन-

१ परमत्वमिति वेनाऽऽनन्तर्यमित्यपि पाठः साधुः ।

ततश्च 'भृगुर्वै वारुणिरि'त्युपाख्यानेऽपि परिचायकत्वाद्गौणकर्तृत्वमेवानूद्यते । फलाश्रवणादिति, पूर्वः पक्षः ।

---

गोस्वामिश्रीपुरुषोत्तमविरचिता अणुभाष्यव्याख्या ।

शास्त्रार्थोऽपरत्राप्यन्वेतीतिन्यायाद्भृगुप्रपाठकेऽपि ब्रह्मपरिचायकत्वेन प्रपाठकान्तरोक्तं परनिष्ठमेव कर्तृत्वं तत्राऽनूद्यते । तत्र विनिगमकमाह—'फलाऽश्रवणादि'ति । यदि परस्मिन्निव तस्मिन्नपि मुख्यत्वेन कर्तृत्वं स्यात्तदा तज्ज्ञानस्याऽपि काममोगादिकमनित्यमेव फलत्वेनोक्तं स्यात् । न त्वेवम् । तदातिरूपस्याऽमृतत्वस्यैव तत्र तत्फलत्वेनोक्तेः ।

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

**रकामयत प्रजाः** सृजेयेति पूर्वकाण्डोक्तप्रजापतिगतस्य सांख्योक्तप्रकृतिगतस्य वा कर्तृत्वस्य परे ब्रह्मण्यारोपं कृत्वाऽनुवादस्यापि सम्भव इत्याशयेनाऽऽह—तत्राऽन्यगतेति । ननु भृगुप्रपाठके 'यतो वा इमानी'त्यादिना यत्कर्तृत्वमुक्तं तस्य का वा गतिरित्यत आह—'ततश्चे'ति । गौणकर्तृत्वमेव आरोपितकर्तृत्वमेव । ननु तत्र कथमेवं ज्ञायत इत्यत आह—'फले'ति । तथा च कार्यलक्षणं न सम्भवतीति पूर्वपक्ष्याशयः ।

केनचिद्विरचिता वेदान्तचन्द्रिका ।

कर्तृत्वस्याऽऽरोपेणाऽनुवादः सम्भवतीति न वास्तवकर्तृत्वसिद्धिरिति भावः । अपिशब्दो वास्तवसमुच्चायक, एवकारार्थो, वा वाक्यालङ्कारे । 'एकत्र सिद्धः शास्त्रार्थः' इति न्यायादुत्तरप्रपाठकेऽपि कर्तृत्वाऽऽरोपानुवाद एवेत्याहुः—'**ततश्चे**'ति । स्वरूपलक्षणाविरोधादेव । '**परिचायकत्वादि**'ति । कर्तृत्वनिरूपणस्य परिचयार्थत्वात् । गौणकर्तृत्वमारोपितकर्तृत्वम् । '**फलाश्रवणादि**'ति । अयं भावः ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

**स्वार्थोऽपरत्रापि नेय** इति न्यायेनाऽन्यत्राऽपि यदुक्तं कर्तृत्वं तस्य व्यवस्थामाहुः—'**ततश्च भृगुर्वै वारुणिरित्युपाख्यानेऽपी**'त्यादिना । नन्वेतदनुरोधेन तत्र व्यवस्थाप्यते, तर्हि तदनुरोधेनैतदेव कुतो न व्यवस्थाप्यते, तथा सति 'भृगुर्वै' इत्युपाख्याने, आनन्दाद्ध्येवेत्यादिना ब्रह्मणि कर्तृत्वस्योक्तत्वादत्रापि ज्ञेये कर्तृत्वं स्यादित्याशङ्क्य 'भृगुर्वै' इत्युपाख्यानस्याऽमुख्यत्वमाहुः—'**फलाश्रवणादि**'ति । तथा च तस्याऽमुख्यत्वादेतदनुरोधेन तदेव व्यवस्थाप्यमित्यर्थः । एवं शुद्धे ब्रह्मणि कर्तृत्वं वस्तुतो नास्तीति पूर्वपक्षिण आशयः ।

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप. ।

प्राग् मोक्षाङ्गतयोक्तमित्यर्थः । नन्ववरब्रह्मत्वेनोपहितचैतन्यस्याप्युपाधिनिरासेन विशेष्यमात्रविचारे अपरब्रह्मत्वात् । 'तस्माद्वा' इत्यादिवाक्ये उक्तं कर्तृत्वमसम्भाव्यमेवेत्यत आह—'**तत्रे**'त्यादि । तत्र 'तस्माद्वे'त्यादिवाक्ये । अन्यासंश्लिष्टा प्रकृतिस्तद्गतं यत्कर्तृत्वं तस्य यो विशेष्ये आरोपस्तेन यः श्रुतिरूपोनुवाद इत्यर्थः । पूर्वानुवाकोक्तप्रकारमनुवाकान्तरोक्तोपासनास्थलेऽपि अतिदिशति—'**ततश्चे**'त्यादिना । ततः एकत्र शास्त्रार्थस्य सिद्धत्वतः । **परिचायकत्वात्** 'काकवन्तो देवदत्तगृहा' इत्यत्रेवाविद्यमानमेव कर्तृत्वं देवदत्तगृहाणां काका इव शुद्धज्ञेयब्रह्मस्वरूपबोधकं भवति । **अनूद्यते** ब्रह्मपरिचायनार्थं प्रकृत्यादिगतं कर्तृत्वं श्रुत्याऽनुवादरूपेणोच्यते । **फलाश्रवणात्** कार्यब्रह्मोपास-

सिद्धान्तस्तु—

उत्पत्तिस्थितिनाशानां जगतः कर्तृ वै बृहत् ।
वेदेन बोधितं तद्धि नान्यथा भवितुं क्षमम् ॥
नहि श्रुतिविरोधोऽस्ति कल्पोऽपि न विरुध्यते ।
सर्वभावसमर्थत्वादचिन्त्यैश्वर्यवद्बृहत् ॥

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

तस्मात्तन्न कर्तृ इतिस्थिते पूर्वपक्षेऽत्र सिद्धान्तमाहुः–**'सिद्धान्तस्त्वि'**ति । 'उत्पत्तिरि'ति । यदुक्तं ज्ञेयमकर्तृ तन्नोपपद्यते । तस्याऽऽम्नाये सर्वत्रैव निरूप्यमाणत्वात् । ननूक्तमनागतमेव तदारोपन्यायेन तत्राऽनूद्यत इत्याशंकायामाह–**'नान्यथे'**ति । नहि परमाप्तो वेदोऽक्षरमात्रमप्यन्यथा वदति । तथा सत्यन्यत्राऽपि तथात्वं व्याहन्येत । **'उत्पत्ती'**त्यारभ्य **'क्षममि'**त्यन्तो ग्रंथो **'वेदेने'**त्यारभ्य **'प्रसङ्गादि'**त्यन्तेन व्याख्यातः(?) । नन्वेवं नित्यत्वादिप्रतिपादिकानां कर्तृत्वादिप्रतिपादिकानां च विरोधः कस्मान्न भवतीत्यत आहुः—**'न ही'**ति । विरोधो हि सहाऽनवस्थानलक्षणः, नहि सत्यत्वकर्तृत्वादीनां प्रमाणान्तरेण सिद्धः । **'तं त्वौपनिषदं पुरुषं पृच्छामी'**ति श्रुतेर्ब्रह्मणः श्रुत्येकस-

गोस्वामिश्रीमच्छ्रीधरविरचित विवरणम् ।

सिद्धान्तं विवृण्वन्ति–**'सिद्धान्तस्त्वि'**ति । बृहत् ब्रह्मेत्यर्थः । **'तद्धी'**ति । कर्तृत्वं हीत्यर्थः । **अन्यथा** आरोपितं गौणमिति यावत् । 'कल्पोऽपी'ति । **सूत्रमपीत्यर्थः** । क्वचित्कल्प्य इत्यपि पाठः ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

फलसम्बन्धिवाक्यमेव प्रधानवाक्यम् । तद्रहितं तु गौणम् । फलं च फलार्थाभिहितप्रधानवाक्योक्तधर्मज्ञानादेव । **नान्यथा** । यज्ज्ञानाच्च फलोक्तिस्त एव धर्मा वास्तवा । कर्तृत्ववाक्ये च फलाऽनभिधानात्कर्तृत्वादिधर्मज्ञानस्य फलार्थत्वाऽभावेन परिचयमात्रार्थत्वादारोपानुवाद एव कर्तृत्वादिधर्माणामिति । एवंस्थिते पूर्वपक्षे सिद्धान्तमाहुः—'उत्पत्ती'त्यादि । बृहज्ज्ञेयं ब्रह्म । तत् कर्तृत्वम् । **'अन्यथे'**ति गौणम् । नन्वेव स्वरूपलक्षणविरोध इति चेन्नेत्याहुः–'न ही'ति । निरपेक्षो स्वः श्रुतिः ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

इत्थं पूर्वपक्ष उपस्थिते, सिद्धान्ते शुद्धे ब्रह्मणि कर्तृत्वं साधयन्ति—**'उत्पत्तिस्थितिनाशानामि'**त्यादिना । अर्थस्तु—जगतः उत्पत्तिस्थितिनाशानां कर्तृ वै निश्चयेन बृहत् शुद्ध ब्रह्मैवेत्यर्थः । इह प्राचां पुस्तके उत्पन्नस्थितिनाशानामिति पाठो दृश्यते तत्र उत्पन्नेति भावे क्तः । तथा सत्यर्थस्तुल्यः । नन्वेवं शुद्धे ब्रह्मणि कर्तृत्वाद्यङ्गीकारे **निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनमि**त्यादिश्रुतिविरोध इत्याशङ्क्य समादधते ।—**'न हि श्रुतिविरोधोऽस्ती'**ति । सत्यकर्तृत्व-

मवावदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

नाया यत्फलं सर्वकामफलभोगाशनरूपं तस्यैतत्प्रपाठकेऽश्रवणादित्यर्थः । इति **पूर्वपक्षः** जगज्जन्मादिकर्तृत्वलक्षणस्य शुद्धे ब्रह्मण्यसम्भवरूपः पूर्वः पक्ष इत्यर्थः ।

सिद्धान्तमाहुः—**'उत्पत्ती'**त्यादि । **बृहत्** वेदान्तवेद्यं ब्रह्म । **तत्** ब्रह्मणो जन्मादिकर्तृत्वम् । **अन्यथा** श्रुत्याऽरोप्यानूद्यते इत्येवरूपम् । **श्रुतिविरोधः** सत्यज्ञानाऽनन्तत्वकर्तृत्वादीनां गोत्वाश्वत्वादीनामिव सहानवस्थानरूपो विरोधो न क्वापि सिद्धोऽस्तीति भावः । **कल्पोपि** 'सर्वभावः

वेदेनैव तावत् कर्तृत्वं बोध्यते। वेदश्च परमाप्तोऽक्षरमात्रमप्यन्यथा न वदति।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

मधिगम्यत्वेनोभयवैशिष्टयस्याऽविरुद्धत्वात् । 'नहि श्रुतिविरोधोऽस्ति कल्पोऽपि न विरुध्यत' इति। अथाऽभ्युपेत्यापि विरोधसमाधानमाहुः—'कल्पोऽपी'ति। कल्पः पक्षः। विरोधोऽस्तीति शेषः। सोऽपि ब्रह्मणि न विरुध्यते । नच कर्तृत्व इत्यारभ्योपपत्तेरित्यन्तेन व्याख्यातः।

नतु तेषां विरोधे कथं सामानाधिकरण्यमित्यत आहुः—'सर्वभावसमर्थत्वादचिन्त्यैश्वर्यवदि'ति। ब्रह्मादीनामप्यचिन्त्यैश्वर्यवत्त्वेन ब्रह्मणि सर्वोपपत्तेः। अत एव 'नैषा तर्केण मतिरापनेये'त्यादिश्रुतिरपीममेवार्थमाह। तत्र विनिगमकमाहुः—'सर्वभावसमर्थत्वादि'ति। सर्वरूपेण

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

'सर्वभावे'ति। सर्वभवने समर्थत्वाद्बृहदकर्तृ कर्तृ भवतीत्यर्थः। ननु कथं श्रुतिविरोधो नास्तीत्यत आह—'वेदेने'ति। ब्रह्मविदाप्नोति परमित्यनेन साधनं फलं चोक्तम् । तत्र साधनविषयीभूते ब्रह्मणि सत्यं ज्ञानमित्यादिना स्वरूपलक्षणमुक्त्वाऽकर्तृत्वं प्रतिपादितम् । फलकर्मीभूते परे ब्रह्मणि 'तस्माद्वा एतस्मादि'त्यादिवाक्येन कार्यलक्षणमुक्त्वा कर्तृत्वं प्रतिपादितम्। अथ च ब्रह्मणा विपश्चितेत्येतद्वाक्यगततृतीयान्तेन ब्रह्मपदेन परस्यैव विवरणं क्रियते। तेन च कृत्वा किं ज्ञायते लक्षणद्वयस्यैकं ब्रह्मैव लक्ष्यमिति लक्षणयोर्विरोधाभावः। तथा चाचिन्त्यैश्वर्यवत्त्वात् वेदेनैव कर्तृत्वमकर्तृत्वं च बोध्यत

केनचिद्विरचिता वेदान्तचन्द्रिका।

तादृशो वेदशब्द एव। वेदवाक्यमिति यावत्। ब्रह्मणः कर्तृत्वं नास्तीत्याकारकवेदवाक्याऽभावादिति भावः । ननु यथा—'बर्हिर्देवसदनं दामी'ति मन्त्रे लवनाल्लिङ्गादनेन मन्त्रेण बर्हींषि लुनीयादिति श्रुतिः कल्प्यते । तथाऽत्रापि प्रत्यक्षश्रुतिविरोधाभावेऽपि स्वरूपलक्षणविरोधभावाल्लिङ्गात्कल्पितताद्दृशश्रुतिविरोधो भविष्यतीत्यत आहुः—'कल्पोऽपी'ति। अत्र अकर्तरि च कारके संज्ञायामिति कर्मणि घञ्। कल्पोऽपि वेदभाग इत्यर्थः। प्रत्यक्षायाः कर्तृश्रुतेः प्राबल्यादिति भावः। अन्यथा ऋचोऽपि लिङ्गात्कल्पितश्रुत्येन्द्रोपस्थानाऽङ्गत्वमेव स्यात्। तथा च प्रत्यक्षया तया कल्पितायास्तस्या बाध्यत्वान्न तद्विरोध इत्यर्थः। ननु सत्यत्वकर्तृत्वयोः सहाऽनवस्थानलक्षणो विरोधो भवतीत्यतो वदन्ति-'सर्वभावे'ति । भावो धर्मः। तथा च सर्वधर्माश्रयत्वात्तथा तत्। यद्वा। ननु कर्तृत्वे कारणाऽन्तरसापेक्षत्वादसङ्गश्रुतिविरोध इत्यत आहुः—'सर्वे'ति । भवनं भावः सर्वत्वेन भावः सर्वभावः । स्वस्यैव सर्वभावे समर्थत्वादभिन्ननिमित्तोपादानरूपतयाऽचिन्त्यैश्वर्यवद्ब्रह्मेति नाऽसङ्गश्रुति-

श्रीलालूभट्टकृता गूढार्थदीपिका।

निष्क्रियत्वादीनां सहाऽनवस्थानलक्षणो विरोधो नास्ति। यतः सर्वभवनसमर्थे ब्रह्मणि विरोधो नास्त्यतस्तत्प्रतिपादिनीनां श्रुतीनामपि विरोधो नास्तीत्यर्थः। 'कल्पोऽपी'ति। कल्पसूत्रमपीत्यर्थः।

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीप.।

'सर्वभवन'मित्येवरूपकल्पसूत्रमपि । न विरुध्यते सर्वभवनसमर्थत्वादकर्त्रपि कर्त्रित्यर्थसम्भवान्न विरुध्यते इत्यर्थः। विरोधाभावे युक्तिमाहुः—'सर्वभावे'त्यादि। सर्वरूपैर्भवनं सर्वभावस्तत्र समर्थत्वादित्यर्थः। सर्वभवनसामर्थ्यमुपपादयन्ति—'अचिन्त्ये'त्यादि। तत्र 'सत्यं चानृतं च सत्यमभवद्यदिदं किञ्च तत्सत्यमाचक्षते' इति श्रुत्युक्तरूपम्। वेदेनैव 'यतो वा इमानि भूतानि' 'आनंदाद्ध्ये-

अन्यथा सर्वत्रैव तदविश्वासप्रसङ्गात् । न च कर्तृत्वे विरोधोऽस्ति । सत्यत्वादिधर्मवत्कर्तृत्वस्याप्युपपत्तेः । सर्वथानिर्धर्मकत्वे सामानाधिकरण्यविरोधः । सत्यज्ञानादिपदानां धर्मभे-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

भवनं भावस्तस्मिन्समर्थं हि तत् । 'सत्यं चानृतं च सत्यमभवद्यदिदं किंच तत्सत्यमाचक्षत' इत्यादिश्रुतेः । तथा च यथैकरसमपि ब्रह्म 'सत्यं विज्ञानमानन्दं ब्रह्मे'त्यादौ सत्यादिपदप्रवृत्तिनिमित्तधर्मवद्भवति । तथा च कर्तृत्वादिविशिष्टमप्यस्तीति न काचिदनुपपत्तिः । ननु नास्त्येव ब्रह्म सत्यादिपदप्रवृत्तिनिमित्तधर्मवत्तस्य निषेधमात्रपर्यवसितत्वेन सर्वथा निर्धर्मकत्वादित्यत आहुः—

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

इति भावः । ननु क्वचिद्वेदस्याप्यारोपितार्थबोधकत्वं स्यादित्यत आह—'वेदश्चे'ति । अन्यथा आरोपितमर्थम् । अन्यथा क्वचित्स्थले तथा स्वीकारे । 'अस्ती'ति । आरोपितार्थस्य स्वर्गकामो यजेतेत्यत्रापि सत्वेन सन्मार्गोच्छेदापत्तिः । 'न चे'ति । अस्तीत्यनेनान्वितम् । 'विरोध' इति । शुद्धब्रह्मणो निर्धर्मकत्वेन तत्र कर्तृत्वस्वीकारे स्वरूपलक्षणविरोध इत्यर्थः । शुद्धस्य निर्धर्मकत्वमेव नास्तीत्याहुः—'सत्यत्वादी'ति । आदिना ज्ञानत्वानन्तत्वपरिग्रहः । 'सामानाधिकरण्य' इति । एकार्थप्रति-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

विरोधः । अथवा कल्पितश्रुतिविरोधाभाव एवायं हेतुः । तथा च स्वस्यैव सर्वरूपेण भवनसमर्थत्वात्तादृशमेव तदिति कल्प्यस्य वेदभागस्य लौकिककर्तृत्वनिषेधपरत्वान्न तद्विरोध इत्यर्थः । कारिकार्थं विशदयन्ति—'वेदेनैवे'त्यादि । ननु बोध्यते परमारोपितम् । तत्राहुः—'वेदश्चे'ति । 'अन्यथे'ति । बाधितार्थम् । 'अन्यथे'ति । बाधितार्थवक्तृत्वे । 'सर्वत्रे'ति । विधिमन्त्रनिषेधांशे स्वरूपलक्षणांशे च । 'कर्तृत्व' इति । सत्यत्वादिधर्मैरिति शेषः । यथैकरसमपि सत्यादिपदप्रवृत्तिनिमित्तधर्मवत् । तथा

श्रीलालूभट्टकृता गूढार्थदीपिका ।

यद्वा कल्पोऽपि पक्षोपि, ब्रह्म कर्तृत्वादिधर्मरहितमिति पक्षोऽपि न विरुद्ध्यते । कर्तृत्वादिषु विद्यमानेऽप्यकर्तृत्वादेः स्वीकारे बाधकाऽभावात् । सर्वभवनसमर्थत्वाद्विरुद्धधर्माश्रयत्वादिति भावः । 'सर्वत्रैव तदविश्वासप्रसङ्गादि'ति । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ विध्यंशे, सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिस्वरूपलक्षणांशे वेदो ह्यविश्वसनीयः स्याद्यदि काऽप्यक्षरमात्रमप्यन्यथा वदेदिति भावः । 'न च कर्तृत्वे विरोधोऽस्ती'ति । कर्तृत्वाऽङ्गीकारे स्वरूपलक्षणेन विरोधो नास्तीत्यर्थः । तत्र हेतुः—'सत्यत्वादि धर्मवदि'त्यादि । ननु सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतौ सत्य पदेनाऽसत्यं, ज्ञान पदेन जडो, ऽनन्तपदेन सान्तो व्यावर्त्यत इति त्रिभिः पदैरेक एवार्थ उच्यत इति न तत्र ब्रह्मणि सत्यत्वमायातीत्याशङ्क्याऽऽहुः—'सर्वथा निर्धर्मकत्वे' इत्यादि । सत्यं ज्ञानमनन्तं ब्रह्मे-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीपः ।

त्यादि वेदेनैवेत्यर्थः । परमाप्तः परमसत्यवक्ता । अन्यथा वेदस्य मिथ्यावक्तृत्वे । सर्वत्रैव अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिविधिषु, 'निष्कलं शान्तमनवद्य'मित्यादिसर्वस्मिन् वेदे । तदविश्वासेत्यादि । वेदप्रामाण्येऽविश्वास इत्यर्थः । विरोधोऽस्ति सर्वभवनसमर्थत्वादेव विरोधो नास्तीत्यर्थः । ननु निर्धर्मके कर्तृत्वधर्मोऽसम्भवीत्यत आहुः—'सत्यत्वादी'त्यर्थ. । ननु सत्यज्ञानानन्तादिपदानि शुद्धधर्मिमात्रस्य सत्यज्ञानानन्तस्वरूपस्यैव बोधकानि न तु धर्मविशिष्टस्यापीत्यत आहुः—'सर्वथे'-

देनैव तदुपपत्तेः । न च कर्तृत्वं संसारिधर्मो देहाद्यध्यासकृतत्वादिति वाच्यम् । प्रापञ्चिके कर्तृत्वे तथैव, न त्वलौकिककर्तृत्वे । अत एवास्येत्याह । 'अस्ये'ति पुरोवर्ती प्रपञ्च इदमा-

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

'सर्वथे'ति । तथा सति भिन्नेभ्यो धर्मेभ्य एकरूपधर्मिबोधकत्वलक्षणं सामानाधिकरण्यं कथमुपपद्येत । तथा च तदुपपत्त्यर्थं यथैकरसेऽपि धर्मभेदाभ्युपगमस्तथा कर्तृत्वादेरपीत्यर्थः । अचिन्त्यैश्वर्यमेव दृढीकर्तुं किंचिदाशङ्क्य समादधते—'न चे'ति । ननु कर्तृत्वस्य देहाध्यासकृतत्वेन संसारित्वादसङ्गे तस्मिन्कथं तत्सम्भव इति चेन्न । प्रापंचिके लौकिके तस्मिंस्तथा नियमेऽप्यलौकिके तस्याऽभावात् । अलौकिकत्वे विनिगमकमाहुः—'अत एवे'ति । अत्रेदमाऽनेकभूतभौतिकादिलोकाद्भुतरचनायुक्तकोटिब्रह्माण्डरूपोऽत

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

पादकत्वरूपसामानाधिकरण्यविरोध इत्यर्थः । तदेवोपपादयति—'सत्ये'ति । धर्मभेदेनैवेति । यथा नीलोत्पलमित्यादौ नीलत्वमुत्पलत्वमेकस्मिन्नुत्पले वर्तत इति कृत्वा नीलाभिन्नमुत्पलं इत्यभेदप्रकारकाऽभेदसंसर्गको वा शाब्दबोधो जायते । तथा सत्यं ज्ञानमित्यादावपि धर्मभेदेनैवोपपत्तिर्भविष्यतीति भावः । 'संसारी'ति । जीवधर्म इत्यर्थः । 'तथैवे'ति । देहाध्यासकृतत्वमेव । अस्मिन्नर्थे सूत्रकारसम्मतिमाहुः—'अत एवे'ति । 'अस्ये'ति । अलौकिककर्तृत्वं भगवन्निष्ठमेवेत्यभिप्रायेणैव जन्मा-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

कर्तृत्वादिधर्मवदपीति न काप्यनुपपत्तिः । ननु 'अस्थूलं' 'निष्क्रियं निष्कल'मित्यादिवाक्याऽनुरोधान्निर्धर्मकमेव तदिति कथं सत्यत्वादिवत्कर्तृत्वाद्युपपत्तिरित्यत आहुः—'सर्वथे'ति । तथा सति भिन्नैर्धर्मैरेकधर्मिबोधकत्वरूपसामानाधिकरण्याऽनुपपत्तिः । 'तदुपपत्तेरि'ति । सामानाधिकरण्योपपत्तेः । ननु तथाप्यप्राकृते ब्रह्मणि कर्तृत्वं नोपपत्तिक्षममित्याशङ्क्य निषेधन्ति—'न चे'ति । 'तथैवे'ति । देहाद्यध्यासकृतत्वम् । एतेन कारिकोक्ताऽचिन्त्यैश्वर्यवत्त्वं विवृतं ज्ञेयम् । तत्र विनि-

श्रीलाल्लूभट्टकृता गूढार्थदीपिका ।

त्यादिपदानां यानि प्रतिपाद्यानि तेषां सत्यत्वचिद्रूपत्वाऽनन्तत्वादीनां सामानाधिकरण्यविरोधः । भिन्नेभ्यो धर्मेभ्य एकधर्मिबोधकत्वलक्षणं सामानाधिकरण्यं नोपपद्येतेत्यर्थः । अयमर्थः । यद्यसत्यजडसान्तव्यावृत्तमेकमेव वस्तु ग्राह्यं स्यात्तदा सत्यादिपदत्रयोक्तिर्व्यर्था स्यात् । पौनरुक्त्यापत्तेः । स्वार्थत्यागरूपदोषाऽऽपत्तिस्तु वर्तत एवेति तथा व्याख्यानमनुत्तममिति भावः । अतः सत्यत्वचिद्रूपत्वाऽनन्तत्वानां सामानाधिकरण्यमादर्तव्यम् । 'धर्मभेदेनैव तदुपपत्तेरि'ति । सुन्दरसुस्पर्शाऽरुणोत्पलमित्यादौ सुन्दरत्वादीनां धर्माणां भेदेनैव सामानाधिकरण्योपपत्तेः । एकाधिकरणवृत्तित्व

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

त्यादि । **सामानाधिकरण्यविरोधः** नानापदार्थतावच्छेदकविशिष्टानामभेदेन बोधस्यैव सामानाधिकरण्यपदार्थत्वात्पदार्थतावच्छेदकधर्माणां धर्मिण्यनङ्गीकारे च तादृशबोधस्यानुत्पत्तिरूपो विरोध इति भावः । तदुपपत्तेः सामानाधिकरण्येन बोधोपपत्तेः । 'नचे'त्यादि । **संसारिधर्मः** 'अहङ्कारविमूढात्मा कर्ताहमिति मन्यते' इति भगवद्वाक्यात्संसारिधर्म इत्यर्थः । 'देहे'त्यादि । आत्मत्वेन देहे ज्ञाते तत्र कर्तृत्वस्यारोपादित्यर्थः । प्रापञ्चिके अविद्याकृतदेहाद्यध्यासवन्निष्ठे । **तथैव** संसारिधर्मत्वमेव । अलौकिककर्तृत्वे वेदबोधितब्रह्मनिष्ठकर्तृत्वे । अत एव उक्तलक्षणरूपकर्तृत्वस्यालौकिकत्वादेव । अस्ये-

निर्दिश्यते । अनेकभूतभौतिकदेवतिर्यङ्मनुष्याऽनेकलोकाद्भुतरचनायुक्तब्रह्माण्डकोटिरूपस्य मनसाप्याकलयितुमशक्यरचनस्याऽनायासेनोत्पत्तिस्थितिभङ्गकरणं न लौकिकम् । प्रतीतञ्च निषेध्यं नाऽप्रतीतं, न श्रुतिप्रतीतम् । सत्यत्वादयश्च लौकिकाः । ततः सर्वनिषेधे

---

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या ।

एव तदतिरिक्तेन मनसाऽप्याकल्पयितुमशक्यः प्रपंचो निर्दिश्यते । तस्याऽप्यनायासेन वीक्षणमात्रेणोत्पत्त्यादिकरणं न लौकिकम् । तथा च तस्याऽलौकिकत्वान्न देहाद्यध्याससम्भावनेति भावः । ननु लोके देहाद्यध्यासं विना कर्तृत्वस्याऽदृष्टत्वात्तत्प्रत्यक्षस्य ज्येष्ठप्रमाणत्वाच्चद्विरुद्धं तत्तेन निषेध्यमित्यत आहुः—प्रतीतं चेति । यद्धि प्रतीतं तन्निषेध्यम् । नाऽप्रतीतम् । निषेधस्य प्राप्तिपूर्वकत्वात् । अप्रतीतनिषेधेऽसतोऽपि निषेधप्रसङ्गः । न हीदमा निर्दिष्टस्य कार्यस्य कर्तृत्वं लोके प्रतीतम् । येन प्रत्यक्षादिना तन्निषिध्येत । ननु लोके तस्याऽप्रतीतावपि श्रुतौ प्रतीतत्वान्नाऽप्रतीतत्वमित्याशङ्क्याऽऽहुः—'न श्रुतिप्रतीतमि'ति ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

घस्येत्यस्मिन् सूत्रेऽस्येत्युक्तमित्यर्थः—'इदमे'ति । इदंशब्देनेत्यर्थः । अलौकिककर्तृत्वमेवाऽऽहुः—'अनेके'ति । नन्वस्थूलमनण्वित्यादिवाक्यानां निर्धर्मकब्रह्मप्रतिपादकत्वात्स्थूलत्वादीनां निषेध इव कर्तृत्वनिषेधोऽपि सम्भवतीत्यत आहुः—'प्रतीतमि'ति । अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादनेकब्रह्माण्डकर्तृत्वस्य लोके प्रतीत्यभावादप्रतीतकर्तृत्वस्य निषेधो न सम्भवतीत्याशयेनाऽऽहुः—'नाऽप्रतीतमि'ति । ननु तस्माद्वा एतस्मादित्यादिश्रुतिप्रतीतकर्तृत्वस्य निषेधः स्यादित्यत आहुः—'न श्रुतिप्रतीतमि'ति । अतिरात्रे षोडशिनं गृह्णातीत्यनेन षोडशिग्रहस्य ग्रहणं विहितं तदङ्गत्वेन समयाध्युषिते सूर्ये षोडशिनस्तोत्रमुपाकुर्यादित्यनेन स्तोत्रोपाकरणमपि विहितम् । क्वचित् । नातिरात्रे षोडशिनं गृह्णातीत्यनेन वाक्येनातिरात्रे षोडशिग्रहस्य निषेधोऽपि बोध्यते । तेन च कृत्वा विकल्पः प्रतीयते यथा, तथात्रापि श्रुतिप्रतीतकर्तृत्वस्य निषेधे तुल्यबलत्वा-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

गमकमाहुः—'अत एवे'त्यादिना । 'अनायासेने'ति । वीक्षणमात्रेणेत्यर्थः । 'न लौकिकमि'ति । एतादृशस्याऽस्यैतादृशकर्तृत्वं न लोकसिद्धमित्यर्थः । लौकिकदृष्ट्या लोकैः प्रतीतं यद्देहाद्यध्यासकृतं कर्तृत्वं तदेव श्रुत्या निषेध्यं ब्रह्मणोऽप्राकृतत्वज्ञानाय न लोकाऽप्रतीतमलौकिककर्तृत्वमित्याहुः—'प्रतीतमि'त्यादिना । नापि श्रुतिप्रतीतं श्रुत्या निषेद्धुं शक्यम् । समबलत्वेन बाध्यबाधकत्वाऽभावात् । तदेतदुक्तं 'न श्रुतिप्रतीतमि'ति । नन्वसद्वा इदमग्र आसीदित्या-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

सुन्दरत्वसुस्पर्शत्वारुण्यत्वादीनामेकस्मिन्नुत्पले वृत्तिर्धर्मभेदेनैव दृष्टा । तथाऽत्रापि सत्यत्वज्ञानत्वाऽनन्तत्वादीनामेकस्मिन् ब्रह्मणि वर्तनम् । यथा सत्यत्वादयो धर्मा ब्रह्मणि विद्यन्ते तथैव श्रुत्युक्ताः कर्तृत्वादय इति न सर्वात्मना निर्धर्मकत्वमिति तात्पर्यम् ।

नन्वस्थूलादिवाक्यानां काऽवकाश इत्याकाङ्क्षायामाहुः—प्रतीतं च निषेध्यमिति । लोकप्रतीतानामेव स्थूलत्वादीनां निषेधः । न तु श्रौतानामित्यर्थः । अत एवा'ऽस्थूलमनण्वह्रस्वमि'-

भगवदीयश्रीमद्व्रिष्णारामप्रणीतः प्रदीपः ।

त्याह 'जन्माद्यस्य यत' इत्यनेन सूत्रकार आहेत्यर्थः । अलौकिककर्तृत्वमेवोपपादयन्ति—'अस्ये'त्यादिना, नाविद्याकृताध्यासवन्निष्ठम् । फलितमाहुः—'प्रतीत'मित्यादि । तथा च निषेधस्य प्रतियोगि-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

नहि लौकिकैः प्रमाणैस्तन्निषेद्धुं शक्यम् । तस्याः सर्वतोऽभ्यर्हितत्वेन तेषां तत्रासामर्थ्यात् । समानविषयत्वाऽभावाच्च । अन्यथा समस्तोपाध्यनवच्छिन्नाऽनन्ताऽऽनन्दचैतन्यैकरससमुदासीनमेकमद्वितीयमात्मतत्त्वं श्रुतिस्मृतीतिहासपुराणसिद्धमहमित्यनुभवेन प्रादेशिकाऽनेकविधशोकदुःखादिप्रपञ्चोपप्लुतमात्मतत्त्वं दर्शयता बाध्येत । न च ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याऽप्रामाण्यमुपचरितार्थत्वं वेति साम्प्रतम् । तस्याऽपौरुषेयत्वेन निरस्तसमस्तदोषाशङ्कस्य स्वतःसिद्धप्रमाणभावस्य स्वकार्ये प्रमितौ प्रमाणान्तराऽनपेक्षत्वात् । ननु प्रमितावनपेक्षत्वेऽपि स्वोत्पत्तौ प्रत्यक्षाऽपेक्षत्वात्तद्विरोधादनुत्पत्तिलक्षणमप्रामाण्यं स्यादिति चेन्न । उत्पादकाऽप्रतिद्वन्द्वित्वात् । न ह्याम्नायजन्यं ज्ञानं व्यावहारिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति, येन कारणाभावात्स्वयं न भवेदपि तु पारमार्थिकम् । न चैवमतात्त्विकप्रमाणभावेभ्यः कथं तात्त्विकप्रमाणोत्पत्तिरिति वाच्यम् । अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यावहारिकेभ्यस्तत्त्वज्ञानोत्पत्तिदर्शनात् । यथा वर्णे ह्रस्वदीर्घत्वादयोऽन्यधर्मा अपि समारोपितास्तत्त्वप्रतिपत्तिहेतवः ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

द्विकल्पः स्यान्नतु निषेधः स्यादित्यतो न श्रुतिप्रतीतं निषेध्यमिति भावः । ननु मास्तु कर्तृत्वनिषेधः । श्रुत्युक्तं सत्यत्वादिकं तु लोकप्रसिद्धमपि तस्यैव निषेधोऽस्त्वित्यत आह—'सत्यत्वे'ति । लौकिकालौकिकत्वेनादृताः । 'तत' इति । तदनन्तरमित्यर्थः । सर्वनिषेधे लोकश्रुतिप्रतीतसाधारण्येन सर्व-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

दिश्रुत्या सदेव सौम्येदमिति श्रुतिप्रतिपादिता अपि सत्यत्वादयोऽलौकिका एवेति निषिध्यन्त एवेत्याशङ्क्याऽऽहुः—'सत्यत्वादय' इति । यदि तेऽपि लौकिकसिद्धा भवेयुस्तत्त्वेनैव च निषेध्याश्चेत्स्युस्तदा लौकिकाऽलौकिकसर्वधर्मनिषेधे ब्रह्मणोऽज्ञानमेव भवेत् । लक्षणाऽधीननिरूपणत्वाल्लक्ष्यस्य । तथा च तमेव विदित्वेत्यादिश्रुतिविरोधः । अथवा 'असदेवेति श्रुत्या, निष्कलादिश्रुत्या वा ये निषेध्याः सत्यत्वादयस्ते लौकिका एव । अन्यथा ततोऽलौकिकानामपि तेषां निषे-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

त्यनेनाऽणुत्वनिषेधोऽणोरणीयान् महतो महीयानित्यनेनाऽणुत्वविधानं च संगच्छते । निषेधविध्योर्भिन्नविषयत्वात् । दोषविशेषवशाल्लोकानुसारि यदणुत्वं प्रतीतं, तस्य निषेधात् । प्रमाणान्तराऽवेद्यमुपनिषदेकवेद्यस्याऽणुत्वस्य विधानात् । 'नाऽप्रतीतमि'ति । प्रसञ्जयितुमशक्यत्वेन निषेधाऽविषयत्वादप्रतीतं न निषिध्यत इत्यर्थः । ननु तर्ह्येकया श्रुत्या प्राप्तस्याऽपरया श्रुत्या निषेध इत्येव कुतो नोच्यत इत्याकाङ्क्षायामाहुः—'न श्रुतिप्रतीतमि'ति । समानबलत्वेन निषेधाऽनर्हत्वात् । विधानवैयर्थ्यापातात्सर्वत्र तथानुपलम्भाच्च न श्रुतिप्राप्तस्य निषेध इत्यर्थः । अत एवाऽजरममरमभयमित्यादिश्रुतिषु मरणनिषेधः । भ्रमात्प्रतीतस्यैव मरणस्य निषेधः । न हि कापि श्रुतिर्मरणं विधत्ते । अत एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि नेय इति न्यायात् सर्वत्रैव श्रुतौ ये धर्मा निषिध्यन्ते ते दोषवशात्प्रतीता एव । ये तु विधीयन्ते ते त्वलौकिकाः श्रुत्येकसमधिगम्या इति निर्दुष्टो निर्णयः ।

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीपः ।

ग्रहसापेक्षत्वादप्रतीतनिषेधो न भवतीत्यर्थः । न श्रुतिप्रतीतं श्रुत्या प्रतीतस्य श्रुत्या निषेधे विकल्प एव भवेन्नतु निषेध इत्यर्थः । नन्व'सदेवेदमग्र आसीत्' 'नासदासीन्नो सदासीदि'त्यादिश्रुतिभिः 'सत्यं ज्ञानमि'त्यादिश्रुतिप्रतीतस्य सत्यत्वादेरपि निषेधात्कथं श्रुतिप्रतीतं निषेद्धुमशक्यमित्यत आहुः—

तदज्ञानमेव भवेत् । न च सत्यत्वादिकं लोके नास्त्येव । व्यवहारमात्रत्वात् । कारणगतसत्यत्वं प्रपञ्चे भासत इति वाच्यम् । तर्हि कर्तृत्वं तथा कुतो नाङ्गीक्रियते ? । स्मृतिश्च स्वी-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

इदं शाब्दानुभवस्य ज्येष्ठप्रमाणजन्यत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु यत्र लौकिके शाब्द इयं रीतिस्तत्राऽपौरुषेये तस्मिन्का शङ्का प्रत्यक्षजन्यस्य बाधस्य । ननु लौकिकप्रमाणैर्निषेधाऽसंभवेऽपि 'निष्क्रियमि'त्यादिश्रुत्यैव तन्निषेध्यमिति चेत्—लोकनिषेधे प्रतारकत्वप्रसङ्गेन परमाप्तत्वं श्रुतेर्व्याहन्येत । उभयोरपि श्रुतित्वाऽविशेषाद्बाध्यबाधकभावाऽनुपपत्तेश्च । नन्वसदेवेदमग्र आसीन्नासदासीन्नो सदासीदि'त्यादिभ्यः सत्यत्वादेर्निषेधात्तस्य च श्रुत्येकसमधिगम्यत्वात्कथं श्रुतिप्रतीतं श्रुत्या न बाध्यत इत्याशङ्क्याऽऽहुः—'सत्यत्वादयश्च लौकिका' इति । निषिध्यन्त इति शेषः । सर्वेषां निषेधे बाधकमाह—'तत' इति । ब्रह्मणः सर्वेषां निषेधे तस्य ब्रह्मणोऽज्ञानमेव भवेत् । लक्षणनिरूपणाधीननिरूपणत्वाल्लक्ष्यस्य । तथा च 'तमेव विदित्वे'त्यादिश्रुतयो बाधिता एव भवेयुरित्यर्थः । ननु सांव्यावहारिकं तत्रास्त्येव । अस्तिभातिप्रियत्वेन तदन्वयस्यैव समन्वयसूत्रे वक्ष्यमाणत्वात् । तथा

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

निषेधे । तदज्ञानमेव ब्रह्माज्ञानमेव । केनचिद्रूपेण निरूपणं कर्तव्यं, सर्वनिषेधे निरूपणं कर्तुमशक्यत्वाच्छास्त्रवैयर्थ्यं स्वरूपलक्षणवैयर्थ्यं च स्यादिति भावः । 'न चे'ति । ब्रह्माऽज्ञानाऽभावाय श्रुतिप्रतीतमेव सत्यत्वं न लोकप्रतीतमिति न तस्य निषेध इति भावः । समाधानमाहुः—'तर्हीति । तर्हि श्रुतिप्रतीतनिषेधाऽस्वीकारे । तथा श्रुतिप्रतीतत्वादनिषेध्यम् । कर्तृत्वस्य स्मृतिप्रतीतत्वमप्याहुः—'कर्त्रे'ति ।

केशविद्विरचिता वेदान्तचन्द्रिका ।

धात्तदुभयनिषेधे तदज्ञानापत्तिरित्यर्थः । फलं च पूर्वोक्तमेव । ननु लोके तत्सत्यत्वादिकं नास्त्येव । मानं तु कारणगतस्यैव तस्यैतल्लौकिका एव त इति तत्राहुः—'न चे'ति । 'तर्ही'ति ब्रह्मण्यलौकिकतदङ्गीकारे । तथाऽलौकिकं कर्तृत्वम् । सत्यत्वसमानयोगक्षेमत्वात्कर्तृत्वस्येति हृदयम् । किञ्च तादृशकर्तृत्वाऽङ्गीकारे स्मृतिसङ्गतिस्वीकाररूपो गुणोऽपीत्याहुः—'स्मृतिश्चे'ति । ननु वस्तुस्वभाव-

श्रीकाल्लभट्टकृता गूढार्थदीपिका ।

एवमेव सर्वत्र निर्वाहात् । 'सत्यत्वादयश्च लौकिका' इति । यदि यतो वा इमानि भूतानीत्यादिश्रुतिसिद्धमपि कर्तृत्वं लौकिकं मत्वा ब्रह्मणि नाऽऽद्रियते, तदा तु सत्यं ज्ञानमिति श्रुतिसिद्धाः सत्यत्वादयोऽपि लौकिका इति मत्वा नाऽऽदरणीया इत्यर्थः । ननु तर्ह्यस्तिसत्यत्वादीनामप्यनादरणीयतेत्याशङ्क्याऽऽहुः—'ततः सर्वनिषेधे तदज्ञानमेव भवेदि'ति । धर्ममात्र-

भगवदीयश्रीमदिच्छारामप्रणीत- प्रदीपः ।

सत्यत्वादय इति । तथा च लौकिकसत्त्वादेरेवोक्तश्रुत्या निषेधः कृतो ननु श्रुतिप्रतीतसत्त्वादेरित्यर्थः । नन्वस्तिभातिप्रियमितिब्रह्मस्वरूपान्तःपातास्तित्वमेव सत्यत्वं लोके प्रतीयते तच्च सर्वत्र व्यापकब्रह्मस्वरूपान्वयेनैव प्रतीयते तच्च न लौकिकमित्याहुः—'न च सत्यत्वे'त्यादिना । व्यवहारेत्यादि । प्रपञ्चस्य मिथ्यात्वेन सत्यत्वव्यवहारनिर्वाहार्थम् । कारणगतमेव विवर्तोपादानगतमेव । तथा ब्रह्मगतम् । लोके

कृता भवति 'कर्ता कारयिता हरि'रिति। न चाऽऽरोपन्यायेन वक्तुं शक्यम्। तथा सत्यन्यस्य स्यात्। तत्र न प्रकृतेः। अग्रे स्वयमेव निषिध्यमानत्वात्। न जीवानाम्। अस्वातन्त्र्यात्।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

च तदेव पारमार्थिकं कारणगतं कार्ये भासत इत्याशङ्क्य प्रतिबन्दिदानेन समादधते—'न च सत्यश्चादी'ति। प्रतिबन्दिनमाह—'तर्ही'ति। तत्समानयोगक्षेमत्वात्कर्तृत्वस्य। अधिकं तत्रानुप्रविष्टं न तु तद्धानिरितिन्यायेनाऽऽह—'स्मृतिश्चे'ति। अत एव चशब्दः।

ननु नित्यशुद्धमुक्तस्वभावे ब्रह्मणि अन्यगतकर्तृत्वारोपाऽनुवादेनैव सर्वोपपत्तौ कस्मात्पारमार्थिकं तदभ्युपगम्यत' इत्यत आहुः—'न चे'ति। आरोपो ह्यसन्निहितविषयः परत्र पूर्वदृष्टावभासः। स चाऽत्र न संभवति। अन्यपदार्थे तस्य निरूपयितुमशक्यत्वात्। कथमशक्यत्वं'भजामेकामि'त्यादिना प्रकृतौ तस्य विद्यमानत्वादित्यत आहुः—'तत्र न प्रकृतेरि'ति। अत्रेदमानिर्देशेन पूर्वोक्तविशेषणद्वयविशिष्टस्य नामरूपाभ्यां व्याकृतस्य जगतः कर्तृत्वमचेतने न सम्भवति। यत्खलु नाम्ना रूपेण च व्याकृतं तच्चेतनकर्तृकं दृष्टं, यथा घटादि। चेतनो हि संकल्पात्मना बुद्धौ घट इति नाम्ना रूपेण च कम्बुग्रीवादिनाऽऽलिख्य घटं निष्पादयतीति नाऽचेतने तथाकृतिः सम्भवतीति न प्रधानस्य कर्तृत्वं सम्भावयितुमपि शक्यमित्यादियुक्तिभिः सूत्रकारेणैव निराकरिष्यमाणत्वादित्यर्थः। ननु चेतना इन्द्रादयो, ब्रह्मा वा जगज्जनयिष्यन्ति कृतं नित्यशुद्धमुक्तस्वभावेन ब्रह्मणेत्यत आह—'न जीवानामि'ति। तत्र हेतुमाहुः—'अस्वातन्त्र्यादि'ति। कानिचिद्भूतान्याकाशादीनि, कानिचिद्भौतिकानि देवतिर्यङ्मनुष्यादिरूपाण्यनेकलोकरूपाणि च। तेषामप्यद्भुताऽपरिमितज्ञानक्रियाशक्तीनां वि-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

ननु स्वरूपलक्षणभङ्गान्यथानुपपत्त्या सत्यत्वं ब्रह्मणि वक्तव्यं, कर्तृत्वं तु न वक्तव्यम्। तस्माद्वेत्यादिश्रुत्युक्तकर्तृत्वोपपत्तिस्त्वारोपादेवेत्याशङ्कते—'नचे'ति। शक्यमित्यनेनाऽन्वितम्। तथा सति अन्यगतकर्तृत्वस्य ब्रह्मण्यारोपे क्रियमाणे सति। कर्तृत्वस्याऽन्यगतत्वमेव नास्तीत्याहुः—'न प्रकृतेरि'ति। अग्रे ईक्षत्यधिकरणे। 'अस्वातन्त्र्यादि'ति। प्रपञ्चमध्यपातित्वेनोत्पत्तिस्थिति-

केश्चिद्विरचिता वेदान्तचन्द्रिका।

विरुद्धत्वाद्ब्रह्मणि पारिमार्थिकं कर्तृत्वं न वक्तुं शक्यम्। श्रुत्यादिसङ्गतिस्त्वन्यगतकर्तृत्वारोपादेवेत्याशङ्क्य समादधते—'न चे'त्यादि। 'तथा सती'ति। कर्तृत्वाऽऽरोपे सति। पारिमार्थिकं तदन्यस्य स्यात्। जडजीवावेव द्वावन्यपदार्थाविति पूर्वं जडे तन्निषेधन्ति—'तत्र ने'ति। अग्र ईक्षत्यधिकरणादौ। जीवानां निषेधन्ति—'ने'ति। 'अस्वातन्त्र्यादि'ति। कारणान्तरसापेक्षत्वात्।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

ब्रह्मगतकर्तृत्वसत्तासाधिकां स्मृतिमाहुः—'कर्ते'त्यादि। ननु नित्यशुद्धेत्याद्युक्तब्रह्मण्यन्यगतकर्तृत्वारोपेण श्रुत्यानुवादेपि कर्तृत्वव्यवहारोपपत्तेर्वास्तवकर्तृत्वस्वीकारे प्रयोजनाभाव इत्यत आहुः—'नचारोपे'त्यादि। वक्तुं शक्यं ब्रह्मणि कर्तृत्वमित्यर्थः। तथा सति अन्यगतजगत्कर्तृत्वस्य ब्रह्मणि आरोपे वक्तव्ये सति। तत्र ब्रह्मान्यपदार्थे जगत्कर्तृत्वं न सम्भवतीत्युपपादयन्ति—'तत्रे'त्यादिना। अग्रे आनन्दमयाधिकरणे द्वितीयाध्याये चेत्यर्थः। स्वयमेव व्यासचरणैरेव। नन्विन्द्रादिजीवगतमेव कर्तृत्वं ब्रह्मणि आरोप्यत इत्यत आहुः—'न जीवाना'मिति। अस्वातन्त्र्यात् 'स्वतन्त्रः कर्ते'ति-

नचाऽन्येषाम् । उभयनिषेधादेव । तस्मात् ब्रह्मगतमेव कर्तृत्वम् । एवं भोक्तृत्वमपि ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

स्मयजनिका या रचना, तद्युक्तानि ब्रह्माण्डानि, तेषां कोट्यस्तद्रूपस्ताऽत एव तैर्मनसापि विचारयितु-मशक्यस्तोत्पत्त्यादिकरणं ब्रह्मणः सर्वज्ञात्सर्वशक्तेरन्यस्मिन्न सम्भवति । केचिदिन्द्रादयो देवाः परमै-श्वर्यवन्तः केचित्तदायत्ताः । केचितिर्यञ्चो भयजनकाः केचिन्नेति । तथा मनुष्येषु केचित्सूदर्त्विगादयः कर्तार एव न भोक्तारः । केचित्तु पित्रादयः श्राद्धे भोक्तार एव न कर्तारः । तथा 'वैश्वानरं द्वाद-शकपालं निर्वपेत्पुत्रे जात' इत्युपक्रम्य 'यस्मिञ्जाते एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवती'त्यादौ चतुर्थाध्याये विचारितम् । तत्र पूतत्वादि किं पितुः फलमुत पुत्रस्येति । तत्र फलस्य कर्तृगामित्वनियमान्निर्वपेदिति प्रेरणाऽनुपपत्तेश्च पितुरेव फल-मिति प्राप्ते राद्धान्तितं 'यस्मिञ्जात एतामिष्टिं निर्वपति स पूत' इति जातगामित्वेन फलश्रवणात्पुत्रगाम्येव फलम् । न कर्तृगामि । तथा केचिन्नियतदेशोत्पादा यथा कृष्णमृगादयः । केचिन्नियतकालोत्पादा यथा कोकिलादयः । केचिन्नियतनिमित्ता यथा नवाम्बुदध्वानादिनिमित्ता बलाकागर्भादयः । केचित्प्रतिनियतक्रिया यथा ब्राह्मणानां यजनादयो, नेतरेषाम् । एवं केचि-द्दुःखिनः । केचित्सुखिनः । कदाचित्तद्विपर्ययश्चेत्याद्यद्भुतरचनायुक्तब्रह्माण्डकोटिरूपमेकस्या अपि शरीररचनायाः स्वरूपं तैर्मनसाप्याकलयितुमशक्यरचनं कुतस्तरां तत्करणसामर्थ्यमिति, न चेतना इन्द्रादयोऽस्य कर्तार इति सर्वज्ञं सर्वशक्तिनित्यशुद्धमुक्तस्वभावमलौकिकं ब्रह्मैव कारणमित्यलौकिकमेव कर्तृत्वमिति सिद्धम् ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

भङ्गकरणे सामर्थ्याऽभावादिति भावः । 'न चान्येषामि'ति । इन्द्रादीनामित्यर्थः । 'उभयनिषे-धादि'ति । इन्द्रादीनां जीवान्तःपातित्वाज्जडजीवयोरुभयोर्निषेधादेवाऽन्येषां निषेध इत्यर्थः । उपसंह-रन्ति—'तस्मादि'ति । 'कर्तृत्वमि'ति । श्रुतिप्रतिपाद्यमलौकिकमिति शेषः । एतावता प्रबन्धेन परब्रह्मणि फलवाक्योक्तकर्तृत्वं प्रतिपाद्य कार्यलक्षणस्वरूपलक्षणयोर्विरोधः परिहृतः । इदानीं फल-वाक्याऽनुक्तानां सर्वज्ञत्वादिधर्माणां सकलानां-तत्तच्छ्रुतिप्रतिपाद्यानां ब्रह्मणि निरूपयितुं-भूमिकां रचयन्ति—'एवमि'ति । 'भोक्तृत्वमि'ति । श्रुतिप्रतिपाद्यमलौकिकं भोक्तृत्वमित्यर्थः । स्मृति-

भागवतीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

स्मृतेः प्रपञ्चोत्पत्तिस्थितिभङ्गकरणे जीवानां प्रपञ्चमध्यपातित्वेन स्वातन्त्र्याभावादित्यर्थः । ननु जडचेतन-भिन्नानामन्येषामेव प्रपञ्चकर्तृत्वं ब्रह्मणि आरोप्यत इत्यत आहुः—'नचान्ये'षामिति । उभयनिषेधात् उभयेनैवान्येषां निषेधादित्यर्थः । ननूभयातिरिक्तस्याप्रसिद्धत्वात्कथमुभयेनान्येषां निषेध इति चेदित्थम् । तथाहि—जडजीवोभयं वस्तु, वेदेन वस्तुत्वेन प्रमीयमाणत्वादात्मवदितिकेवलान्वय्यनुमानेनोभयत्वा-वच्छेदेन वस्तुत्वे निर्धारितेऽर्थादुभयातिरिक्तवस्तुनो निषेधादिति बोध्यम् । ननूभयोर्वस्तुत्वप्रमापको वेदः क इति चेदयं 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इत्यादिरूपोऽवसेयः । ब्रह्मणि कर्तृत्वमुपसंहरन्ति—'तस्मा'दित्यादिना । कर्तृत्वतुल्यतया भोक्तृत्वमुपपादयन्ति—'एवमि'ति । तथा च यथा कर्तृत्वम-लौकिकं तथा ब्रह्मणि भोक्तृत्वमप्यलौकिकमवसेयमित्यर्थः । ननु ब्रह्मणि कर्तृत्वं नास्त्येव 'निष्क्रियं' 'असंगो ह्ययं पुरुष' इत्यादिश्रुतिभिर्निषेधादत आहुः—नचेत्यादि । कर्तृत्वं ब्रह्मसमानाधिकरणम-

न वा काचिच्छ्रुतिः कर्तृत्वं निषेधति । विरोधभानात्कल्प्या तु लौकिकपरा । फलवाक्येऽप्यश्रुतानां गुणोपसंहारः कर्तव्यः ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

ननु प्रकृतिजीवाऽतिरिक्तानामेव केषाञ्चित्कारणत्वं कस्मान्न भवतीत्यत आहुः—'**न चान्येषामि**'ति—तत्र हेतुमाहुः—'**उभये**'ति । तदतिरिक्तस्य वस्तुनोऽभावादित्यर्थः । उपसंहरन्ति—'**तस्मादि**'ति । अतिदिशन्ति—'**एवं भोक्तृत्वमपी**'ति । यथा कर्तृत्वमलौकिकं, तथा भोक्तृत्वमप्यलौकिकमेवाऽभ्युपगन्तव्यमित्यर्थः । ननूक्तं '**निष्क्रिय**''**असङ्गो ह्ययमि**'त्यादिश्रुतिभिः कर्तृत्वादिकं निषेध्यत इति, तत्राऽऽह—'**न वे**'ति । कर्तृत्वमलौकिकं कर्तृत्वम् । प्रतीतं हि निषेध्यमित्युक्तत्वाद्देहाद्यध्यासकृतस्यैव प्रतीतत्वेन तदेवाऽत्र निषिध्यत इति नाऽनुपपत्तिः काचित् । अलौकिकस्य निषेधे बाधकान्तरमाह—'**विरोधभानादि**'ति । ब्रह्मण औपनिषदत्वाद्विरुद्धधर्माश्रयत्वेन सर्वोपपत्तेर्विद्यमानत्वेऽपि बुद्धिदोषजन्यविरोधभानादलौकिकतन्निषेधपरत्वेन कल्प्या तु श्रुतिर्लौकिकपरा लौकिकप्रमाणपादानुगा भविष्यतीति महद्दूषणम् । श्रौतस्यार्थस्य लौकिकप्रमाणाऽनुसारित्वं नास्ती-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

त्यपि—**भुङ्क्ते भोजयते** हरिरिति भोक्तृत्वं प्रतिपादयति । अपिना सर्वज्ञत्वादीनां परिग्रहः । ननु यद्यलौकिककर्तृत्वं ब्रह्मणि स्वीक्रियते चेदकर्तृत्वप्रतिपादकानां श्रुतीनां कर्तृत्वनिषेधकत्वं स्यादित्यत आह—'**न वे**'ति । '**श्रुतिरि**'ति । 'असङ्गो ह्ययं पुरुष' इत्याद्यकर्तृत्वप्रतिपादिका श्रुतिरित्यर्थः । '**विरोधे**'ति । श्रुतिप्रतिपाद्ययोः कर्तृत्वाऽकर्तृत्वयोरचिन्त्यैश्वर्यवति भगवति विरोधाऽभानादित्यर्थः । ननु ब्रह्मण्यकर्तृत्वप्रतिपादकश्रुत्यन्यथाऽनुपपत्त्या साक्षात्कर्तृत्वनिषेधिका श्रुतिः कल्प्यत इत्यत आह—'**कल्प्ये**'ति । '**लौकिके**'ति । जीवनिष्ठं यल्लौकिककर्तृत्वं तन्निषेधपरत्वेन व्याख्येयेत्यर्थः ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

'**अन्येषामि**'ति । कालकर्मस्वभावानाम् । तदन्तर्भावादेवेति भावः । उपसंहरन्ति—'**तस्मादि**'ति । अतिदिशन्ति—'**एवमि**'ति । अलौकिककर्तृत्ववत्फलवाक्योक्तं सर्वकामभोक्तृत्वमलौकिकम् । अनध्यस्तमप्राकृतमिति यावत् । न हीतिकारिकार्थं विवृण्वन्ति—'**न ही**'ति । '**विरोधभानादि**'ति निष्कलादिश्रुतिविरोधभानरूपालिङ्गात्कल्प्या निषेधिका श्रुतिर्लौकिककर्तृत्वादिधर्मनिषेधिका भविष्यतीत्यर्थः । तथा च कालत्रयाऽबाध्यं स्वप्रकाशमपरिच्छिन्नं सर्वकर्तृत्वसर्वकामभोक्तृत्वाद्यलौकिकधर्मविशिष्टं परं ब्रह्मेति सिद्धम् ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

निषेधे तदज्ञानं, ब्रह्माऽज्ञानमेव भवेदित्यर्थः । '**विरोधभानात्कल्प्या त्वि**'ति । निरञ्जनत्वादिधर्मविरोधात्कल्पनीयाऽनुमेया तु श्रुतिर्लौकिकपरा । लौकिकधर्मनिषेधिका भविष्यतीत्यर्थः ।

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

लौकिककर्तृत्वमित्यर्थः । इत्थं च लौकिककर्तृत्वभोक्तृत्वयोर्निषेधेप्यलौकिके ब्रह्मण्यव्याहते एवेत्यर्थः । ननु निष्क्रियत्वासङ्गत्वादीनां ब्रह्मणि श्रुत्या प्रतिपादनादलौकिककर्तृत्वनिषेधिका श्रुतिः कल्प्या ।

१–कल्प्योऽपीत्यपि पाठ ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

त्याशयेन श्रुतिरेवाऽऽह—'**नैषा तर्केण मतिरापनेये**'ति । स्मृतिश्चा'**ऽलौकिकास्तु ये भावाः**'। '**नहि विरोध उभयमि**'त्यादिकमसुमेवार्थमाह ।

ननु '**ब्रह्मविदाप्नोती**'त्यादिसन्दर्भे कर्तृत्वोक्तावपि भोक्तृत्वस्याऽनुक्तत्वादेवं भोक्तृत्वमपीति कथं संगच्छत इत्याशङ्क्य कैमुत्येन समाधानमाहुः—'**फलवाक्येऽपी**'ति । अत्रायमर्थः । '**तमेव विदित्वे**'-त्यादिभिर्ब्रह्मज्ञानस्यैवाऽपरोक्षस्याऽमृतत्वसाधकत्वम् । तत्साधन, '**श्रोतव्यो मन्तव्यो निदिध्यासितव्य**' इति श्रुतेः श्रवणादिकमेव । तथा च निदिध्यासनरूपाण्युपासनानि विज्ञेयस्य पूर्वापरादिभेदरहितस्यैकरसस्य सैन्धवघनवदवधारितस्य ब्रह्मणः प्रतिवेदान्तं भिद्यन्ते न वेति सन्देहे सर्ववेदान्तप्रत्ययानि विज्ञानानि तस्मिंस्तस्मिन्वेदान्ते तान्येव तान्येव भवन्ति । संयोगरूपचोदनाख्यानां प्रतिवेदान्तं विशेषाऽभावात् । यथा मुख्यप्राणोपासनायां वाजसनेयिनां छन्दोगानां च प्रयोजनसंयोगो विशिष्ट एव ज्येष्ठश्च श्रेष्ठश्च स्वानां भवतीति । तथा रूपमप्युभयत्र तदेव विज्ञानस्य । विज्ञेयमेव हि रूपं विज्ञानस्य । तेन हि तन्निरूप्यते । यथा द्रव्यदैवतं यागस्य । ज्येष्ठत्वश्रेष्ठत्वादिविशेषणानामुभयत्रापि साम्यात् । तथा चोदनाऽपि 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेदे'ति समानैव । एवमाख्यापि सैव प्राणा विद्येति । तथा च संयोगादिभिर्हेतुभिर्विज्ञानानामेकत्वे यत्रैव वेदान्तरोदितगुणेभ्यो न्यूना गुणास्तत्र तत एवोपसंहर्तव्या इति गुणोपसंहारपादे निरूपयिष्यते । तथा फलवाक्येऽपि फलं ब्रह्म तत्प्रतिपादके ब्रह्मविदाप्नोतीत्यादिवाक्येऽपि, तैरेव हेतुभिस्तत्राश्रुतानां भोक्तृत्वसर्वगतत्वसर्वात्मत्वसर्वाधिपतित्वादीनां गुणानां गुणोपसंहारः फलसाधनीभूतविज्ञाननिष्ठगुणानामिवो-

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

ननु फलवाक्यनिवरणरूपात्तस्माद्वा एतस्मादित्यादिवाक्याद्भोक्तृत्वसर्वज्ञत्वादीनामप्रतीतेः कया रीत्या ब्रह्मणि तेषां धर्माणां विद्यमानत्वबोधो भवतीत्यत आह—'**फलवाक्ये**'ति । '**गुणोपसंहार**' इति । अत्र उक्तानां गुणानामुपासे यथोपसंहारस्तथाऽग्रे चराचराधिकरणीयविषयवाक्योक्त-

केनचिद्विरचिता वेदान्तचन्द्रिका ।

ननु फलवाक्ये तावद्धर्माऽश्रवणात्कथं तद्वैशिष्ट्यमूरीकार्यमित्यत आहुः—**फलवाक्येऽपी**'ति । अश्रुतानां कर्तृत्वादिधर्माणाम् । **गुणोपसंहारो** गुणानामुपसंहारः संग्रहः । अपिर्वक्ष्य-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ननु ब्रह्मविदाप्नोति परमिति फलवाक्यसन्दर्भे **तस्माद्वा एतस्मादि**त्यादिना कर्तृत्व श्रूयते । न तु भोक्तृत्वमपीति कथमेवं भोक्तृत्वमपीति भाष्यकृद्भिरुक्तमित्याशङ्क्य भाष्यकाराः समादधते—'**फलवाक्येऽप्यश्रुतानामि**'त्यादिना । गुणोपसंहारन्यायस्तृतीयाध्याये स्फुटः । तथाचैको

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीप ।

अलौकिककर्तृत्वस्याप्यसङ्गादिश्रुतिविरुद्धत्वादित्यत आहुः—'**विरोधे**'त्यादि । तथा च विरुद्धधर्माश्रयत्वस्य ब्रह्मणि सर्वोपनिषत्समन्वयानुरोधेनाङ्गीकाराद्विरोधाभावात्कल्प्या श्रुतिः लौकिकपरा लौकिकप्रमाणान्तःपातिन्येव भविष्यतीति नालौकिककर्तृत्वनिषेधनसमर्था भविष्यतीति भावः। नन्वलौकिककर्तृत्वस्य साधितत्वेपि एवं भोक्तृत्वमपीत्यनेन प्रतिज्ञातमलौकिकभोक्तृत्वं कथं सिध्येदित्याकाङ्क्षायां कैमुतिकन्यायेन तत्सिद्धिमाहुः । '**फलवाक्य**' इत्यादिना । फलवाक्येपि

तथाचायं सूत्रार्थः–जन्मादिर्येषामित्यवयवसमासादतद्गुणसंविज्ञानो बहुव्रीहिः। अथवा

गोस्वामिश्रीमन्पुरुषोत्तमविरचिता अणुभाष्यव्याख्या।

पसंहारः कर्तव्य इत्यर्थः। अत एवाऽपिशब्दोऽपि संगच्छते। तथा सति कैव कथा भोक्तृत्वमात्रस्येति कैमुतिकन्यायः प्रदर्शितः। 'न च कर्तृत्वमि'त्यारभ्य 'गुणोपसंहारः कर्तव्य' इत्यन्तो ग्रन्थोऽचिन्त्यैश्वर्यार्थनिरूपको ज्ञेयः।

नन्वत्र सूत्रव्याख्यानस्यैवोचितत्वेन श्रुतिवाक्यार्थनिरूपणं कुत्रोपयुज्यत इत्यत आहुः—'तथा चे'ति। तथा च वाक्यार्थे निश्चितेऽयमेव वाक्यार्थ एव सूत्रार्थ इत्यर्थः। अस्य भाष्यत्वेन तथोक्तिर्युक्तैव। एवं वाक्यार्थनिरूपणेन सूत्रार्थं निरूप्य तदेव दृढीकर्तुं सूत्राऽवयवान्व्याचक्षते। 'जन्म आदिर्येषामि'ति। तानीति शेषः। अवयवार्थकानां पदानां हि बहुव्रीहौ बहुधाऽतद्गुणसंविज्ञानत्वमेव प्रतीयते। संयोगसमवायाऽन्यसम्बन्धेन कार्याऽनन्वयितया गुणानां वृत्तिघटकीभूतपदाना-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

भोक्तृत्वस्य भूमाद्यधिकरणोक्तभूमात्वस्यानोपसंहारं कृत्वा तत्तद्धर्माणां ब्रह्मणि विद्यमानत्वमनया रीत्या बोध्यमिति दिक्। एतावता कार्यलक्षणस्य ब्रह्मणि समन्वयं कृत्वाऽतद्गुणसंविज्ञानबहुव्रीहिं स्वीकृत्य पुष्टिसृष्टिप्रकारेण सूत्रार्थमाहुः–'तथाचे'ति। जन्म आविर्भावो येषां प्रकाराणामित्यर्थः। 'अवयवस-

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

माणोपासनासमुच्चायकः। फलितमाहुः—'तथा चे'ति। 'अयमि'ति। उक्तप्रकारेणाऽनुपपत्त्यभावात्कर्तृत्वादिधर्मविशिष्टं ब्रह्मेत्येवंरूपो वक्ष्यमाणः, अन्ते सिद्ध्यतीति शेषः। तमेव विशदयन्तः सूत्राऽवयवान् व्याकुर्वन्ति—'जन्मादी'ति। जन्मादिः प्रथमोऽवयवो येषां जन्मस्थितिलयानां ते जन्मादि। अत्र सुपां सुलुगिति जसो लुक्। 'अवयवसमासादि'ति। अवयवत्वबोधकसमासात्। भावप्रधानोऽयं निर्देशः। तादृशसमासत्वादित्यर्थः। 'अतद्गुणसंविज्ञान' इति।

श्रीकाकमट्टकृता गूढार्थदीपिका।

साधारणो ब्रह्मधर्मो यत्र श्रूयते तत्राऽन्येषामनुक्तानामप्युपसंहारः कर्तव्यः। एवं सति फलवाक्ये ह्यश्रुतमपि भोक्तृत्वमुपसंहर्तव्यमिति बोधनीयम्। जन्म आदिर्येषामित्यवयवसमासा-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप।

'ब्रह्मविदाप्नोति परमि'तिफलवाक्येपि। 'अश्रुतानामि'त्यादि। तथाचोपसंहारपादे तत्तदुपासनानुगुणयोग्यगुणानां धर्माणामुपास्ये यथोपसंहारः क्रियते तथा फलवाक्योक्तफले परस्मिन्नपि माहात्म्यज्ञानोपयोगितया भोक्तृत्वसर्वगतत्वसर्वाधिपतित्वादिश्रुतिबोधितसर्वधर्माणामेवोपसहारः कर्तव्यः का कथा भोक्तृत्वस्येत्यर्थः।

एवं सिद्धान्तं निरूप्य सिद्धान्तस्य सूत्रतात्पर्यस्य विषयत्वं ज्ञापयितुं सूत्रार्थमाहुः—'तथाचे'त्यादिना। जन्मआदि प्रथमावयवरूप येषा ते जन्मादि। 'सुपां सुलुगि' ति जसो लुक्। तथा चादिपदस्य यत्पदार्थे उत्पत्तिस्थितिभङ्गत्वावच्छिन्ने लक्षणा। जन्मपदतात्पर्यग्राहक एतत्त्रित्वावच्छिन्नं यत इति बोधः। 'अतद्गुणे'त्यादि। तथा च यत्र समासघटकपदार्थतावच्छेदकधर्मप्रकारेण समासघटकपदार्थानां बोधस्तत्राजहल्लक्षणा, यथा लम्बकर्ण इत्यत्र लम्बकर्णत्वधर्माभ्यां लम्बकर्णयोर्बोधात्

जन्मप्रभृति सर्वे भावविकारा आदिशब्देन गृह्यन्ते । तथा च, जन्म च आदिश्चेत्येकव-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

मर्योऽन्यपदार्थे प्रधानेऽन्वेतीत्यतद्गुणसंविज्ञानत्वम् । अत एव 'सर्वादीनि सर्वनामानी'त्यत्र सर्वशब्दस्य सर्वनामसंज्ञाप्रयुक्तसुडागमसिद्ध्यर्थं तद्गुणसंविज्ञानो बहुव्रीहि'र्हलि सर्वेषामि'ति ज्ञापकबलेन स्वीकृतः । तस्मादवयववाचके बहुव्रीहौ ज्ञापकं विना न तद्गुणसंविज्ञानत्वमिति भावः ।

ननु जन्म आदिर्येषामिति विग्रहवाक्ये बहुवचनमनुपपन्नं, सूत्रे प्रत्यक्षत एवैकवचनस्य दृष्टत्वादिति चेत् । उच्यते । अयं बहुवचननिर्देशो बहुव्रीहेः कर्मधारयगर्भत्वसूचकः । अन्यथा

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

मासादि'ति भावप्रधानो निर्देशः । अवयवसमासत्वादित्यर्थः । तथा च जन्म आविर्भावः तद्रूपं यदवयवं तत् आदिः प्रथमं येषां स्थितिप्रलयाभिसंवेशानां प्रकाराणां ते जन्मादि । ननु जन्मादय इति वक्तव्ये कथं जन्मादीति चेत् । न । अस्य सूत्रस्य वेदरूपत्वं बोधयितुं छान्दसः **सुपां सुलुगिति** सूत्रेण जसो लुक् । ब्रह्मण इत्यधिकारलभ्यम् । यतो ब्रह्मणः सकाशादस्य जगतो जन्मादि आविर्भावतिरोभावादिप्रकारा भवन्तीति सूत्रार्थः । तथा च श्रुतिः-**सो अङ्ग वेद यदि वा न वेद । किंस्विद्वनं क उ स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदुतत् यदध्य तिष्ठद्भुवनानि धारयन् । ब्रह्म वनं ब्रह्म स वृक्ष**

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

एतल्लक्षणं तु अन्यपदार्थविशेषणीभूतस्य समस्यमानपदार्थस्य कार्योऽनन्वयितया ज्ञानविषयत्वम् । तथा च जन्मस्थितिलयरूपान्यपदार्थविशेषणीभूतस्य समस्यमानपदार्थस्य जन्मन आकाङ्क्षादिविरहेण क्रियान्वयाऽभावादस्याऽतद्गुणसंविज्ञानत्वम् । अथवाऽन्यपदार्थः स्थितिप्रलयाभिसंवेशाः । तद्विशेषणीभूत आदिपदार्थः । तद्विशेषणं चान्यव्यावर्तकतया जन्मतद्धर्मरूपप्राथम्यस्याऽपेक्षाबुद्धिजन्यस्याब्रह्मकर्तृकभवनक्रियायामन्वयः (?)। तदनन्वये द्वाराभावान्न तत्र जन्मनोऽप्यन्वय इत्यतद्गुणसंविज्ञानत्वमस्य समासस्येति ज्ञेयम् । जन्मादिभावविकारसंग्रहार्थं पक्षान्तरेणाऽपि विवृण्वन्ति– **'अथवे'**ति । अस्मिन्पक्ष आदिशब्दः प्रभृत्यर्थकः । प्रभृतिशब्दः सजातीयान्यवाचकः । **'सर्वे'** इति । जायतेऽस्ति

श्रीलालूभट्टकृता गूढार्थदीपिका ।

**दतद्गुणसंविज्ञानो बहुव्रीहिरिति** । **'अवयवसमासा'**दिति । अवयववाचकेन आदिशब्देन समासादित्यर्थः । आदिशब्दस्यावयववाचकत्वं **सर्वादीनि सर्वनामानीति** सूत्रे सिद्धम् । अत एव तत्त्वबोधिन्यामुक्तमादिशब्दोऽत्रावयववाचीति । तथा च जन्म आदि अवयवभूतं येषामिति लौकिकविग्रहेऽर्थः । येषामित्यन्यपदार्थे । येषां जन्मस्थितिभङ्गानामवयवभूतानां मध्ये आदि अवयवभूतमित्युत्पत्त्यादित्रयाणां निवेशः । एवं सति येषां जन्मस्थितिभङ्गानां मध्ये जन्म आदि अवयवभूतं

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

अजहल्लक्षणा । अत्र तूत्पत्तित्वस्थितित्वभङ्गत्वसमानाधिकरणत्रित्वेन रूपेण त्रयाणां बोधादुत्पत्तित्वादिधर्मत्रयस्य च **सामाधिकरण्यविशेषणतया** बोधाच्चै रूपैरुत्पत्त्यादीनामबोधादतद्गुणसंविज्ञानबहुव्रीहिरिति परिष्कृतोर्थः।बहुव्रीह्यपेक्षया द्वन्द्वस्य लघुत्वादाहुः—**अथवेत्यादि** । **सर्वे भावविकाराः** । जन्मप्रभृति जन्मावधीकृत्य'जायतेस्ति विपरिणमते वर्धतेपक्षीयते नश्यतीति' सिद्धाः

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

'जन्म आदिः यस्य तद्'इत्यमेव विग्रहः कृतः स्यात् । एवं चाऽतद्गुणसंविज्ञानपक्षे जन्मनोऽपि ब्रह्महेतुत्वप्रतिपत्तये कर्मधारयो गर्भस्थो वेय एकशेषेण । तथा च जन्म च तदादिश्च जन्मादिः । जन्म आदिर्येषां तानि जन्मादीनि । जन्मादिश्च जन्मादीनि च जन्मादीति विग्रहो ज्ञेयः । 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्'इति सूत्रेण बहुव्रीहेः शेष एकत्वद्वावस्य वैकल्पिकत्वप्रदर्शनार्थं येषामिति बहुवचननिर्देश इति भावः । अस्मिन्पक्षे गौरवमेकदेशक्लेशं च मनसि निधाय पक्षान्तरमाहुः—अथवे'त्यादिना समाहारद्वन्द्वेन । अत्रायं भावः । पूर्वस्मिन्पक्षे बहुव्रीहेः कर्मधारयगर्भस्यैकशेषस्य च गुरुत्वादुभयपदार्थनिष्ठसमाहारद्वन्द्वस्य लघुत्वाज्जन्म चादिश्चानयोः समाहारो जन्मादि । समाहारस्यैकत्वादेकवचनं 'स नपुंसकम्'इति सूत्रेण नपुंसकत्वं च । तथा चाऽस्मिन्पक्षे

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

आसीत् यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा विब्रवीमि वः । ब्रह्माध्यतिष्ठद्भुवनानि धारयन् इत्यादिश्रुत्या जगतो जन्मादिप्रकाराणां तत्तद्रूपेण जगद्रूपेण च भगवानेव क्रीडतीति पुष्टिसृष्टिप्रकारः सूत्रेण बोधित इति सर्वमनवद्यम् ।

ननु सर्वे तद्गुणसंविज्ञानत्वमत्र स्वीकुर्वन्तीति चेत् । न । अत्राऽतद्गुणसंविज्ञानत्वस्यैव स्वीकारात् । तथाहि—तद्गुणसंविज्ञानत्वं नाम तस्य अन्यपदार्थस्य गुणो विशेषणं तस्य संविज्ञानं विशेष्यान्वयिनान्वयित्वं येन । अन्वयित्वं च संयोगसमवायान्यतरसम्बन्धेन । यथा शुक्लवाससमानय लम्बकर्णमानयेत्यादौ । यत्र विशेषणस्य कार्यसम्बन्धाऽभावस्तत्रातद्गुणसंविज्ञानत्वम् । यथा चित्रगुमानय । तथा च प्रकृते जन्म आदिर्येषामित्यत्र आदिपदार्थः प्राथम्यं, तच्चापेक्षाबुद्धिजन्यमिति तस्य बुद्धिकर्तृकत्वं न ब्रह्मकर्तृकत्वमिति ब्रह्मकर्तृकभवनक्रियायां तस्य सम्बन्धाऽभावात्तद्द्वारा जन्मनोऽपि सम्बन्धाऽभावादतद्गुणसंविज्ञानत्वमिति मन्तव्यम् । अधिकं तु प्रकाशे द्रष्टव्यमिति दिक् । प्रवाहसृष्टिप्रकारेण सूत्रार्थमाहुः—'अथवेति' । 'भावविकारा'इति जायतेऽस्तिविपरिणमते वर्द्धतेऽपक्षीयते नश्यतीति वेदाङ्गनिरुक्तोक्ताः षड्भावविकारा इत्यर्थः । 'गृह्यन्त' इति ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ते जन्मस्थितिभङ्गा जन्मादिशब्दवाच्या इत्यतद्गुणसंविज्ञानबहुव्रीहावपि जन्मनो ग्रहणं भवति । अन्यपदार्थे जन्मनोऽपि निवेशात् । इत्थमन्यपदार्थे जन्मनो निवेशाऽभावे त्वतद्गुणसंविज्ञानबहुव्रीहिपक्षे जन्मनो ग्रहणं न स्यात् । लौकिकविग्रहवर्ति यत्स्वच्छन्दवाच्यस्यैव बहुव्रीहिवाच्यत्वात् । अनेकमन्यपदार्थे इत्यनुशासनात् । अतो जन्मनोऽप्यन्यपदार्थे निवेशं कृत्वा जन्मादिपदवाच्यत्वं साधनीयम् । अन्यपदार्थमात्रवाचकत्वमतद्गुणसंविज्ञानत्वमिति शाब्दिकवर्यैरङ्गीकारात् । अतःपरं द्वन्द्वसमासमाश्रित्य पक्षान्तरमाहुः—'अथवे'त्यादि ।'जन्मप्रभृति सर्वे' इति । जन्मप्रभृति आदि येषां, अस्ति वर्द्धते विपरिणमते अपक्षीयते नश्यतीति रूपाणां पञ्चभावविकाराणां ते जन्मप्रभृतयः पञ्चभावविकाराः । अस्यां भाष्यफक्किकायामतद्गुणसंविज्ञानबहुव्रीहिनिष्पन्नो जन्मप्रभृतिशब्दः । जन्मप्रभृतयश्च ते सर्वे च जन्मप्रभृतिसर्वे इति तत्पुरुषसमाससम्पन्नं जन्मप्रभृतिसर्वे इति पदम् । तथा चास्त्यादयो भावविकारा आदिशब्देन सूत्रे गृह्यन्त इति भाष्यफक्किकार्थः । आदिशब्देनास्त्यादयो भावविका-

द्भावः। आदिशब्दश्च धर्मवाची, स च स्वसम्बन्धिनं लक्षयति । तस्योभयसापेक्षत्वादुत्पत्ते-र्विद्यमानत्वादन्यानेव भावविकारानुपलक्षयतीत्यादिशब्देनान्ये भावविकाराः । अथवा

---

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या ।

आदिशब्दः प्रभृत्यर्थकत्वेन पूर्वोत्तरोभयसापेक्षत्वाज्जन्मनः साक्षान्निर्दिष्टत्वादुत्तरानवस्थित्यादीनेव भावविकारानुपलक्षयतीति ज्ञेयम् । जन्मनः प्रधानस्य समभिव्याहारात् । नहि केवलस्य विशेपत एतदुपलक्षकत्वं सम्भवति । समाहारद्वन्द्वपक्ष एव शिष्यबुद्धिवैशद्यार्थं प्रकारान्तरमाहुः—'अथ-वे'ति । घटप्रागभावध्वंसाऽधिकरणक्षणस्यैवोत्पत्त्यधिकरणत्वेन घटसत्ताक्षणस्यैतद्ध्वंसाधिकरणत्वात्

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

पञ्चेति शेषः । जन्मपदाऽऽदिपदयोर्द्वन्द्वेन जन्मादिपदस्य षड्वाचकत्वमाहुः—'तथा चे'ति । 'एकवद्भाव' इति । सर्वोऽपि द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भावः । 'धर्मवाची'ति । पूर्वोत्तरमीमांसकयोर्वृत्तिविषये सिद्धान्तस्यैक्याज्जातिशक्तिवादिनां मीमांसकानां मते प्राथम्यरूप-धर्मवाचीत्यर्थः । स्वसम्बन्धिनं प्राथम्यरूपधर्मसम्बन्धिनम् । ननु कथं लक्षयतीत्यत आहुः—'तस्ये'ति । 'उभयसापेक्षत्वादि'ति । जन्मनि यत्प्राथम्यं तदस्त्यादिपञ्चनिरूपितं जन्मन-श्चाश्रयत्वमित्येवंरीत्या प्राथम्यस्योभयसापेक्षत्वादित्यर्थः । 'आदिशब्देने'ति । यद्यप्यादिशब्दा-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

विपरिणमते वर्धतेऽपक्षीयते नश्यतीति षड्भावविकाराः । तद्ग्रहणे समासमाहुः—'तथा चे'ति । 'एकवद्भाव' इति । धर्मोऽत्रादित्वम् । प्राथम्यमिति यावत् । समाहारद्वन्द्व इत्यर्थः । आदि-शब्देन तद्ग्रहणे प्रकारं दर्शयन्ति—'आदिशब्दश्चे'ति । एकवद्भावो यस्मिन् । द्वन्द्वः स तथा सिद्ध इति । पूर्वतन्त्रे शब्दानां धर्मवाचकत्वसिद्धेः । 'स' इति । प्राथम्यरूपो धर्मः । तत्र कं लक्षयती-त्याकाङ्क्षायामाहुः—'तस्ये'ति । प्राथम्यरूपधर्मस्य । 'उभये'ति । स्वाधारस्वनिरूपकोभयसाका-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

राः कथं गृह्यन्त इत्याकाङ्क्षायामाहुः—'आदिशब्दश्च धर्मवाची'त्यादि । आदिशब्दः प्राथम्यधर्म-वाचीत्यर्थः । 'स च स्वसम्बधिनं लक्षयती'ति । प्राथम्यसम्बन्धिनं सत्तारूपं भावविकारं लक्षणया वक्ति । पञ्चसु भावविकारेषु सत्तारूपस्य धर्मस्य प्राथम्यात् । 'तस्योभयसापेक्षत्वादि'ति । किंनिष्ठ-मादित्वं किं प्रतियोगिकमादित्वमित्यमुभयसापेक्षत्वादित्यर्थः । सत्तानिष्ठमादित्वं वृद्ध्यादिप्रतियोगिक-मिति सत्तारूपो भावविकार आदिशब्दवाच्यः । अन्येषां वृद्धिविपरिणामापक्षयनाशानामुपलक्षको भवतीत्यादिशब्देनाऽस्त्यादयः पञ्चविकारा ग्राह्याः । नन्वस्तिरूपभावविकारापेक्षयापि जन्मनः प्राथम्याज्जन्मरूपो भावविकारः कुतो न गृह्यत इत्याशङ्क्याऽऽहुः—'उत्पत्तेर्विद्यमानत्वादि'ति । उ-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

षड्भावविकाराः जगज्जन्मोत्तरकालीनाः । एकवद्भावः समाहारद्वन्द्व इत्यर्थः । धर्मवाची पूर्वमीमांसायां गवादिपदानां गोत्वादिधर्मशक्तिन्यायेनादिपदस्यापि प्राथम्यरूपधर्मे शक्तिरित्यर्थः । विग्रहवाक्यमाहुः—तथा चेत्यादि । धर्मवाची प्राथम्यरूपधर्मवाची । स च प्राथम्यरूपधर्मश्च । स्वसम्बन्धिनं स्वाश्रयनिरूपकात्मकौ सम्बन्धिनौ बोधयतीत्यर्थः । बोधयतीति अनुमानविधया बोधयति । तथाहि प्राथम्यमाश्रयनिरूपकोभयसापेक्षं सम्बन्धिपदार्थत्वात् प्रतियोगितावदित्यनिरीत्या

जन्मनोऽनादित्वम्। तदाधारस्य पूर्वमविद्यमानत्वात्। अन्ये त्वादिमन्तः। तदाधारस्य पूर्वं

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

स्यात्तदनाधारत्वम्। स्थित्यादीनां तु तदुत्तरभावित्वेन तदाधारत्वादादिमत्त्वम्। अस्मिन्पक्षे आदिशब्दस्याधारवाचकत्वमिति ज्ञेयम्। तथाऽऽचादिशब्दः संस्थित्यादितदाधारभूतो योऽर्थस्तस्य सत्तारूपो धर्मस्तस्य तु वाची तेषामवश्यं तदुत्तरभाविनां स्थित्यादीनां धर्माणामुपलक्षक इत्यर्थः। द्वन्द्वपक्षेऽपि समाहारस्य समासार्थत्वे बहुव्रीहौ चाऽन्यपदार्थस्येतितुल्यत्वेन तद्गुणसंविज्ञानबहुव्रीहेः सर्ववादिसम्मतत्वेन च पक्षान्तरमाहुः—'अथवे'ति। इहागमनमाविर्भावः। प्रवेशस्तिरोभावः। अथवा, आगमनं स्थितिः प्रवेशस्तिरोभावस्तयोरवान्तरभेदाज्जन्म आदिर्येषामिति। विग्रहस्तु जन्म आदिर्यस्य तदिति बोध्यः। जन्मादीत्येकवचनात्। नन्वेवं स्थितिनाशयोरेवान्यपदार्थत्वेन द्विवचनस्यैवोचितत्वात्सूत्र एकवचनासङ्गतिरित्यत आहुः—'जात्यपेक्षये'ति। तथानुद्भूतावयवत्वेनैक-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

र्थस्योभयत्र सम्बन्धात् षड्भावविकारे लक्षणा वक्तुं शक्यते, तथापि जन्मपदस्य विद्यमानत्वात्पञ्चैव लक्षयतीत्यर्थः। नन्वेवं चेदुभयत्रसम्बन्धेन षट्स्वेव लक्षणाऽस्तु, जन्मपदं व्यर्थमित्यस्वरसादाह—'अथवे'ति। 'अनादित्वमि'ति। जन्मनः पूर्वं पश्चाभावादाश्रयं विना तस्य स्थितिर्नास्तीति जन्मन अनादित्वमित्यर्थः। इदं चासत्कार्यवादिमतेन। 'अन्ये त्वि'ति। अस्त्यादीत्यर्थः। तदा-

केश्चिद्विरचिता वेदान्तचन्द्रिका।

ङ्गत्वात् तत्र स्वाधारभूताया उत्पत्तेर्जन्मपदेनैवोक्तत्वादन्यानेव स्वनिरूपकांस्तांस्तथेति आदिशब्देनाऽन्येऽवस्थित्यादयः पञ्चविकारा लक्ष्याः। ग्राह्या इत्यर्थः। एवमादिपदव्याख्याने आदिपदेनाऽऽदित्वधर्मवत्तया लाघवेन जन्मनोऽपि गृहीतुं शक्यत्वेन जन्मपदवैयर्थ्यापत्तिरित्यरुच्याऽऽदिपदस्य जन्मातिरिक्तभावविकारोपलक्षकत्वं प्रकारान्तरेणाऽऽहुः—'अथवे'ति। 'तदाधारे'ति। जन्माधारस्य। जन्मनः पूर्वम्। तथात्वादिति हेतुः। अयमर्थः—घटप्रागभावध्वंसाधिकरणक्षणस्योत्पत्त्यधिकरणत्वेन घटसत्ताकालस्योत्पत्तेर्ध्वंसाधिकरणतयोत्पत्तेस्तदनाधारत्वेनाऽनादित्वम्। 'अन्य' इति। स्थित्यादयः पञ्च। आदिर्विद्यते येषां त आदिमन्तः। 'तदाधारे'ति। घटसत्ताकालस्य घटस्य

श्रीलालूभट्टकृता गूढार्थदीपिका।

त्पत्तिवाचकस्य जन्मशब्दस्य सूत्रे विद्यमानत्वात्तेनैव ग्रहणे पुनरादिशब्देन जन्मनो ग्रहणमिति भावः। आदिशब्देन जन्मनो ग्रहणाऽभावे हेत्वन्तरमाहुः—'अथवे'ति। जन्म च आदिश्चेति विग्रहोऽस्मिन्नपि पक्षे। 'जन्मनो नादित्वमि'ति। जन्मनः न आदित्वमिति पदच्छेदः। न आदिधर्मत्वमित्यर्थः। जन्मनि घटादिपदार्थनिष्ठादिधर्मत्वाऽभाव इत्यर्थः। जायते अस्ति वर्द्धते विपरिणमते अपक्षीयते

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीप.।

बोधयतीत्यर्थः। तस्य प्राथम्यस्य। उभयसापेक्षत्वात् स्वाश्रयतया जन्मनो निरूपकतयेतरेषां स्थित्यादिपदार्थानामित्येवमुभयसापेक्षत्वादित्यर्थः। विद्यमानत्वात् जन्मपदेन शक्त्यैव बोधनात्। अन्यानेव प्रपञ्चोत्पत्तिभिन्नानेव। भावविकारान् षड् भवविकारान्। लक्षयन्ति लक्षणया प्राथम्यनिरूपकान् बोधयतीत्यर्थः। तथा च जन्म जन्मनिष्ठप्राथम्यनिरूपकाः षड् भावविकाराश्च यतो भवन्तीत्यर्थः। समाहारद्वन्द्वपक्षमेव प्रकारान्तरेण प्रदर्शयन्ति—'अथवा जन्मन' इत्यादिना।

विद्यमानत्वात् । अत आदिशब्दः स्वाधारसद्धर्मवाची तद्धर्माणामुपलक्षकः। अथवा गमनप्र-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

वचनमिति भावः । तथा लिङ्गमपि लाघवाय सामान्यतो नपुंसकमेव निर्दिष्टम् । नन्वेवं सति येषामिति बहुवचनं भाष्ये कथं संगच्छत इति चेत्—अस्मिन्पक्षे तद्गुणसंविज्ञानो बहुव्रीहिरिति प्रदर्शनार्थमन्यपदार्थानामनेकविधत्वप्रदर्शनार्थं चेति बुध्यस्व । नन्वेवं जन्मनोऽन्यपदार्थप्रवेशेऽपि

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

धारस्य प्रपञ्चस्येति शेषः । 'स्वाधारसद्धर्मवाची'ति । स्वं आदित्वम् । तदाधारभूतः सद्धर्मः । अस्तिपदवाच्यो धर्मः अस्तित्व तस्य वाची तद्बोधकः । अन्यापेक्षया प्राथम्यात्तद्वाचकः - सन् विपरिणामादीनां लक्षक इत्यर्थः । एतेनाऽजहत्स्वार्था लक्षणा सूचिता । तथा च जन्मपदेन प्रथमो विकार, आदिपदेन पञ्च विकारा बोध्या इति न जन्मपदवैयर्थ्यमिति भावः ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

वा । 'अत'-इति । स्थित्यादीनामेवादिमत्त्वात् । 'स्वाधारे'ति । स्वं स्थित्यादि । तदाधारो घटादिः सत्पदार्थः । तद्धर्मः सत्तारूपो धर्मः । तद्वाची सन्नेव स्वाधारधर्माणां विपरिणामादीनामेवोपलक्षक इति न जन्मपदवैयर्थ्यमित्यर्थः । जन्मनोऽपि सङ्ग्रहार्थं तद्गुणसंविज्ञानपक्षमप्याहुः—'अथवे'ति । आगमन मुद्गमः । व्युच्चरणमिति यावत् । 'अभिसंविशन्ती'ति श्रुत्युक्तोऽभिसंवेशः । तयोर्भेद-रूपत्वादुत्पत्त्यादिषड्भावविकारा[णां]नप्यन्यपदार्थेषु संगृह्णेति शेषं पूरयित्वा जन्मोद्गम आदिर्येषा-मुत्पत्त्यादिप्रवेशान्तानामिति तद्गुणसंविज्ञानोऽयं बहुव्रीहिरित्यर्थः ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

नश्यति चेति यास्कोक्तेषु षट्सु भावविकारेषु प्रथमस्याऽपि जन्मनः न आदित्वम् । तत्र हेतुमाहुः—'तदाधारस्य पूर्वमविद्यमानत्वादि'ति । जन्मनः पूर्वं जन्माधारस्य घटादेरविद्यमानत्वादित्यर्थः । यावद्घटादेर्जन्म न जातं तावत्तस्य प्रागभावोऽस्तीति घटादेरविद्यमानत्वम् । तथा च धर्मिणोऽभावाज्जन्मा-ख्यो भावविकारः कस्य पदार्थस्यादिधर्मः स्यात् । अतो जन्मन आदित्वं नास्तीत्याशयः । ततश्चादिशब्देन जन्म न गृह्यते, किन्तु जन्मशब्देन जन्म ग्राह्यम् । आदिशब्देन सत्तारूपो विकारो ग्राह्यः । वृद्ध्या-दीनामप्यादिशब्दग्राह्यता नास्तीत्यत्र हेतुमाहुः—'अन्ये त्वादिमन्त' इति । अन्ये वृद्ध्यादयो भाव-विकारा आदिमन्तो न त्वादय इत्यर्थः । आदिमत्त्वे हेतुमाहुः—'तदाधारस्य पूर्वं विद्यमानत्वा-दि'ति । यद्यपि-सत्ताधारस्य घटस्य विद्यमानत्वात्सत्तारूपस्याऽपि विकारस्यादिमत्त्वमायाति, तथापि

श्रीमद्दीक्षितश्रीमदिच्छारामप्रणीत प्रदीप ।

अनादित्वं स्वाधिकरणक्षणपूर्वक्षणावृत्तिस्वाधारकत्वमेवानादित्वं, पारिभाषिकं तज्जन्मनोऽस्तीति-भावः । तदाधारस्य उत्पत्तेराधारस्य प्रपञ्चस्य । पूर्वं उत्पत्तेः पूर्वं, अविद्यमानत्वात् बहिःप्रकटस्य अविद्यमानत्वादित्यर्थः । तदाधारस्य स्थित्यादेराधारस्य । पूर्वं स्वाधिकरणक्षणपूर्वक्षणे । अतः यतो विद्यमानत्वमत इत्यर्थः । स्वाधारसद्धर्मवाची । तथाचात्र कल्पे आदिशब्दः स्थित्यादिभावविकारा-श्रयस्य सतः-प्रपञ्चस्य बोधकः । तत्र स्वशब्देन स्थित्यादयो भावविकाराः तदाधारः सन् प्रपञ्चस्तस्य धर्मः सत्त्वरूपस्तस्य वाची शक्त्या तस्य बोधकः । तद्धर्माणामित्यादि । सतः प्रपञ्चस्य धर्माणां स्थित्यादिभावविकाराणां लक्षकः, लक्षणया बोधक इत्यर्थः । एतादृशजन्मादि यत इति बोधः ।

वेशयोर्भेदाज्जन्म आदिर्येषामिति । जात्यपेक्षया एकवचनम् । जन्म तु श्रुतत्वात् सिद्धम् ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

वृत्तिपदार्थघटकत्वेनाऽन्यपदार्थत्वाऽभावादतद्गुणसंविज्ञानत्वमेव कस्मान्न भवतीत्यत आहुः—'जन्म त्वि'ति । 'श्रुतत्वादि'ति । ब्रह्मण इति शेषः । 'यतो वे'त्यादौ श्रुतत्वाद्ब्रह्मणः सकाशात्सिद्धम् । तथा च-यथा सर्वनामसंज्ञाप्रयुक्तसुडागमलिङ्गेन 'हलि सर्वेषामि'त्यनेन सर्वादीनीत्यत्र- तद्गुणसंविज्ञानो बहुव्रीहिस्तथाऽत्रापि श्रौतेन लिङ्गेन तद्गुणसंविज्ञान इत्यर्थः ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

इदानीं मर्यादा सृष्टिप्रकारेण तद्गुणसंविज्ञानपक्षमाश्रित्य सूत्रार्थमाहुः—'अथवे'ति । 'गमनप्रवेशयोरि'ति । जन्मप्रलययोर्मध्ये यत्कार्यस्वरूपं तस्येत्यर्थः । भेदात् कारणतो भेदात् । 'जन्मे'ति । जन्म आदिर्येषां तज्जातीयं जन्मादि । जातिसूत्रविकारत्वम् । एवंच यतो ब्रह्मणः सकाशादस्य जगतो जन्मादिषड्भावविकारा भवन्तीत्यर्थः । तथा च ब्रह्मकर्तृकभवनक्रियायां विकाराणामन्वयात्तद्गुणसंविज्ञानबहुव्रीहिरिति भावः । अस्मिन्नर्थे कारणमाहुः—'श्रुतत्वादि'ति । 'यस्मिन्निदं सं च विचैति सर्वं यस्मिन् देवा अधि सर्वे निषेदु'रित्यु-

केशिद्विरचिता वेदान्तचन्द्रिका ।

नन्वेवं सूत्र एकवचनाऽसङ्गतिरित्यत आहुः—'जात्यपेक्षये'ति । 'ब्राह्मणो मामकी तनु'रित्यादिवत् । जातिश्चाऽत्र सर्वेषु क्रियात्वरूपा । अत्र भाष्ये येषामिति बहुवचनं त्वन्यपदार्थस्याऽनेकविधत्वप्रदर्शनार्थम् । यद्वा येषामिति न विग्रहः किन्त्वर्थकथनमात्रम् । स तु जन्मादिरस्य जन्मादिजातीयस्य धर्मस्य तदेतत्सूचनार्थमेव जात्यपेक्षयेति ग्रन्थः । अत एव लिङ्गमपि सामान्याऽभिप्राय कृतनपुंसकमेव निर्दिष्टम् । ननूद्गमरूपजन्मनि किंप्रमाणमित्यत आहुः—'जन्मस्त्वि'ति । 'श्रुतत्वादि'ति । भृगुवरुणश्रुतिश्रुतत्वात्सिद्धं निर्विवादम् । एतद्यथा तथा प्रपञ्चितं श्रीमद्गोस्वामिचरणैर्विद्वदाभरणे । एवं पक्षत्रयेण सूत्रं व्याख्यायर्जुमार्गेण व्याकुर्वन्ति—

श्रीलालूभट्टकृता गूढार्थदीपिका ।

सर्वेषु धर्मेषु सत्ताया एव प्राथम्यात्सत्तारूपो विकार आदिशब्दवाच्य इत्यर्थः । तदाहुः—'अत्र आदिशब्दः स्वाधारसद्धर्मवाची'ति । स्वः घटादिः--आधारो यस्य, एतादृशो यः सद्धर्मः सत्तारूपो धर्मस्तस्य वाचकः आदिशब्द इत्यर्थः । एवंसति जन्मादिपदे जन्मपदेन जन्म ग्राह्यमादिशब्देन सत्ता ग्राह्येति, विकारद्वयवाचक जन्मादिपदं समाहारद्वन्द्वनिर्मितमिति फलितम् । वृद्ध्यादिभावविकाराणां चतुर्णां ग्रहण उपायमाहुः—'तद्धर्माणामुपलक्षक' इति । तद्धर्माणां वृद्ध्यादिरूपाणामुपलक्षक इत्यर्थः । उपलक्षणविधया वृद्ध्यादयो गृह्यन्ते । इत्थं जन्मादिपदेन षडपि भावविकारा गृहीता इति निर्दुष्टमखिलम् । अतःपरं तद्गुणसंविज्ञानबहुव्रीहिमादृत्य जन्मादिपदस्यार्थ उच्यते । 'गमनप्रवेशयोर्भेदादि'ति । 'यतो वा इमानि भूतानि जायन्ते

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीपः ।

बहुसम्मतत्वेन तद्गुणबहुव्रीहिपक्षमाश्रित्याहुः—'अथवे'त्यादि । गमनेत्यादि । गमनमाविर्भावरूपोत्पत्तिः, प्रवेशो भङ्गस्तयोर्भेदात् । भिन्नार्थबोधकं 'जन्म' 'आदि' इतिपदद्वयमुपात्तमित्यर्थः । जन्म जन्मपदार्थः । आदिः अनादित्वाश्रयः । येषामिति बहुवचनं तद्गुणसंविज्ञानेन बहूनां सङ्ग्रहा-

**अथवा किमनया कुसृष्ट्या, जन्म आद्यस्य आकाशस्य यत इति। 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इत्येव विचार्यते । फलसम्बन्धित्वात् । तेनैकत्र सिद्धः शास्त्रार्थः प्रकारा-**

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

एवं पक्षत्रयेण जन्मादीत्यवयव व्याख्याय ततोऽपि लाघवप्रदर्शनार्थमृजुमार्गेण व्याख्यानमाहुः—'अथवे'ति । कुत्सितानां गौरवलक्षणादियुक्तानां सृष्टिः कुसृष्टिः । आदौ भव आद्यः । ननु 'सोऽश्नुत' इत्यत्र प्रथमान्तेन तच्छब्देन जीवस्यैवोक्तत्वात्तस्मादित्यनेन तस्यैव सन्निहितस्य परामर्शादात्मशब्देन च सामानाधिकरण्यादैश्वर्यादिविशिष्टस्य कस्यचिद्भूतभौतिकादिकर्तृत्वं निःसन्दिग्धमेव प्रतीयत इति कथमेतस्य जन्मादिसूत्रविषयत्वं सन्देहाऽभावादित्यत आहुः—'**फलसम्बन्धित्वादि**'ति । नहीदं वाक्यं जीवपरमेवेति वक्तुं शक्यम् । ब्रह्मपरत्वस्याऽपि सम्भावयितुं

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

पनिपदि श्रुतत्वादित्यर्थः । '**सिद्धमि**'ति । **यत्सिद्धं तदन्यं सजातीयं स्मारयतीति** न्यायात्सचरस्य प्रतिसचरस्मारकत्व युक्तमेवेति भावः । पुष्टिप्रवाहमर्यादाप्रकारेण व्याख्यायैषां कथनस्याऽनतिप्रयोजनत्वान्निश्चयगौरवाचेत्यरुच्या प्रकारान्तरेण सूत्रार्थमाहुः—'**अथवे**'ति । ननु सूत्रात्केवलाकाशस्यैवोत्पत्तिः प्रतीयते, नतु जगदुत्पत्तिः । एवं च केवलाकाशजनकत्वस्यैव

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

'**अथवे**'ति । '**कुसृष्ट्ये**'ति । कुत्सितानां प्रतिपत्तिगौरवलक्षणादिदोषयुक्तानामर्थानां सृष्टिः कल्पना तया किम् । न किमपीत्यर्थः । '**आद्यस्ये**'ति । आदौ भव आद्यः । तस्याऽऽकाशस्य । ननु **यतो**

श्रीलालूभट्टकृता सूत्रार्थदीपिका ।

**येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती**'ति श्रुतौ प्रयन्ति गमनं कुर्वन्ति । यद्ब्रह्म प्रविशन्तीत्यर्थस्य विविक्षया प्रयन्ति प्रविशन्तीति गमनप्रवेशनक्रिये उक्ते । तयोर्गमनप्रवेशयोर्भेदाज्जन्म आदिर्येषामिति बहुवचनम् । तेन पदेन लौकिको विग्रहः कर्तव्य इत्यर्थः । एवं सति यतो वा इमानीतिश्रुतौ चत्वारः पदार्था उक्ताः । जन्मजीवनगमनप्रवेशाख्याः । तेषां **सूचनार्थं** लौकिकविग्रहवाक्ये येषामिति बहुवचनाऽऽग्रहो भाष्यकाराणाम् । तथा च जन्म आदिर्येषां **यतो वा इमानीति** श्रुत्युक्तजीवनगमनप्रवेशनानां, ते जीवनगमनप्रवेशनाख्या जन्मादिपदवाच्या इत्यर्थः । अन्यथा प्रवेशनिर्गमनयोर्भेदाऽनङ्गीकारे जन्म आदिः ययोः स्थितिभङ्गयोरिति विग्रहः स्यात् । अस्मदुक्तरीत्या तु **यतो वा इमानि भूतानि जायन्त** इति श्रुतौ जन्मजीवनगमनप्रवेशा य उक्तास्तेषां चतुर्णामपि ग्रहणार्थं जन्म आदि येषामिति विग्रहेण जन्मादीनां चतुर्णां ब्रह्मकर्तृकत्वं साध्यते । चतुर्णां ब्रह्मकर्तृकत्वबोधनाय येषामिति बहुवचनं भाष्ये । नन्वनेक**मन्यपदार्थे** इत्यनुशासनादन्यपदार्थबोधो बहुव्रीहिणा भवेत् । अन्यपदार्थाश्च येषामित्यनेनोक्ता जीवनगमनप्रवेशास्तेषामेवान्न बोधो भविष्यति न जन्मन इत्याशङ्क्य समादधते—'जन्म तु श्रुत-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

र्थमुक्तं, नतु विग्रहषट्कमपि । सूत्रे एकवचनस्यैव सत्त्वात् । विग्रहवाक्य तु जन्म आदिर्यस्य तत् इत्येवंरूपम् । नन्वेकवचनेन सौत्रेण जन्मादिषण्णां बोधः कथमित्यत आहुः—'**जात्ये**'त्यादि । तथा च विकारत्वधर्मस्यैक्यादेकवचनमिति भावः । नन्वत्राप्यादिपदस्य षट्समुदायत्वावच्छिन्ने लक्षणया सर्वेषां

न्तरेपि। 'यतो वा इमानी'त्यत्र विस्फुलिङ्गवत् सर्वोत्पत्तिः। अत्र तु क्रमेणेति विशेषः। एतेन

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

शक्यत्वात्। तत्र हेतुः। 'फलसम्बन्धित्वादि'ति। महावाक्यप्रकरणपठितस्याऽवान्तरवाक्यस्य तेनापि संदेहकार्य्यांत्तरसम्बन्धित्वम्। तथा च पक्षद्वयसम्भावनस्याऽत्र प्रसक्तत्वाच्छास्त्रस्याऽवकाश इति भावः। नन्वेतस्य जन्मादिसूत्रविषयत्वे यतो वेत्यत्र कथं निर्णय इत्यत आह—'तेने-क्त्रे'ति। 'तत्तेजोऽसृजत स वायुमसृजते'त्यादौ सर्व एव प्रकारा 'आकाशं वायुं च सृष्ट्वाऽऽ-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

ब्रह्मलक्षणत्वमायाति, न [1] जगज्जन्मादिकर्तृत्वस्येति यतो वेत्यादिवाक्ये ब्रह्मभेदापत्तिः स्यादित्यत आह—'तेने'ति। येन यतो वेत्यादि विषयवाक्यत्वेनाऽऽदृतं तेनाप्याकाशादिवाक्यसङ्ग्रहार्थमेवमङ्गीकार्यम्। अन्यथाऽऽकाशादिवाक्ये ब्रह्मान्तराऽऽपत्तिः स्यादिति भावः। 'सिद्ध' इति। दिक्प्रदर्शनरीत्याऽन्यान्यपि वाक्यान्यत्र बोद्धव्यानीति ब्रह्मणो जगज्जन्मादिकर्तृत्वं सिद्धमिति शास्त्रार्थः सिद्ध इत्यर्थः। 'प्रकारान्तरेऽपी'ति। बोध्य इति शेषः। ननु कुत्र प्रकारान्तर इत्यत आह—'यतो वे'ति। भृगुप्रपाठक इति शेषः। 'विशेष' इति। बोध्य इति शेषः।

केनचिद्विरचिता वेदान्तचन्द्रिका।

वा इमानीतिवाक्यं विहायेदं किमिति विचार्यत इत्यत आहुः—'फले'ति। परविवरणरूपत्वात्तु तत्वम्। परस्यैव च फलत्वात्। एतेनाऽस्य प्रधानवाक्यत्वमप्युक्तं भवति। तथा च गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति न्यायादेतद्विचारस्यैवमुक्तत्वादिति भावः। नन्वस्याऽस्य सूत्रस्य विषयत्वे 'यतो वा इमानी'त्यादौ कथं निर्णय इत्यत आहुः—'तेने'ति। एकत्रोत्पत्तिप्रकारे।

श्रीलालूभट्टकृता गूढार्थदीपिका।

त्वात्सिद्धमि'ति। बहुव्रीहिणाऽन्यपदार्थस्योक्तत्वाज्जीवनगमनप्रवेशानां ग्रहणम्। जन्म तु, श्रुतत्वाज्जन्मादिपदे श्रुतत्वात्सिद्धमित्यर्थः। समासघटकीभूतत्वेऽपि तद्गुणसंविज्ञानपक्षाऽऽश्रयणात्समस्तपदान्तर्गतजन्मपदवाच्यस्याऽपि जन्मनो ग्रहणं सर्वादीनि सर्वनामानीति पाणिनिसूत्रे सर्वादिपदान्तर्गतसर्वपदवाच्यस्यापि सर्वशब्दस्य ग्रहणवदिति हार्दम्। स चासौ गुणश्च तद्गुणः। तस्य संविज्ञानमुपयोगसमये प्रत्यक्षीभावो यत्र स तद्गुणसंविज्ञान इति लक्षणात्। उदाहरणं तु लोहितोष्णीषा ऋत्विजः प्रचरन्ति। लम्बकर्णमानयेत्यादि। 'जात्यपेक्षयैकवचनमि'ति। जन्म आदिर्येषामिति विग्रहवाक्ये जन्मपद एकवचनं जात्यपेक्षयेत्यर्थः। यतो वा इमानि

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

बोधेपि जन्मनो जन्मत्वेन रूपेणाबोधादतद्गुणसंविज्ञान एवं भवेदत आहुः—'जन्मे'त्यादि। श्रुतत्वात् जन्म तु 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुत्युपस्थापितत्वात् जन्मविशिष्टजन्मनिष्ठादितानिरूपकसमुदायत्वावच्छिन्ने आदिपदलक्षणातात्पर्यात्तद्गुणसंविज्ञान एवमिहापीत्यर्थः। ऋजुपक्षान्तरेण सूत्रार्थमाहुः—'किमनर्थ'त्यादिना। इत्येवं ब्रह्मणः सकाशात्सर्वस्योत्पत्तिबोधकमिदमेव वाक्यं विचार्यते। विषयत्वेन 'जन्माद्यस्य यत' इतिसूत्रेणेत्यर्थः। ननु बहूनां तादृशवाक्यानां मध्य इदमेव

---

1 ननु का उभयत्रापि शास्त्रार्थस्यैक्यात् कुत्रैक्यं गमनदिच्छयोत्पत्तिप्रकारभेद इति विशेष इत्यर्थः इत्यर्थाः सूचिता इति व्यासचरणैरित्यादिः। अत एव मयापि व्यस्याता इत्यर्थः। इत्यत आहुः—पुस्तकाऽशुद्धेरादर्शोऽयम्।

सर्व एव प्रकाराः सूचिता वेदितव्याः । ब्रह्मविचारे ब्रह्मणोऽप्यधिकृतत्वात्तद्ब्रह्मेत्यायाति ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

काशं वा सृष्ट्वे'त्यादयः सर्व एव ज्ञेयाः । तथा च सर्वेषां सृष्टिवाक्यानामविरोधः सिद्ध्यतीति भावः । ननु सूत्रे ब्रह्मशब्दाऽभावादनुपपत्तिप्रतिसन्धानाऽभावेनाऽध्याहारस्याऽपि वक्तुमशक्यत्वाच्च कथमेतस्य फलवाक्योक्ततन्निष्ठकर्तृत्वनिश्चायकत्वमित्यत आहु.—'ब्रह्मविचार' इति । यत्तदोर्नित्यसम्बन्धात्त-च्छब्दस्य प्रतिज्ञासूत्रेऽधिकृतस्य ब्रह्मण एव सन्निहितत्वाद्विशेषेणोपस्थापकत्वमिति नाऽध्याहार इत्यर्थ. ।

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

ननु सूत्रे किमर्थमयं श्लिष्टप्रयोग कृत' । येनानेकव्याख्यान सम्भू(क्त)तमत आहु.—'एतेने'ति । जन्माद्यस्येति श्लिष्टप्रयोगेणेत्यर्थ । 'प्रकारा' इति । स्वमते साक्षात्कर्तृत्वम् । परमते तटस्थत्व, कुत्रचित् क्रमेणेति प्रकाराः ।

ननु लक्ष्ये लक्षणसमन्वयार्थ लक्ष्यबोधक पदमवश्य वक्तव्यमत आहु.—'ब्रह्मे'ति । 'आयाती'ति, अर्थादित्यादि. । एतावता लक्षणांशो व्याख्यात । प्रमाणांश व्याख्यातु-

केनचिद्विरचिता वेदान्तचन्द्रिका ।

शास्त्रार्थः कर्तृस्वरूप. । प्रकारान्तर उत्पत्तिस्थितिप्रलयनिरूपणरूपप्रकारान्तरे । अत्र ज्ञातव्य इति शेष. । वाक्यद्वयोक्तोत्पत्तिप्रकारे यो विशेषस्तमप्याहु —'यतो वे'त्यादिना । चतुर्धा सूत्रविवरण-फलमाहु.—'एतेने'ति । चतुर्धा सूत्रविवरणेन । सूत्रे श्लिष्टप्रयोगेन वेदोक्ता साक्षात्परम्पराभेदेन ये सृष्टिप्रकारा. सूचितास्ते ज्ञातव्या इत्यर्थ । ननु पूर्व ब्रह्मसम्बन्धिविचारस्यैवाऽधिकृतत्वेन ब्रह्म-णोऽनधिकृतत्वादत्र तद्ब्रह्मेत्यध्याहृत भविष्यतीत्याशङ्कामपाकुर्वन्ति—'ब्रह्मविचारे'ति । यत्त-

श्रीबालभट्टकृता गूढार्थदीपिका ।

भूतानि जायन्ते इति श्रुतौ यत्प्रयन्त्यभिसंविशन्तीति गमनप्रवेशयोर्भेद उक्तस्तत्सूचनार्थं भाष्ये जन्म आदिर्येषामिति बहुवचनम् । तथाऽस्मिन्नेव विग्रहवाक्ये जात्यपेक्षया जन्मेत्येकवचनमित्यर्थ. । अयमर्थ. । यतो वेति श्रुतौ भूतानि जायन्त इति बहुवचनाद्भूतप्रतियोगिकानि जन्मान्यपि बहूनीति जन्मपदे बहुवचन प्राप्नोति अस्ति तु जन्मेत्येकवचनमित्याशङ्क्य जन्मपद एकवचन साधयन्ति । 'जात्यपेक्षया एकवचनमि'ति । सकलेषु भूतप्रतियोगिकजन्मसु जन्मरूपा जातिरेकैवेति जन्मपद एकवचनमुचितमतो जन्म आदिर्येषामिति विग्रह कर्तव्य इति हार्दम् । जन्म आदिर्येषामिति विग्रहेऽन्यपदस्य बहुवचनान्तत्वाज्जन्मादिशब्देऽपि प्रथमाबहुवचनरूपो जस् सुपां सुलुगिति वैदिकप्रक्रियासूत्रेण लुप्त । अतो जन्मादीति प्रयोग सूत्रे साधु. ।

'फलसंबन्धत्वादि'ति । आरम्भे ब्रह्मविदाप्नोति परमिति फलस्योक्तत्वात्तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्येव सृष्टिवाक्य मुख्यमिति तदेव विचार्यत इति भाव. ।

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

विषयत्वेन विचार्यतेऽत्र किं गमकमित्यत आहु.—'फले'त्यादि । 'ब्रह्मविदाप्नोति परमि'तिफलबोध-कवाक्यघटितप्रपाठकान्तर्गतत्वेन तस्य प्राधान्यादिति भाव । नन्वत्रैवमेवास्तु अन्यत्र तु 'यतो वा इमानी'त्यादिस्थलेषु सर्वत्र तपआदिनिष्पन्नस्य विभूतिरूपस्य वा जीवस्यैव कर्तृत्वमस्त्वित्यत आहु.—

न त्वध्याहारः। शास्त्रे योनिः शास्त्रयोनिः। शास्त्रोक्तकारणत्वादित्यर्थः। शास्तीति शास्त्रं

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

ननु ब्रह्मणोऽधिकृतत्वेऽपि नित्यशुद्धबुद्धमुक्तस्वभावत्वात्कथमेतस्य कर्तृत्वमुपपद्यत इत्याशङ्क्य शिष्टेन सूत्रावयवेन तत्समाधानमाह—'शास्त्रयोनित्वादि'ति। ब्रह्मणः श्रुत्येकसमधिगम्यत्वेन कारणत्वस्याऽपि तथात्वान्नानुपपत्तिरिति भावः। ननु सूत्रे शास्त्रपदोपादानात्काणादन्यायमायावादादीनामपि प्रसक्तेस्तत्रैव कथमुक्तेन प्रकारेण कारणत्वोक्तिरित्याशङ्क्य शास्त्रशब्दार्थमाह—'शास्ती'ति। शासनं सन्मार्गे स्थापनम्। नहि काणादादीनां सन्मार्गे स्थापनं कार्यत्वेन वक्तुं शक्यम्। तेषां मुक्तमोहितबुद्धित्वेन च वेदविरुद्धत्वेन मोहार्थत्वात्। ननु वेदशब्दस्य काण्डद्वयवाचकत्वेनोत्तरका-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

माहुः—'शास्त्रे'त्यादिना। शास्त्र इति विषयसप्तमी। विषयत्वं च - प्रतिपाद्यत्वमित्यभिप्रायेणाऽऽहुः—'शास्त्रोक्ते'ति। वेदप्रतिपाद्येत्यर्थः। 'वेद' इति। प्रभुसम्मितः सुहृत्सम्मितः कान्तासम्मितश्चेति शब्दस्य त्रिविधत्वादयं प्रभुसम्मितः शब्द इत्यर्थः। एवं च तदाज्ञाभङ्गो न कर्तव्य इति भावः। ननूपनिषद्वाक्यमेवात्र प्रमाणमिति वक्तव्ये वेदसामान्यग्रहणं किम-

केश्चिद्विरचिता वेदान्तचन्द्रिका।

दोर्नित्यसम्बन्धादर्थादेव तद्बोधो भविष्यतीति नाऽध्याहारापेक्षापीत्याशयः। एवं लक्षणबोधकांशाऽऽधभूतं सूत्रांशं व्याख्याय प्रमाणबोधकं हेतुभूतं सूत्रांशं व्याकुर्वन्ति—'शास्त्रे योनिरि'ति। विषयसप्तमीयम्। विषयत्वं चाऽत्र प्रतिपाद्यत्वम्। तथा च शास्त्रे हि सृष्ट्यादिकर्तृत्वं ब्रह्मण एव प्रतिपाद्यते। अतः शास्त्रप्रतिपादितसृष्ट्यादिकर्तृत्वाधदस्य जन्मादिकर्तृ तदेव ब्रह्मेति सूत्रार्थः पर्यवसितो ज्ञेयः। एतेन ब्रह्म श्रुत्येकसमधिगम्यमिति तत्कर्तृत्वमपि तथेति नाऽनुमानगम्यं कर्तृत्वं सद्भिरादर्तव्यमिति सूचितमतो नाऽनुपपत्तिरिति भावः। अन्यत्र शास्त्रत्वव्यवहारो गौण इति बोधयितुमाहुः—'शास्ती'ति। एतदुक्तमेवाऽऽदरणीयं सद्भिरिति ज्ञापनार्थमेव वेदपदं परित्यज्य शास्त्र-

श्रीलाल्लुभट्टकृता गूढार्थदीपिका।

शास्त्रे योनिः शास्त्रयोनिरिति सप्तमीतत्पुरुषः। शास्त्रे इति सप्तम्या शास्त्रस्याधिकरणत्वम्। प्रतिपाद्यत्वसम्बन्धेन तत्र वर्तमानत्वात्। तथा च शास्त्रे प्रतिपाद्यं यत्कारणं तत् शास्त्रयोनिः। तत्त्वं शास्त्रयोनित्वम्। फलितमाहुः—'शास्त्रोक्तकारणत्वादि'ति। ननु ब्रह्मणः कारणत्वमुपनिषत्सूपलभ्यते ततश्च जन्माद्यस्य यत उपनिषद्योनित्वादित्येव वक्तव्यं तद्विहाय शास्त्रयोनित्वादिति किमर्थ-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

'तेने'त्यादि। तेन ब्रह्मणः कारणतायाः सिद्धत्वेन। एकत्र सिद्ध इत्यादि 'तस्माद्वा एतस्मादात्मन'इत्यत्र ब्रह्मणः प्रपञ्चकारणत्वमिति शास्त्रार्थः सिद्धः स एव 'यतो वा इमानि' 'आनन्दाद्ध्येव खल्विमानी' त्यादिस्थले सर्वत्र बोध्य इत्यर्थः। अत्र तु 'तस्माद्वा एतस्मादि'त्यत्रेत्यर्थः। ननु 'जन्माद्यस्य यत' इतिसूत्रभागेन ब्रह्मणः कारणत्वं व्यवस्थापितं तच्च नित्यशुद्धबुद्धमुक्तस्वभावत्वाद्ब्रह्मणो न सम्भवतीति पूर्वपक्षे प्राप्ते सूत्रशेषेण समाधानमाहुः—'शास्त्रे' त्यादिना। 'शास्त्रो'क्तेत्यादि। तथा च ब्रह्मणो यथा लौकिकयुक्त्यगम्यत्वं वेदैकसमधिगम्यत्वं तथा प्रपञ्चनिष्ठकारणत्वमपीति वेदोक्तकारणतायां विप्रतिपत्तौ ब्रह्मापि विप्रतिपन्न स्यात्तस्माद्वेदोक्तमेवाङ्गीकार्यमिति भावः।

वेदः । सामान्यग्रहणं पूर्वकाण्डे पूर्वसृष्टिवाक्यानां सङ्ग्रहार्थम् । यथास्यैव कारणत्वं, नान्यथा तथोपरिष्टाद्वक्ष्यामः । मतान्तरवज्जन्मादीनां न विकारित्वम् । किन्त्वाविर्भावतिरोभावावेन

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

षडस्थानामेव सृष्ट्यादिवाक्यानां कथं ग्रहणमित्यत आहुः—'**सामान्यग्रहणमि**'ति । पूर्वस्मिन्नपि काण्डे सृष्ट्यादिवाक्यानां—'**प्रजापतिरकामयत**'इत्यादीनां सत्त्वात्तेषां सग्रहार्थं सामान्यग्रहणम् । ननु तत्र प्रजापतिप्रभृतीनामेव कर्तृत्वस्य प्रतीयमानत्वात्कथं ब्रह्मण एव तत्त्व तत्राहुः—'**यथास्यैवे**-त्युपरिष्टाद्वक्ष्यामः न सर्वो वेदो ब्रह्मणो जगत्कर्तृत्वे मानमि**'त्यारभ्येत्यर्थः । ननु ब्रह्मणो जगत्कर्तृत्वे प्रपञ्चस्य कार्यत्वादब्रह्मत्वापत्तिस्तथा चायं सिद्धान्तः कस्मान्न भवतीत्यत आहुः—'**मता-न्तरवदि**'ति । ननु जन्मादिसूत्र इदमाऽनेकभूतभौतिकदेवतिर्यङ्मनुष्याऽनेकाऽद्भुतरचनायुक्तकोटि-

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

धैमित्यत आहुः—'**सामान्ये**'ति । **पूर्वकाण्डे सृष्टिवाक्याना**मिति । मावतृत्तसूक्ते, **सो अङ्ग वेद यदि वा न वेद** इत्यादिवाक्यानामित्यर्थः । एतेन सकलवेदार्थरूपो भगवानिति सूचितम् ।

ननु केषाचिन्मते ब्रह्मणो निमित्तकारणत्व योनिपदमपि निमित्तकारणवाचीति किमर्थं कारणत्व ब्रह्मणः स्वीक्रियत इत्यत आहुः—'**यथे**'ति । **उपरिष्टाद**ग्रिमसूत्रे । ननु साङ्ख्ये-

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

पदम् । '**सामान्ये**'ति । सर्ववेदवाचकशास्त्रपदग्रहणम् । '**पूर्वसृष्टी**'ति । पूर्वेभ्यः प्रजापतिभ्यो या सृष्टिस्तत्प्रतिपादकव्याख्यानामित्यर्थः । तथा च पूर्वकाण्डीयैरपि वाक्यैर्ब्रह्मण एव कर्तृत्व प्रति-पाद्यत इति बोधनार्थं तथेति भावः । अन्यथा मिथोवाक्यविरोधः स्यात् । सर्वकारणता च ब्रह्मणो भज्येत ।

ननु प्रजापतिप्रभृतीनामपि श्रुत कर्तृत्व कथ निह्नोतु शक्यमित्यत आहुः—'**यथे**'ति । अस्य ब्रह्मणः । '**उपरिष्टादि**'ति । समन्वयाद्यधिकरणेषु । प्रजापत्यादिरूपेणाऽपि ब्रह्मण एव कर्तृ-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

त्वमित्याशङ्क्य समादधते—'**सामान्यग्रहणमि**'त्यादिना । शास्तीति शास्त्रमिति व्युत्पत्त्या वेदस्य ग्रहणात्पूर्वकाण्डेऽपि **प्रजापतिरकामयत**इत्यादिसृष्टिवाक्याना विद्यमानत्वात्तैरपि ब्रह्मकारणतैव बोध्यत इति ज्ञापनाय पूर्वकाण्डोत्तरकाण्डोभयग्रहणार्थं वेदवाचकशास्त्रपदोपादान शास्त्रयोनित्वा-दितीत्यर्थः । ननु पूर्वकाण्डे प्रजापतीना कारणत्वोक्तेः कथ ब्रह्मैककारणकत्व प्रपञ्चस्य सेत्स्यतीत्या-शङ्क्य समादधते—'**यथास्यैव कारणत्वमि**'त्यादिना । '**उपरिष्टादि**'ति । भाष्ये, 'ननु न सर्वो

भगवदीश्रीमदिच्छारामप्रणीत प्रदीप ।

**सामान्यग्रहणं** उपनिपत्पदमनुक्त्वा 'शास्त्रे'तिपदप्रयोगरूपम् । **पूर्वसृष्टिवाक्यानां** 'प्रजापति-रकामयत'इत्यादिपूर्वकाण्डीयसृष्टिवाक्यानाम् । **सङ्ग्रहार्थं** ब्रह्मणि कारणताप्रतिपादकत्वेन सङ्ग्रहार्थमि-त्यर्थः । ननु प्रजापतिप्रभृतीनां कारणताप्रतिपादकवाक्यैस्तेषामेव कारणत्व प्रतिपाद्यते, नतु ब्रह्मण इत्यत आहुः—'**यथे**'त्यादि । **अस्यैव** ब्रह्मण एव । एवकारेण ब्रह्मभिन्नाना कारणत्वव्यवच्छेदः । **उपरिष्टात्** अग्रिमसूत्रेषु । ननु प्रपञ्चस्योत्पत्तिमत्त्वे प्रपञ्चस्याब्रह्मत्वापत्तिरित्यत आहुः—'**मतान्तरे**'-

वर्णयन्ति । अन्वयसिध्यर्थञ्च, अतति व्याप्नोतीति अत्, शास्त्रे योनित्वं प्राप्तं तदिति । नैतत् सूत्रकारसंम्मतमिति[1] प्रतिभाति । तस्मात्सर्वज्ञत्वं सर्वशक्तिमत्त्वञ्च सिद्धं निरङ्कुश-जगत्कर्तृत्वेन ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

प्रकारान्तरेण प्रत्यवतिष्ठते । 'नन्वि'ति । शास्यतेऽनेनेतिव्युत्पत्त्या शास्त्रं वेदः । तस्मिन्योनिः शास्त्रयोनिः । शास्त्रोक्तकारणत्वादिति सूत्राऽवयवस्य व्याख्यातत्वात्सर्वोऽपि वेदो ब्रह्मणो जगत्कर्तृत्वे

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

सूत्रम् । तस्य विभागेनेत्यर्थः । एवं च रूपप्रपञ्चकर्तृत्वबोधकं जन्माद्यस्येत्येकं सूत्रम् । नामप्रपञ्चकर्तृत्वबोधकं शास्त्रयोनित्वादित्यपरं सूत्रमिति विभागेन प्रतिज्ञां कृत्वेत्यर्थः । ननु सूत्रं तु पञ्चम्यन्तं अर्थादायातं यद्ब्रह्मपदं तत्प्रथमान्तमिति समानविभक्तिकत्वाऽभावेनान्वयाभावात्कथं तद्बोधकत्वं तस्येत्यत आहुः—'समन्वयादी'ति ।' तथा च समन्वयादिसूत्रादारभ्य सूत्रेषु हेतुपञ्चम्यन्तत्वं स्वीकुर्वन्ति । अत्र तु शास्त्रयोनित्वादिति प्रथमान्तत्वात् । 'शास्त्रे'ति । सप्तम्यानिरूपितत्वमर्थः । शास्त्रनिरूपितकारणत्वाश्रयं ब्रह्मेति सूत्रार्थः । एवं च शास्त्रस्य शब्दस्वरूपत्वान्नाम प्रपञ्चकर्तृत्वं भगवतः सूत्रेण बोधितमिति भावः । एतन्मतं खण्डयन्ति—'नैतदि'ति । 'भाती'ति । शास्त्रयोनिरित्येतावतैव त्वदीयार्थसिद्धौ शेषवैयर्थ्यम् । मात्रालाघवस्य सूत्रकाराणां हर्षजनकत्वादक्षरद्वयगौरवस्य दुःसहत्वादिति भावः । 'जगत्कर्तृत्वेने'ति । शास्त्रप्रतिपाद्यस्वतन्त्रजगत्कर्तृत्वलक्षणेनेत्यर्थः । प्रकृत्यादिवारणाय शास्त्रेति । केवलशास्त्रप्रतिपाद्यस्यैव लक्षणत्वे धर्मे व्यभिचार इत्यतो जगदिति । शास्त्रप्रतिपाद्यजगत्कर्तृत्वं प्रजापतेरप्यस्तीत्यतः स्वतन्त्रेति । अत्र पूर्वकाण्डं निर्भरं

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

सम्मतिबीजं तु शास्त्रयोनीत्येतावतैव तत्तथार्थलाभेऽधिकस्य वैयर्थ्यापत्तिरित्युपसंहरन्ति—'तस्मादि'ति । कर्तृत्वाद्यन्यथानुपपत्तेः । कर्तृत्वे किञ्चिदाशङ्कते—नन्विति । अवान्तरकारणत्वमपि तेषां

श्रीलालूभट्टकृता गूढार्थदीपिका ।

तथा च जन्माद्यस्येत्यत्रेदंशब्देन रूपनामोभयप्रपञ्चस्य ग्रहणान्न पृथक्सूत्रांऽपेक्षेत्यर्थः । 'नैतत्सूत्रकारमतमि'त्यादि । शास्त्रयोनित्वमततीति व्युत्पत्त्या शास्त्रयोनित्वादिति प्रथमान्तं-ब्रह्मवाचकमिति परेषामाशयस्तं—दूषयन्ति—'नैतत्सूत्रकारमतमि'त्यादिना । यदि सूत्रकारस्याऽयमाशयः स्यात्तदा शास्त्रयोनिरेतावदेव वदेन्न त्वधिकमतः शास्त्रयोनिरित्येतावतैव चारितार्थ्येऽपि त्वादि-

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीप ।

प्रतिज्ञा । शास्त्रयोनित्वादितिसूत्रं पूर्वसूत्राद्विभज्य तन्मते पञ्चम्यर्थानन्वयात्प्रथमान्तं सूत्रमित्युक्त्वा द्वितीयसूत्रेण शब्दसृष्टिप्रतिज्ञा इत्येवंरूपं तन्मतमुपन्यस्यन्ति—'पृथगि'त्यादिना । हेतून् वर्णयन्ति समन्वयार्थहेतून् वर्णयन्तीत्यर्थः । सूत्रस्य प्रथमान्ततामुपवर्णयन्ति । 'अन्वये'त्यादिना । तद्दूषयन्ति । 'नैतदि'त्यादिना । दूषण ॥ शास्त्रयोनिरेतावतैव प्रतिज्ञासिद्धेस्त्वादितिभागस्य वैयर्थ्यं नहि सर्वज्ञः सूत्रकारो व्यर्थं प्रयुङ्क्ते इति । स्वोक्तसूत्रार्थं निगमयन्ति । 'तस्मा'दित्यादिना ।

---

१ मतमिति लाल्लूभट्टसंमत. पाठ. ।

नतु न सर्वो वेदो ब्रह्मणो जगत्कर्तृत्वे मानम् । तपोयज्ञादिप्रयुक्तप्रजापतिप्रभृतीनामेव जगत्कारणत्वस्य पूर्वकाण्डे तत्तदुपाख्यानेष्ववगम्यमानत्वात् । नचाऽवान्तरकारणत्वम् ? । परस्याऽश्रवणात् । उत्तरकाण्डे तु द्वयप्रतिपादनाद्विरोधः । सन्देहश्च । मीमां-

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

मानमित्युक्तं भवति । तन्न घटते । 'प्रजापतिरकामयते'त्याद्युपाख्यानेषु प्रजापतिप्रभृतीनां तपोयज्ञादियुक्तानां यज्ञानां च जगत्कारणत्वस्य श्रवणात् ।

ननु यथा घटादिप्रत्यक्षे सन्निकर्षादीनामवान्तरकारणत्वेऽपि प्रमाणानां करणत्वं नाऽपगच्छति, तेषामप्यवान्तरकारणत्वं कथं ब्रह्मणः कारणत्वमुपहन्यादित्याशङ्क्याऽऽह—'न चे'ति । तत्र हेतुमाहुः—'परस्ये'ति । यथा तत्र प्रमाणानां मुख्यत्व प्रत्यक्षसिद्धं, न तथा पूर्वकाण्डे प्रजापतिप्रभृतिभ्यः परस्य श्रवणमस्ति, येनावान्तरकारणत्वं तेषां कल्प्येत । ननूत्तरकाण्डे परस्य श्रवणाच्छास्त्रयोनित्वमप्रतिहतमेव, न ह्युत्तरस्य शास्त्रत्वं नाऽस्तीति वक्तुं शक्यम् । तथा च का वाऽनुपपत्तिरित्यत आहुः—'उत्त-

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

मन्यमाना ब्रह्मणि स्वातन्त्र्येण जगत्कर्तृत्वमसहमाना मीमांसकाः प्रत्यवतिष्ठन्ते—'नन्वि'ति । 'तपोयज्ञादियुक्ते'ति । क्वचित्पुस्तके तपोयज्ञादिप्रयुक्तेत्यपिपाठः । 'अवगम्यमानत्वादि'ति । प्रजापतिरकामयत, प्रजाः सृजेयेत्यादिना तपःसाहचर्येण प्रजापतेर्यज्ञसाहचर्येणान्यस्य जगत्करणत्वप्रतिपादनादित्यर्थः । 'नचे'ति । न हीत्यर्थः । 'अवान्तरे'ति । भृत्यादीनां यथा यत्किञ्चित्कारणत्वं तथा प्रजापतेरिति । न हीत्यर्थः । 'अश्रवणादि'ति । प्रजापत्यादिव्यतिरिक्तस्याऽश्रवणादित्यर्थः । ननूत्तरकाण्डे श्रवण वर्तत इत्यत आह—'उत्तरे'ति । 'द्वयप्रतिपादनादि'ति । कर्तृ-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

परिहरन्ति—'नचे'ति । 'परस्ये'ति । मुख्यस्येत्यर्थः । 'द्वयमि'ति । कर्तृत्वं तदभावश्च ।

श्रीलाल्लभट्टकृता गूढार्थदीपिका ।

त्यधिकमुक्तमतो ज्ञापयति परोक्तं न व्यासाशयगोचर इति । 'उत्तरकाण्डे तु द्वये'त्यादि । यतो वा इमानि भूतानीत्यादिना कर्तृत्वप्रतिपादनं, निष्कलं निष्क्रियमित्यादिना नित्यशुद्धबुद्धेत्यादिना च कर्तृत्वाऽभावप्रतिपादनमिति विरोध इत्यर्थः । तथा चोत्तरकाण्डे विरोधसन्देहयोः सत्वात्पूर्वकाण्डे ब्रह्माऽतिरिक्तस्य प्रजापतिप्रभृतेः कर्तृत्वप्रतिपादनान्न ब्रह्मणि जगत्कर्तृत्वं वेदसिद्धमतः शास्त्रयोनित्व यदुक्त तन्न सिद्ध्यतीति पूर्वपक्षिणो हार्दम् ।

भगवदीश्रीमदिच्छारामप्रणीत प्रदीप ।

जगत्कर्तृत्वेन ब्रह्मणि सर्वज्ञत्वसर्वशक्तिमत्त्वे असहमाना प्रत्यवतिष्ठन्ते । ननु इत्यादिना । प्रभृतिपदेन क्षेत्रज्ञप्रकृत्यादीनां ग्रहणम् । तत्तदुपाख्यानेषु प्रजापतिक्षेत्रज्ञाद्युपाख्यानेषु । अवान्तरकारणत्वं मुख्यं कारणत्वं परब्रह्मणः अवान्तरकारणत्व प्रजापत्यादीनाम् । 'परस्ये'-त्यादि । तथाचेन्द्रियाणां सन्निकर्ष इव यस्यावान्तरकारण प्रजापतिः स्यात्तादृशपरस्य प्रपाठके अश्रवणादित्यर्थः । ननूत्तरकाण्डेन ब्रह्मणि कर्तृत्व व्यवस्थापनीयमत आहुः । 'उत्तरे'त्यादि । द्वयप्रतिपादनात् 'तस्माद्वा' 'यतो वा' इत्यादिश्रुतिभिः कर्तृत्वस्य 'नित्यशुद्धबुद्धे'त्यादिभि कर्तृत्वाभावस्येति विरोध इत्यर्थः । सन्देहश्च कर्तृत्वतदभावोभयसाधारणचैतन्यधर्मदर्शनात्सन्देहोपीत्यर्थः । मीमां-

---

१ एतदनन्तरं 'अत्र प्रजापतिप्रभृतिभ्य इत्यादी'ति नि सम्बन्धइव पाठ सम्यगस्माभिर्न रक्षित ।

सायाः सन्देहनिवारकत्वेऽप्येकांशस्याऽप्रामाण्यं स्यात् । उभयसमर्थने शास्त्रवैफल्यं वा । वेदप्रामाण्यादेव तत्सिद्धेः । बाधितार्थवचनं वेदे नास्तीत्यवोचाम । किञ्च, वेदान्ताः किं

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

रकाण्डे स्थिति । ब्रह्मवियदादिश्चेति कारणद्वयस्य समप्राधान्येन प्रतिपादनात्परस्परप्रतिबन्ध एकस्याऽपि कारणत्व न सम्भवतीति कारणत्वस्य विरोधो विरह: श्रौतत्वाऽविशेषात्सन्देहश्च स्यादित्यर्थः ।

ननु सत्यपि सन्देहे मीमांसया तदपगमो भविष्यतीत्याशङ्क्याह '**मीमांसाया**' इति । मीमांसया ह्येकतरनिश्चये सन्देहाऽपगमस्तथा च द्वितीयस्यांऽशस्याऽप्रामाण्यमेव भवेत् । ननु श्रौतत्वाऽविशेषादेकतरबाधस्याऽशक्यत्वात्कालभेदेनोभयमेव कस्मान्न भवतीत्यत आहुः—'**उभये**'ति । तत्र हेतुः—'**वेदे**'ति । निरस्तसमस्तदोषाशङ्कस्य वेदस्य बाधितानधिगताऽसन्दिग्धबोधजनकत्वरूपाऽनपेक्षप्रामाण्योपपत्त्यर्थं कालभेदेनोभयोपपत्तौ शास्त्रस्य मीमांसाया वैयर्थ्यमेव भवेदित्यर्थः ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

त्वाऽकर्तृत्वयोर्द्वयोः प्रतिपादनादित्यर्थः । '**सन्देह**' इति । उभयप्रतिपादकवाक्ययोः प्रामाण्यादेकतरपक्षपातस्याऽशक्यत्वात्सन्देह इत्यर्थः ।

नन्वत एव मीमांसाया उपयोग इत्यत आह–'**मीमांसे**'ति । '**उभयसमर्थने**'ति । कर्तृत्वाऽकर्तृत्वनोभयसमर्थने । '**अवोचाम**' इति । बाधितार्थप्रतिपादकत्वरूपाऽप्रामाण्यं वेदे नास्तीत्युक्त, प्रागित्यर्थः । एव च स्वतन्त्रजगत्कारणत्व कुत्रापि नास्तीति बीजाङ्कुरन्यायेनानादिसृष्टिवाद एव स्वीकार्य इति यतो वेत्यादिना कार्यलक्षण न सम्भवतीति भावः । इदानीं वेदान्तविचारस्य

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

**विरोधो मिथोवाक्ययोः** । सन्देहः कर्तृत्वं तदभावो वेत्येवरूपः । '**एकांशस्ये**'ति । निषेध्यप्रतिपादकवेदभागस्य । '**उभये**'ति । कर्तृत्वतदभावयोः । शास्त्र मीमांसाशास्त्रम् । '**तत्सिद्धेरि**'ति । उभयसिद्धेः । वेदप्रामाण्ये हेतुं स्मारयन्ति–'**बाधितार्थे**'ति । ननु सिद्ध तर्हि ब्रह्मणः कर्तृत्वमिति मनसि निधाय ब्रह्मकर्तृत्वप्रतिपादकवेदान्तानामेव विकल्पेनाऽकिञ्चित्करत्वमाहुः–'**किञ्चे**'त्यादि ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ननु सन्देहनिवारणमनया मीमांसया भविष्यति । तथा च कर्तृत्वकर्तृत्वाभावयोर्मध्य एक एवार्थोऽवशिष्येत । ततश्च सर्व निर्दुष्टमित्याशङ्क्याऽऽह–'**एकांशस्याऽप्रामाण्यं स्यादि**'ति । यदि कर्तृत्वतदभावयोर्मध्येऽन्यतरस्वीकारस्तदा स्वीकृतप्रमेयाऽतिरिक्तप्रतिपादकस्यैकांशस्य तच्छ्रुतिभागस्याऽप्रामाण्य स्यादित्यर्थः । यदि च मीमासयोभयमप्याद्रियते तदा मीमांसाशास्त्रवैफल्यम् । कुतो वैफल्यमित्याकाङ्क्षायामाह–'**वेदप्रामाण्यादेवे**'त्यादि । अत पर पूर्वकाण्डोक्तकारणत्वानां प्रजापतिप्रभृतीनामेव जगत्कारणत्व नतूत्तरकाण्डोक्तकारणताकस्य ब्रह्मणो जगत्कर्तृत्वमिति द्रढयितुमुत्तरकाण्डस्य पूर्वकाण्डापेक्षया ह्यकिञ्चित्करत्वसमर्थनाय विकल्पमाह–'**किञ्चे**'त्यादिना । वेदशेषत्वं

भगवदीश्रीमदिच्छारामप्रणीत प्रदीप ।

**सायाः** उत्तरमीमांसायाः । **एकांशस्येत्यादि** । तथा च कोटिद्वयमध्ये यत्कोटिनिर्णयः क्रियते तदितरकोटिप्रतिपादकवेदान्तस्याप्रामाण्य स्यादित्यर्थः । **उभयेत्यादि** कोटिद्वयस्यापि ब्रह्मण्यङ्गीकारे इत्यर्थः । **शास्त्रवैफल्यं** विरोधस्यैवाभावेन तन्निर्धारार्थं व्याससूत्ररूपशास्त्रस्य वैफल्यमित्यर्थः । त्सिद्धेः विरुद्धकोटिद्वयस्य ब्रह्मणि सिद्धेरित्यर्थः । वादी वेदप्रामाण्यमेव दृढ प्रदर्शयति बाधि-

वेदशेषा, वेदा वा ? । नाद्यः । अनुपयोगात् । अनारम्याऽधीतत्वेन तदुपयोगित्वे पूर्वका-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

अथ पूर्वकाण्डोक्तप्रजापतिप्रभृतीनामेव कारणत्वं न ब्रह्मण इत्येवं वक्तुं ब्रह्मकारणत्वप्रतिपादकानां वेदान्तानां पूर्वकाण्डापेक्षयाऽकिंचित्करत्वसमर्थनार्थं विकल्पमाहुः—'किञ्चे'ति। तत्प्रथमं पक्षं दूषयन्ति—'नाद्य'इति। तत्र हेतुमाहुः—'अनुपयोगादि'ति। एकप्रकरणपठितत्वे हि तदङ्गत्वम्। यथा दर्शपूर्णमासप्रकरणपठितस्याऽऽज्यावेक्षणस्य तदङ्गभूताऽऽज्यसंस्कारकत्वम्। न चेह तथा। प्रकरणभेदात्। किंच। शेषत्वं हि द्वेधा सम्भवति। स्वरूपोपकारित्वेन फलोपकारित्वेन वा। न हि वेदान्तानां कर्मस्वरूपोपकारित्वम्। नित्यशुद्धबुद्धोदासीनाऽऽत्मतत्त्वप्रतिपादनेन कर्तृदेवताऽऽदिप्रकाशनार्थत्वाऽभावात्। नापि फलोपकारित्वम्। तत्प्रतिपादनस्य कर्मसमृद्ध्यर्थत्वाऽभावात्। नन्वनारम्याऽधीतमपि 'यस्य पर्णमयी जुहूर्भवती'त्यव्यभिचरितक्रतुसम्बन्धजुहूद्वारेण जुहूपदं क्रतुं स्मारयद्वारन्येन पर्णताया यथा क्रतुशेषभावमापादयति, तथाऽऽत्मनोऽप्यव्यभिचरितक्रतुसम्बन्धाऽऽत्मद्वारे-

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम्।

निष्फलत्वात्स न कर्तव्य इत्याक्षिपति—'किञ्चे'ति । 'वेदशेषा' इति । वेदस्य वेदोक्तकर्मणः शेषा अङ्गभूता इत्यर्थः । 'वेदा' इति । प्रयोगानुष्ठापकवाक्यरूपा इत्यर्थः । 'अनुपयोगादि'ति । वेदान्तानां ज्ञानाङ्गब्रह्मप्रतिपादकत्वेन द्रव्यदेवतादिप्रकाशकत्वाऽभावादनुपयोगादित्यर्थः । अनारभ्य प्रकरणमप्राप्य । अधीतत्वेन पठितत्वेन । तदुपयोगित्वे वेदोक्तकर्मोपयोगित्वे ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

'अनुपयोगादि'ति। पूर्वकाण्डीयवाक्यार्थबोधेन, युक्ते कर्मणि वा, तेजो वै घृतमित्यादिवन्निर्णयकत्वाऽभावेनाऽनुपयोगात् । नन्वष्टवर्षं ब्राह्मणमुपनयीत, स्वाध्यायोऽध्येतव्यो यस्य पर्णमयी जुहूर्भवतीत्याद्यनारम्याऽधीतमपि वाक्यजातं तदुपयोगिकर्मोपयोगित्वार्थप्रतिपादनद्वारा यथा तच्छेपत्वभावं भजते, तथा तदुक्तकर्मकर्त्रात्मस्वरूपप्रतिपादनेन वेदान्ता अपि तच्छेषभावं भजन्त इत्यत आहुः—'अनारभ्ये'ति । 'तदि'ति । वेदवेदोक्तकर्मोपयोगित्वे । 'गतार्थत्वमि'ति ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

दूषयति—'अनुपयोगादि'ति । एकप्रकरणपठितत्वे ह्यङ्गत्वं स्यात् । दर्शपूर्णमासप्रकरणपठिताऽऽज्यावेक्षणवत्। वेदान्ते तु प्रकरणभेदान्नाङ्गत्वमित्यर्थः । अन्यच्च । स्वरूपोपकारित्वेन फलोपकारित्वेन शेषत्वं द्वेधा । तत्र वेदान्तानामसङ्गोदासीनाऽऽत्मस्वरूपप्रतिपादकतया कर्तृदेवताप्रकाशनार्थत्वाऽभावान्न स्वरूपोपकारित्वम्। नवा फलोपकारित्वम् । निर्लेपाऽऽत्मप्रतिपादनस्य कर्मसमृद्ध्यर्थत्वाऽभावात् । ननु यस्य पर्णमयी जुहूर्भवतीत्यव्यभिचरितक्रतुसम्बन्धजुहूद्वारेण क्रतु

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

तार्थेत्यादि । वेदान्तप्रामाण्ये तदुक्तोऽर्थः सिध्येदिति तत्प्रामाण्यमेवाक्षिपति 'किञ्चे'त्यादिना । नाद्य इति । तत्रहेतु अनुपयोगादिति । वेदशेषत्वं हि द्वेधा वेदबोधितकर्मोपकारित्वेन, कर्मफलोपकारित्वेन वा । नहि वेदान्ताना कर्मस्वरूपोपकारित्वघटकद्रव्यदेवताप्रतिपादकत्वरूपं सम्भवति । तत्र द्रव्यदेवते हि कर्मस्वरूपम् । तत्र नित्यशुद्धबुद्धमुक्तस्वभावोदासीनस्य कर्मस्वरूपाघटकत्वेन स्वरूपोपकारित्वासम्भवात् । नापि फलोपकार्यङ्गत्वं तादृग्ब्रह्मणोऽकारणत्वेन तत्प्रतिपादनस्य फलोपकारिप्रतिपादनत्वासम्भवात् । 'अनारम्भे'त्यादि । 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं सम-

ण्डविचारेणैव गतार्थत्वम् । विद्याप्रवेशश्च । न द्वितीयः । यज्ञाप्रतिपादनात् । मन्त्रब्राह्मणत्वाभावाच्च । तस्माद्भेदोपरा वेदान्ता इति तेषां किं स्यादिति चेत्—

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

णाऽनारभ्याऽधीतानामपि वेदान्तवाक्यानां पूर्वकाण्डशेषत्वं कस्मान्न भवतीत्याशंक्याऽऽहुः—'अनारभ्ये'ति । तथा सति तद्विचारेणैव गतार्थत्वात्कृतमुत्तरविचारेण । दूषणान्तरमप्याह—'विद्ये'ति । 'श्रोतव्यो मन्तव्यः' 'तं त्वौपनिषदं पुरुषं पृच्छामी'त्यादिभिः सिद्धो वेदान्तानां श्रवणादिद्वारकाऽपरोक्षसाक्षात्कारजनकत्वेन ब्रह्मविद्यायां प्रवेशो व्याहन्येत । शेषत्वेन स्वतन्त्रफलजनकत्वस्य वक्तुमशक्यत्वात् । द्वितीयं दूषयति—'न द्वितीय' इति । तत्र हेतुमाहुः—'यज्ञे'ति । वेदो हि नित्य-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

यथाऽनारभ्याऽधीतत्वेन सूत्राणि, अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिवाक्येनोपनयनादावपि प्रयुक्तानि भवन्ति, तथा प्रकरणमप्राप्य विहिता वेदान्ता अपि यदेव विद्यया करोतीति वाक्येन वेदोक्तकर्मसूपयोगित्वे स्वीक्रियमाणे सतीत्यर्थः । 'पूर्वकाण्डविचारेणैवे'ति । पूर्वमीमांसायां तृतीयाध्याये, 'अथातः शेषशेषिभावलक्षणमि'त्यनेन, प्रथमाध्याये स्मृतिपादे च सूत्रादीनां प्रामाण्यविचारः कृतं इति तेनैव गतार्थत्वमस्या इति भावः । 'विद्याप्रवेश'श्चेति । वेदशेषत्वेन स्मृतीनां चतुर्दशविद्यासु यथा प्रवेशस्तथाऽस्यापीत्यर्थः । चकारात्पुराणेऽपि । 'यज्ञे'ति । यागतदङ्गप्रधानप्रयाजादीनामप्रतिपादनादित्यर्थः ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

उत्तरमीमांसाया इति शेषः । तथा चैतद्वैय्यर्थ्यमितिभावः । दूषणान्तरमाहुः—'विद्ये'ति । तर्हि त्वदभिमतब्रह्मविद्यायां वेदान्तानां प्रवेशो न स्यात् । स्वातन्त्र्येण साधनफलनिरूपणात् । 'यज्ञे'ति । वेदे हि स्वाध्यायाध्ययनविधिना पुरुषार्थपर्यवसायित्वमुक्तम् । तच्च स्वेष्टसाधनीभूतक्रियाप्रतिपादकतया । न हि वेदान्तास्तत्प्रतिपादयन्ति । सिद्धार्थप्रतिपादकत्वात् ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

स्मारयद्वाक्येन यथा क्रतुशेषतां पर्णतायाः प्रतिपादयति । तथैवाऽव्यभिचरितक्रतुसम्बन्धात्मद्वारेणाऽनारभ्याऽधीतानामपि वेदान्तवाक्यानां पूर्वकाण्डशेषत्वमात्मपदं कुतो नापादयेदित्याशङ्क्याऽऽह—'अनारभ्याधीतत्वेने'त्यादि । अथवा । अनारभ्याधीता अपि स्मृतयो गृह्यसूत्राणि च, यद्वै किञ्च मनुरवदत्तद्भेषजमित्यादिवाक्येन शेषतां प्राप्तास्तथा वेदान्ता अपि, यदेव विद्यया करोतीति श्रुत्या कर्मणो वीर्यवत्तरतासम्पादनेन शेषतां लप्स्यन्त इत्याशङ्क्याऽऽह—'अनारभ्याधीतत्वेने'त्यादि । यदि पूर्वकाण्डशेषत्वं तदा पूर्वमीमांसया सर्वेषां वेदान्तानामपि निर्णये सिद्ध उत्तरमीमांसाया गतार्थतेति भावः । पूर्वकाण्डशेषत्वे दूषणान्तरमाह—'विद्याप्रवेशश्चे'ति ।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

श्रुते' इत्यव्यभिचरितक्रतुसम्बन्धजुहूद्वारेण क्रतुं स्मारयद्वाक्यं यथा पर्णतायाः क्रतुशेषतां बोधयति तथाऽव्यभिचरितक्रतुसम्बद्धात्मोपस्थितिद्वारेणानारभ्याधीतवेदान्तवाक्यानामपि कर्मोपयोगित्वे पूर्वमीमांसयैव गतार्थता उत्तरस्याः अनुपयोग एव । विद्याप्रवेशः पूर्वोक्तरीत्या कर्माङ्गत्वोरीकारे श्रवणादिसम्पाद्यब्रह्मविद्यानुपयोगेनोपनिषदां ब्रह्मविद्यानुपयोगित्वमित्यर्थः । न द्वितीयः वेदा इति द्वितीयः ।

---

१–अस्यामेव टीकायां क्वचिद्दुर्वचनं क्वचिदेवचनं द्वयोरपि पुस्तकयोर्मिलितं किंहेतुकमिति न जानीम ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

स्वाध्यायाऽध्ययनविधिविषयत्वेन पुरुषार्थपर्यवसायी । तच्च स्वेष्टसाधनीभूतक्रियाप्रतिपादकत्वेन । नहि वेदान्तानां तत्प्रतिपादकत्वमस्ति । सिद्धार्थप्रतिपादकत्वेन तदप्रतिपादकत्वात् । तथा च पुरुषार्थपर्यवसायित्वाऽभावेन स्वाध्यायाऽध्ययनविध्यविषयत्वाच्च वेदत्वम् । अस्मिन्नेव विषये हेत्वन्तरमप्याहुः—'मन्त्रे'ति । पूर्वतन्त्रे द्वितीये । ननु मन्त्रब्राह्मणयोर्वेदत्वे 'द्वादशशतं ददाति' 'अनुबन्ध्यामालभेते'त्यादिविधीनां मन्त्रत्वं ब्राह्मणत्वं वेतिसन्देहे मन्त्रत्वमिति । कथमेवमवगम्यत इति चेदित्थम् । '*न तानसन्ति न दभाति तस्करो नैना अमित्रो व्यथिरादधर्षति । देवांश्च याभिर्यजते ददाति च योगित्ताभिः स च ते गोपतिः सहे*'त्यादिमन्त्रेष्वपि यजते ददातीत्यादिविधायकशब्दश्रवणात्तेषामपि विधायकत्वस्य सत्त्वाद्विधीनां मन्त्रत्वमिति पूर्वपक्षो, '**विधिमन्त्रयोरैकार्थ्यमैकशब्द्यादि**'त्यनेन प्रपंचितः । एतदर्थस्तु विधिमन्त्रयोरैकार्थ्यंप्रवर्तकत्वम् । तत्र हेतुः । '**ऐकशब्द्यादि**'ति । एक एव हि शब्द उभयत्र । न हि स एवैकत्र प्रवर्तकोऽपरत्र नेति वक्तुं शक्यम् । तस्मादत्रापि विधायक इति । ततः सूत्रकारः स्वयमेव समाधानमाह—'**अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यादि**'त्यनेन । मन्त्रोऽभिधानवाची केवलं धर्मप्रमितिमेव जनयति

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

ननु यज्ञाप्रतिपादनेऽपि 'यदेव विद्यया करोती'त्यनेन यागोपयोगिविद्याप्रतिपादनमस्तीत्यत आहुः—'**मन्त्रे**'ति । उपसंहरन्ति—'**तस्मादि**'ति । '**वेदोपरा**' इति । वेदान्तानामार्यप्रसिद्धिमात्रेण वेदत्वे तूपरभूमितुल्या इत्यर्थः । '**तेषामि**'ति । विचार इति शेषः । '**किं स्यादि**'ति । फलमिति

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

ननु मन्त्रादिवेदत्वमस्त्वित्याशङ्कायामाहुः—'**मन्त्रे**'ति । वेदो हि मन्त्रब्राह्मणसमुदायात्मकः । तदुभयस्वरूपमपि पूर्वतन्त्रे द्वितीयस्य प्रथमे '**तच्चोदकेषु मन्त्राख्या,**' '**शेषे ब्राह्मणशब्द**' इत्येतत्सूत्राभ्यां निर्णीतम् । तत्र चोदकत्वं नाम प्रयोगकालेऽनुष्ठानौपयिकार्थप्रकाशकत्वम् । शेषोऽवशेषः । तथा च मन्त्रातिरिक्तः कर्माङ्गभूतोऽर्थवादविधिनिगदादिरूपः शब्दो ब्राह्मणशब्दवाच्य इत्यर्थः । तथा च वेदान्तेषु तल्लक्षणाऽभावान्न तत्त्वमिति भावः । उपसंहरन्ति—'**तस्मादि**'ति । वेदशेषवेदत्वाऽभावात्तथाभूताः । तथात्वमपि वेदत्वेन शिष्टाचारमात्रात् । ईदृशानां तेषां विचारे किं फलम् । न किमपीत्यर्थः । तथा चैतादृशैतत्प्रतिपादितब्रह्मकर्तृत्वं न विश्वसनीयमिति भावः ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

यदि पूर्वकाण्डशेषत्वमुपनिषदां, तथा तच्छेषत्वेन „स्वतन्त्रफलजनकत्वाऽभावात् ब्रह्मविद्यायामप्रवेशः स्यादित्यर्थः । '**तेषां किं स्यादि**'ति । तेषां वेदान्ताना वेदोपरत्वात्किं स्यात् । वेदत्वं वेदशेषत्वं

भगवदीयश्रीमुदिच्छारामप्रणीत प्रदीप ।

**मन्त्रे**त्यादि वेदान्तानां मन्त्रब्राह्मणत्वाभावादित्यर्थः । तत्र हेतुमाहुः । '**यज्ञे**'त्यादि । वेदान्तानामिष्टसाधनीभूतकर्माप्रतिपादकत्वाद्ब्राह्मणत्वाभावादित्यर्थः । मन्त्रस्तु कर्मप्रवृत्तपुरुषस्य व्यापारनिचयसम्पादकः । 'द्वादशशतं ददाति अनुबन्ध्यामालभेते'तिविधिरूपमन्त्राणामपि तादृशनिचयसम्पादकत्वमव्याहतमेव । तस्मादेतदन्यतररूपत्वाभावान्न वेदत्वं वेदान्तानामित्यर्थः । पूर्वपक्षं निगमयन्ति '**तस्मादि**'ति । तस्मात् पूर्वोक्तरीत्या पुरुषार्थसाधनोपयोगित्वाभावेपि वेदपदप्रवृत्तिनिमित्तवेदत्वस्य

मैवम् । अस्ति तावद्वेदत्वम् । अध्ययनादिभ्यः । स्मरणाच्च । प्रमाणञ्च सर्वोऽपि

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

न विधायकः । तत्र हेतुः—**प्रयोगसामर्थ्यात्** । मन्त्रस्तु प्रयोगे समर्थः । प्रयोगः प्रवृत्तस्य व्यापारनिचयः । विधिस्तु प्रवर्तकः पूर्वसिद्धः । तेनैव प्रवृत्तत्वात् । कृतिसमये प्रवर्तकत्वं व्यर्थम् । किन्तु प्रमितिमेव जनयति । विधया कुर्यादिति । तस्मान्मन्त्रस्य न विधायकत्वम् । समानशब्दश्रवणेऽपि भेदकं रूपं वक्तुं सूत्रकार एव मन्त्रलक्षणमाह—'**तच्चोदकेषु मन्त्राख्ये**'ति । कर्मविधिना ह्यनुष्ठानं बोध्यते । विधिमन्त्रस्तु साधनत्वेनेति । अग्रेऽपि कर्मणि तदनुवादकत्वात्तेषां कर्मणां चोदकत्वं मन्त्रेषु सिद्धम् । अतः कर्मणि यागादौ यः साधनभूतः शब्दः स मन्त्रः । कर्मकरणः शब्दो मन्त्र इत्युक्तं भवति । ततो विधेरर्थवादादेश्च मन्त्रत्वाऽभावेऽपि वेदत्वसमर्थनार्थं ब्राह्मणलक्षणमुक्तं '**शेषे ब्राह्मणशब्द**' इति । मन्त्रातिरिक्तः कर्माङ्गभूतोऽर्थवादविधिनिगदादिरूपः शब्दो ब्राह्मणशब्दवाच्य इत्यर्थः । तथा च मन्त्रब्राह्मणलक्षणाऽभावात्कथं वेदान्तानां वेदत्वम् । ननु तेषामवेदत्वे कथं वेदत्वेन प्रसिद्धिरित्यत आहुः—'**तस्मादि**'ति । यस्माद्वेदलक्षणाऽभावेऽपि तच्छब्दप्रवृत्तिस्तस्मात्तदुपपत्त्यर्थं वेदान्तानां वेदोपरत्वाद्वेदशब्दाभिधेयत्वम् । यथोपरभूमेः फलोत्पत्तिसम्भावनारहितत्वेन विश्वपोषकत्वाद्यभावेऽपि गौण्या वृत्त्या भूमिशब्दाभिधेयत्वं, तथाऽत्रापि पुरुषार्थपर्यवसानाऽभावेऽपि पाठादिधर्मसाम्याद्वेदशब्दवाच्यत्वम् । ननु मन्त्रब्राह्मणवन्मुख्यं तत्त्वमित्यर्थः । तथा च पुरुषार्थपर्यवसायिवेदापेक्षया तेषां वेदान्तानां किं, किं सामर्थ्यं स्यात् । न किमपीति भावः । तथाच तैस्तत्प्रतिपादितप्रजापतिप्रभृतिकारणत्वस्य बाधाऽसम्भवात्तेन च तद्बाधस्याऽनायासेन सम्भवान्न ब्रह्मणः कर्तृत्वमुपपद्यत इति स्थिते—

उत्तरमाहुः—'**मैवमि**'ति । यदुक्तं वेदोपरा वेदान्ता इति । एवं न वक्तव्यं भवति । पुरुषार्थपर्यवसायित्वेन वेदत्वात् । कथं पुरुषार्थपर्यवसायित्वमित्यत आहुः—'**अध्ययनादिभ्यः**' इति ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

शेषः । तस्माद्वेदान्तविचारस्य निष्फलत्वात्स न कर्तव्य इति भावः । समाधानमाहुः—'**मैवमि**'ति । '**वेदत्वमि**'ति । वेदान्तेषु वेदत्वमेव, न वेदोपरत्वमित्यर्थः । '**अध्ययनादिभ्य**' इति । वेदा-

श्रीगिरिधरविरचिता वेदान्तचन्द्रिका ।

अत्र समादधते **मैवमित्यादिना** । '**अध्ययनादिभ्य**' इति । स्वाध्यायाध्ययनविधिविहिताध्ययनात् । तथा चाऽध्ययनविधिरेव वेदान्तानामव्याकुलवेदत्वं बोधयतीति भावः । अध्यापन-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

वा न स्यादिति भावः । '**अध्ययनादिभ्य**' इति । **स्वाध्यायोऽध्येतव्य** इत्यादिविधिविषयत्वेन पुरुषार्थपर्यवसायित्वाद्वेदत्वमित्यर्थः । **ऋचां मूर्द्धानं यजुषामुत्तमाङ्गं साम्नां**

मरावदीयश्रीमद्इच्छारामप्रणीतः प्रदीपः ।

सत्वात् **वेदोपराः** वेदत्वे सति ऊपराः फलानुपयोगिनः । यथोपरभूमिर्भूमित्वे सति फलासम्पादनी तथेत्यर्थः । किं स्यात् ? तेषां विचारेण किं फलं स्यात् ? तथा च तेषामतिदुर्बलत्वेन ततो ब्रह्मणः कर्तृत्वप्रतिपत्तिः सुदूरपराहतैवेति फलितम् ।

उक्ते पूर्वपक्षे समाधानमाहुः—'**मैव**'मिति । अस्तीत्यादि । वेदान्तेषु न वेदोपरत्वं किन्तु परमपुरुषार्थसाधनोपयोगि वेदत्वमेव । तत्र हेतुमाहुः—'**अध्ययनादिभ्य**' इति । अध्ययनाध्यापनविधिना

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

स्वाध्यायाऽध्ययनविषयत्वेन वेदान्तानामपि पुरुषार्थपर्यवसायित्वात् । न च स्वाध्यायशब्दवाच्यत्वं पूर्वकाण्डस्यैवेति वाच्यम् । '**ऋचां मूर्धानं यजुषामुत्तमाङ्गं साम्नां शिरोऽथर्वणां मुण्डमुण्डम् । नाऽधीतेऽधीते वेदमाहुस्तमज्ञं शिरश्छित्वाऽसौ कुरुते कबन्धमि**'त्यनेन केवलपूर्वकाण्डाऽध्ययने दोषश्रवणात् । स्वैरधीयत इति व्युत्पत्त्या तस्याऽपि ग्रहणसम्भवाच्च । पोढा विहितस्य वेदैकसमधिगम्यत्वेन शिरोभागप्रतिपादकस्य वेदत्वाऽभावे तावतो भागस्योपनिषत्त्व भज्येतेत्यादिहेतव आदिशब्देन गृह्यन्ते । हेत्वन्तरमप्याहुः—'**स्मरणाच्चे**'ति । स्मरण स्मृतिः । ब्रह्मप्रतिपादिका । तस्या इत्यर्थः ।

अयमर्थः—वेदान्तानामवेदत्वे स्मृतीनामनुमानत्वेन नित्याऽनुमेयवेदानुमापकत्वात्तन्मूलत्वादेव प्रामाण्यस्य सर्ववादिसम्मतत्वाद्ब्रह्मप्रतिपादिकायास्तस्या वेदमूलकत्वाऽभावेनाऽप्रामाण्यमेव भवेदित्यर्थः । यद्वा एव स्मार्त्तं ब्रह्मप्रकरण नित्याऽनुमेयवेदमूलकमित्यस्मिन्पक्षे स्मरणाच्चेतिव्याख्याय तत्त्वार्थदीपे '**पुराणमूलकं वापी**'ति तस्य पुराणमूलकत्वस्याऽपि स्वीकृतत्वेन पूर्वव्याख्यानाऽसम्भवात्प्रकारान्तरेण तद्व्याख्यानमाहु.—'**स्मरणाच्चे**'ति । '**ब्रह्मसंस्थोऽमृतत्वमेती**'ति श्रुतौ ब्रह्मसंस्थस्याऽमृतत्वप्राप्तिरुक्ता । ब्रह्मसंस्थत्व त्वितरव्यासङ्गाऽभावपूर्वक तत्रैव नैरन्तर्येण मनोनिवेशनम् । तच्च '**तं त्वौपनिषदं पुरुषं पृच्छामी**'ति श्रुतिपर्यालोचने वेदान्तवाक्याना गुरुमुखाच्छ्रवणाऽनन्तरं मननादौ क्रियमाणे भवतीति मननादिविषयत्वेन वेदान्तवाक्यानामेवोपादानात्तेषां वेदत्व गमयतीति बोध्यम् । श्रौतेनैव ब्रह्मज्ञानेनाऽमृतत्वम् । न स्मार्त्तेन । किन्तु चित्तशुद्धिमात्रम् । साऽपि सवासनैव । न तद्रहितेति ज्ञेयम् । स्मार्त्तं ब्रह्मप्रकरण नित्याऽनुमेयवेदमूलकमिति पक्षस्य गौणत्वप्रदर्शनार्थश्चकारोऽनावरार्थो ज्ञेयः । मुख्यपक्षे तु तस्य पुराणमेव मूलमिति तत्वार्थदीपे निरूपितत्वात् । नन्वेव वेदान्ताना साधितेऽपि वेदत्वे किं जातमित्यत आहुः—'**प्रमाणं चे**'ति । अपौरुषेयत्वेन निरस्तसमस्त-

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

न्तोष्वाधारपरम्परया शूद्राश्रवणादिनियमेनाऽऽर्यकर्तृकस्वरपूर्वकाऽध्ययनाऽध्यापनादिसत्त्वादित्यर्थः । नन्वाधारपरम्पराया अन्धपरम्परातुल्यत्व स्वीक्रियत इत्यत आह—'**स्मरणादि**'ति । **स्वयम्भूरेष भगवन् वेदो गीतस्त्वया पुरा । शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारका** इति पुराणवाक्याद्वेदान्तानामपि स्मरणं प्रतीयते । नतु कर्तृजन्मत्वमित्यर्थः । **सर्वोऽपि**

केनचिद्विरचिता वेदान्तचन्द्रिका ।

श्रवणपाठा आदिशब्दार्थः । नचेद सर्वं पूर्वकाण्डमात्रविषय । **ऋचां मूर्धानमिति** निन्दोपलब्धे. । '**स्मरणाच्चे**'ति । ब्रह्मप्रतिपादिकाया स्मृतेरित्यर्थ । वेदमूलकत्वेनैव तासां प्रामाण्याऽङ्गी-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

**शिरोऽथर्वणां मुण्डमुण्डम् । नाधीतेऽधीते वेदमाहुस्तमज्ञं शिरः छित्वासौ कुरुते कबन्धमि**त्यनेन वेदान्ताऽध्ययन विना केवलवेदाध्ययने दोषश्रवणादुपनिषदध्ययनस्य

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

वेदत्वेनानध्यायवर्जं शूद्रादिश्रवणवर्जं वेदाध्ययमार्थमुक्तनियमपुर सर वेदान्तानामध्ययनादित्यर्थ. । वेदान्तानां वेदत्वे हेत्वन्तरमाहु.—'**स्मरणाच्चे**'ति । 'साङ्गोपनिषदो वेदानधीत्याध्याप्य विस्तरात् ।

वेदः स्वार्थे । स च न यज्ञश्चेद्ब्रह्म भवतु । नचैतावता अवेदत्वम् । अतिप्रसङ्गात् । शक्यते

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

दोषाशङ्कस्त्वान्मुख्ययैव वृत्त्या स्वार्थं प्रत्याययतीति सिद्धम् । ननूक्तं यज्ञाऽप्रतिपादनान्न स्वार्थे प्रामाण्यमित्यत आहुः— स चेति । नहि क्रियाप्रतिपादकस्यैव वेदत्वमिति वक्तुं शक्यम् । तथा सति तदतिरिक्तस्य सर्वस्याऽप्यर्थवादाऽऽदिरूपस्याऽपि वेदस्याऽवेदत्वप्रसङ्गेनाऽवेदत्वस्याऽतिप्रसङ्गः स्यादित्यर्थः । नन्वस्त्वतिप्रसङ्ग इत्याशङ्क्याह—'शक्यते ही'ति । अग्निहोत्रादीनां कर्मणामन्यतरस्याऽन्तर्भावमङ्ग-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

पूर्वोत्तरकाण्डद्वयात्मकोऽपि । स्वार्थे अलौकिकेऽर्थे । स च अलौकिकार्थश्च । 'न यज्ञश्चेदि'ति । उत्तरकाण्ड इति शेषः । 'न चैतावते'ति । यज्ञातिरिक्तब्रह्मप्रतिपादकत्वेनाऽवेदत्वं न हीत्यर्थः । 'अतिप्रसङ्गादि'ति । अग्निहोत्रादिप्रतिपादकवाक्यानां यावद्यज्ञाऽप्रतिपादकत्वादवेदत्वप्रसङ्गादित्यर्थः । नन्वेवं चेत्तर्ह्यग्निहोत्रप्रतिपादकवाक्येषु वेदत्वमेव न वक्तव्यमित्यत आहुः—'शक्यते

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

कारात्तेषामवेदत्वे तत्प्रामाण्यं भज्येतेति भावः । यद्वा साङ्गोपनिषदो वेदानधीत्याऽध्याप्य विस्तरात् । ब्राह्मणो ब्रह्मवर्चस्वी लभते ब्रह्मणः पदमित्यादिस्त्रेतेरित्यर्थः । ननु वेदत्वमस्त्वेव, किं तत इत्यत आहुः—'प्रमाणमि'ति । अनेन तेषां किं स्यादित्युक्तमुत्तरतत्रवैयर्थ्यं निरस्तमिति भावः । ननु तथापि किमर्थत्वात्, तस्य तदभावे कथं तेषां तत्त्वमित्यत आहुः—'स चे'ति । सोऽर्थः । 'एतावते'ति । अयज्ञब्रह्मार्थत्वेन । 'अतिप्रसङ्गादि'ति । अवेदत्वाऽप्रसङ्गात् । तमेव व्युत्पादयन्ति—'शक्यते ही'ति । आदिशब्देन सत्रेष्टी । एषां मध्ये एकमपि यज्ञे-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

नित्यत्वमुपनिषदां वेदशिरस्त्वेन वेदावयवत्वमतोऽस्ति वेदत्वमित्यर्थः । तदेतदाहुः—'अध्ययनादिभ्य इति । अधीत्कुत्सुक्तेभ्यो वेदान्ताऽध्ययनादिभ्यो हेतुभ्यो वेदत्वमस्तीत्यर्थः । आदिशब्देन स्वरपूर्वकपाठशूद्राश्रवणानध्यायपरिपालनप्रभृतयो नियमा ग्राह्याः । 'स्मरणाच्चे'ति । स्वयम्भूरेष भगवान् वेदो गीतस्त्वया पुरा । शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारका इति पुराणवाक्येन यथा पूर्वकाण्डविषयकस्मरणमेव शिवादीनां, न पूर्वकाण्डकर्तृत्वम् । एवमुत्तरकाण्डस्याऽपि स्मरणमेव । कर्मत्वाभावान्न शिवादीनां कर्तृत्वमिति स्मरणस्यापि तौल्याद्वेदत्वमेवेत्यर्थः । वेदान्तानां वेदत्वे साधिते यत्सिद्धं तदाहुः—'प्रमाणं चे'त्यादि । अपौरुषत्वेन निखिलदोषराहित्यालक्षणाप्रभृतिहीनमुख्ययाभिधाख्यवृत्त्या स्वार्थं बोधयन्तीति हार्दम् ।

ननु साध्यप्रतिपादकत्वाऽभावाद्विध्यभावेन धर्मनिरूपणाभावात् कथं वेदत्वमित्याशङ्क्य समादधते—'स च न यज्ञश्चेद्ब्रह्म भवत्वि'ति । न हि क्रियाप्रतिपादकता वेदत्वमिति नियमोऽस्ति

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

ब्राह्मणो ब्रह्मवर्चस्वी लभते ब्रह्मणः पदमितिस्मरणादित्यर्थः । प्रमाणं मुख्यया वृत्त्या स्वार्थप्रमाजनकः । स्वार्थे शक्यार्थे । स च स्वार्थश्च । एतावता यज्ञाप्रतिपादकतयाऽवेदत्वाङ्गीकारे । अतिप्रसङ्गात् अवेदत्वस्यार्थवादादावापत्तिप्रसङ्गादित्यर्थः । शक्यते हीत्यादि । तथा च यावद्यज्ञाप्रतिपादकत्वमवे-

ह्यग्निहोत्रादीनामन्यतरदनन्तर्भाव्य तथा वक्तुम्। तस्मात् ब्रह्मापि प्रतिपादयन्तो वेदान्ता

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

त्वाऽपि वेदत्वमर्थवादादौ वक्तुं शक्यम्। अध्ययनविधिविषयत्वादि[ति] युक्तमेव। उक्तमर्थमुपसंहरति—'तस्मादि'ति। यस्मात्क्रियाऽतिरिक्ताऽर्थप्रतिपादका अपि अर्थवादा उक्तहेतोर्वेदत्वं न व्यभिचरन्ति तन्न्यायेन ब्रह्माऽपि प्रतिपादयन्तो वेदान्ता अपीति सिद्धम्।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

ही'ति। वक्तुमित्यनेनान्वयः। अग्निहोत्रादिप्रतिपादकवाक्यानामित्यर्थः। 'अन्यतरदि'ति। अत्राऽन्यतममिति प्रयोक्तव्यत्वेऽन्यतरदिति प्रयोगस्तु महाभाष्ये प्रत्ययः परश्चेत्यत्र निमित्तविचारं प्रकृत्य तदुदाहरणे 'तद्यथा बहुष्वासीनेषु कश्चित्कञ्चित्पृच्छति कतरो देवदत्त' इत्यत्रोपाध्यनङ्गीकाराद्बोध्यः। यावद्यज्ञप्रतिपादकत्वं यत्किञ्चिद्यज्ञप्रतिपादकत्वं चेत्युभयोर्मध्य एकमित्यर्थः। 'अनन्तर्भाव्ये'ति। यावत्त्वं यत्किञ्चित्त्वमनिवेश्येत्यर्थः। तथा वक्तुं यथाकथञ्चिद्यज्ञप्रतिपादकत्वं वेदत्वमिति वक्तुं शक्यत इत्यर्थः। केवलहोमप्रतिपादकानां वाक्यानां साक्षाद्यज्ञाऽप्रतिपादकत्वाद्यत्किञ्चिद्यज्ञप्रतिपादकत्वं यावद्यज्ञप्रतिपादकत्वं वा नास्तीत्यन्यतरदनन्तर्भाव्य यथाकथञ्चिद्यज्ञप्रतिपादकत्वं वेदत्वमिति वक्तव्यं तथाऽग्निहोत्रादिप्रतिपादकवाक्येषु होमं विना यज्ञादिसिद्धिर्न भवतीति होमद्वारा यथाकथञ्चिद्यज्ञप्रतिपादकत्वं वक्तुं शक्येतेति भावः। 'तस्मादि'ति। एतादृशवेदलक्षणादित्यर्थः। 'ब्रह्मापी'ति। यदेव विद्यया करोतीतिवाक्येन ब्रह्मज्ञानस्याऽपि

केनचिद्विरचिता वेदान्तचन्द्रिका।

ऽनन्तर्भाव्य तत्प्रतिपादके भागे। तथाऽवेदत्वम्। होमयागादीनां मिथो भेदात्। अग्निहोत्रादीनां कर्मणामेकमप्यनन्तर्भाव्य, अनु पुत्रेभ्यो दायं व्यभजदित्याद्यर्थवादेषु तथेति याऽर्थः। अध्ययनविधिविषयत्वादेव। उपसंहरति—'तस्मादि'ति। अक्रियार्थानामप्युक्तार्थवादानां वेदत्वात्।

श्रीलालूभट्टकृता गूढार्थदीपिका।

किन्तु यज्ञब्रह्माऽन्यतरप्रतिपादकत्वमपेक्षितम्। तदुत्तरकाण्डे ब्रह्मप्रतिपादकत्वमस्त्येवेत्यर्थः। अन्यथा वषट्कारो वै गायत्र्यै शिरोऽच्छिनत्तस्यै रसः परापतत्स पृथिवीं प्राविशत्स खदिरोऽभवदित्याद्यर्थवादानामवेदत्वं स्यात्। तदाहुः—'न च तावता अवेदत्वमतिप्रसङ्गादि'ति। अवेदत्वस्याऽर्थवादादिष्वतिप्रसङ्गादित्यर्थः। क्रियाप्रतिपादकाऽतिरिक्तेष्वपि वेदत्वमाहुः—'शक्यते ह्यग्निहोत्रादीनामि'त्यादिना। अग्निहोत्रादीनां कर्मणां मध्येऽन्यतरदपि कर्म, अर्थवादादिष्वनन्तर्भाव्याऽपि अर्थवादप्रतिपादितानां पदार्थानां अग्निहोत्रादिरूपक्रियात्वाऽभावेऽपि वेदत्वमस्तीत्यर्थः। 'तस्माद् ब्रह्मापी'त्यादि। यस्मात्कर्मातिरिक्तनिरूपकेष्वर्थवादेषु वेदत्वमस्ति, तस्मात्कर्माऽतिरिक्तब्रह्मनिरूपकेषु वेदान्तेष्वप्यस्ति वेदत्वमित्यर्थः। ननु मन्त्रब्राह्मणाऽति-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

दत्वमापकमुत यत्किञ्चिद्यज्ञाप्रतिपादकत्वं? तत्र नाद्यः ज्योतिष्टोमादियज्ञप्रतिपादकेपि यावद्यज्ञप्रतिपादकत्वाभावेन अवेदत्वापातात्। नान्त्यः। तस्मिन्नेव वाक्ये ज्योतिष्टोमेतरयत्किञ्चिद्यज्ञाप्रतिपादकत्वेनावेदत्वापत्तेः। अथवा, शक्यते हीत्यादि। तथा च होमयज्ञाद्यन्यतरदनन्तर्भाव्य अप्रतिपाद्यापि

वेदत्वं न व्यभिचरन्तीति। मन्त्रब्राह्मणरूपत्वं चोपपश्यामः। ऋगेव मन्त्रः। ब्रह्मप्रति-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

ननु मन्त्रब्राह्मणत्वाऽभावे कथं तेषां वेदत्वमित्यत आहुः—'मन्त्रब्राह्मणे'ति। एकेनैव चारितार्थ्येऽपि 'अधिकं तत्राऽनुप्रविष्टमि'तिन्यायेन ब्राह्मणरूपत्वमप्युक्तमिति ज्ञेयम्। पूर्वतन्त्र एव द्वितीये मन्त्रलक्षणमुक्त्वा 'ऋचः सामानि यजूंषि सा हि श्रीरमृता सतामि'ति मन्त्रे मन्त्राणां त्रैविध्यमुक्तम्। तत्र भेदकाऽभावे त्रैविध्यं नोपपद्यत इत्याशङ्क्य क्रमेण तेषां लक्षणं भेदसिद्ध्यर्थमुक्तम्। 'तेषां ऋग् यत्रार्थवशेन पादव्यवस्थे'त्यादिना। तदर्थस्तु यत्राऽर्थवाचकपदानुरोधेन

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

यज्ञोपकारकत्वादग्निहोत्रवाक्यानामिव ब्रह्मप्रतिपादकवेदान्तवाक्यानामपि यथाकथञ्चिद्ब्रह्मप्रतिपादकत्वं वेदत्वमस्तीति भावः। ननु कथं वेदत्वं वक्तव्यं, मन्त्रब्राह्मणरूपत्वं तु नास्तीत्युक्तमेवेत्यत आहु- 'मन्त्रे'ति। यद्यपि पूर्वकाण्डे मन्त्रलक्षणं बहुधा कथितं तथाऽपि ब्रह्मवादिभिर्यत्र मन्त्र इति समाख्या क्रियते स मन्त्रः। यत्र ब्राह्मण इति समाख्या तद्ब्राह्मणम्। तदुभयं वेदत्रये प्रसिद्धमत्राप्युपपश्याम इत्यर्थः।

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

स्वरूपतोऽपि वेदत्वं समर्थयन्ति—'मन्त्रे'त्यादि। यत्राऽर्थवशेनेत्याद्युगादिलक्षणाऽऽक्रान्तत्वान्मन्त्रत्वेन। अभियुक्तप्रसिद्धेश्च। ऋगादय एव मन्त्रा इत्याहुः—'ऋगेवे'ति। गायत्रीमन्त्रवत्। अत एव मान्त्रवर्णिकमेवेत्यग्रे वक्ष्यति भगवान् सूत्रकारः। ऋगित्युपलक्षणम्। तेन तत्त्वमसीत्यादीनां यजुष्ट्वं हावुहावु इत्यादीनां सामत्वं च सिध्यतीति हृदयम्। शेषे ब्राह्मणशब्द इति लक्षणसङ्गत्या च ब्राह्मणत्वमपीत्याहुः—'ब्रह्मे'ति। सृष्ट्यादिवाक्यानां ब्रह्माऽप्रतिपादिकत्वेऽपि

श्रीलालूभट्टकृता गूढार्थदीपिका।

रिक्तासूपनिषत्सु कथं वेदत्वमित्याशङ्क्याऽऽहुः—'मन्त्रब्राह्मणरूपत्वं चोपपश्याम' इति। मन्त्रब्राह्मणरूपत्वमुपनिषत्सूपपादयन्ति—'ऋगेवे'त्यादिना। मन्त्रलक्षणं निरूप्य, ऋचः सामानि यजूंषि सा हि श्रीरमृता सतामिति मन्त्राणां त्रैविध्यमुक्तं तत्त्रैविध्यसमर्थनाय भेदसाधकं त्रयाणां लक्षणमुक्तम्। ऋग् यत्रार्थवशेन पादव्यवस्थेत्यादिना। अर्थवाचकपदानुरोधेन यत्र पादव्यवस्था न छन्दोनुरोधेन सा। एवं सत्येतस्य लक्षणस्य वेदान्तेष्वपि सत्त्वादुपनिषदां भवत्यृक्त्वम्। ऋक्त्वे च सिद्धा मन्त्रता। ऋचः सामानि यजूंषीति श्रुतेः। सिद्धे मन्त्रत्वे वेदत्वं सिद्धमित्याशयः। ब्राह्मणत्वमप्युपपादयन्ति—'ब्रह्मप्रतिपादकमिती'ति। मन्त्राऽतिरिक्तस्य सर्वस्याऽपि

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

तथा वेदान्ता वेदा इति वक्तुं शक्यत एवेत्यर्थः। सिद्धान्तमुपसंहरन्ति—'तस्मादि'त्यादि। न व्यभिचरन्ति न वेदत्वशून्या भवन्ति। ननु मन्त्रब्राह्मणत्वाभावे कथं वेदान्तानां वेदत्वमित्यत आहुः— मन्त्रेत्यादि। तथा च यत्रार्थवाचकपदानुरोधेन पादव्यवस्था न छन्दोनुरोधेन सा ऋगिति पूर्वमीमांसायां लक्षणकरणादेतल्लक्षणस्य च वेदान्तेष्वपि सत्त्वात् ऋग्रूपमन्त्रत्वमव्याहतमेवेति भावः। ब्राह्मणरूपत्वं व्यवसापयन्ति—'ब्रह्मे'त्यादिना। एतदपि पूर्वतन्त्र एवोक्तं 'शेषे ब्राह्मणशब्द' इत्यत्र शेषे मन्त्रा-

पादकं ब्राह्मणम् । तच्छेषाः सृष्ट्यादिप्रतिपादकाः । यद्यपि न विधीयते तथापि तादृशमेव

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

पादव्यवस्था, न छन्दोऽनुरोधेन सा ऋगिति । तथा चैतस्य लक्षणस्य वेदान्तेष्वपि सत्त्वादस्ति मन्त्रत्वमित्यर्थः । ब्राह्मणरूपत्वमप्युपपादयन्ति—'ब्रह्मप्रतिपादकमि'ति । 'शेषे ब्राह्मण' इत्यत्र मन्त्राऽतिरिक्तस्य सर्वस्यैव शेषशब्देनोक्तेर्वेदान्तानामपि ब्राह्मणलक्षणाऽऽक्रान्तत्वेन ब्रह्मप्रतिपादकत्वेन च ब्राह्मणत्वमपि सिद्ध्यतीति सर्वथैव वेदत्वं न व्यभिचरन्तीति भावः । नन्वेवं सृष्ट्यादिवाक्यानां का गतिर्ब्रह्मप्रतिपादकत्वाऽऽभावादित्यत आहुः—'तच्छेषा' इति । तेषां ब्रह्मप्रतिपादकानां वाक्यानां शेषभूता इति । तेषामपि माहात्म्यप्रतिपादनद्वारा ब्रह्मनिरूपकत्वमेवेति भावः ।

ननु ब्रह्मप्रतिपादकत्वाद्ब्राह्मणत्वं वेदान्तानामिति यदुक्तं तन्न सम्भवति । यतः सर्वस्यैवाऽऽम्नायस्याऽध्ययनविधिविषयत्वेन क्रियार्थत्वाद्वेदान्तानामतदर्थानामपुरुषार्थानां भूतार्थत्वेन च पक्षादिभिः समानविषयाणां लौकिकवाक्यवत्तदर्थाऽनुवादकानां कथमिव प्रामाण्यसम्भवः । अबाधिताऽ-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

नन्वत्र कथं प्रतीयत इत्यत आहुः—'ऋगेवे'ति । सत्यं ज्ञानमिति ऋगेवेत्यर्थः । 'ब्रह्मे'ति । ब्रह्मप्रतिपादकं यद्वाक्यं तत्सर्वं ब्राह्मणमित्यर्थः । 'तच्छेषा' इति ब्रह्मप्रतिपादकवाक्यशेषा इत्यर्थः । 'सृष्ट्यादी'ति । आदिनोपासनाप्रतिपादकवाक्यपरिग्रहः । 'तस्माद्वा एतस्मा'दित्यादिभागा इत्यर्थः । प्रतिपादका इत्येव पाठः । न तु प्रतिपादिका इति पाठः । ननु तथाप्यस्तु नाम वेदत्वं, निष्फलत्वरूपवेदोपरत्वनिवारणं तु न जातमित्यत आहुः—'यद्यपी'ति । 'न विधीयत'

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

तच्छेषत्वेन सङ्गतिमाहुः—'तच्छेषा'इति । ब्रह्मप्रतिपादकवाक्यानां शेषाः । एतेनैव ब्रह्मस्वरूपज्ञानाङ्गं सृष्ट्यादिवाक्यप्रतिपादितमाहात्म्यज्ञानमित्युक्तं भवति । ननु ज्ञानस्याऽविधेयत्वात्कथमस्य

श्रीलालूभट्टकृता गूढार्थदीपिका ।

शेषे ब्राह्मण इत्यत्र ब्राह्मणस्योक्तेरुपनिषदामपि ब्राह्मणलक्षणाऽऽक्रान्तत्वादस्ति ब्राह्मणत्वम् । ब्रह्मप्रतिपादकं ब्राह्मणमिति शब्दसिद्ध्यापि ब्राह्मणत्वं सिद्ध्यतीत्याहुः—'ब्रह्मप्रतिपादकमि'ति । ब्रह्मराम्यन्वि ब्राह्मणम् । प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । सिद्धे ब्राह्मणत्वे वेदत्वमस्तीति हार्दम् । अत्रेवं ज्ञेयम् । व्याख्यातॄणां पुरुषत्वात्तदुक्तानां परस्परं कलहग्रस्तत्वात्पुरुषोक्तिमनादृत्य ऋषिवाक्यरूपं सूत्रमानमादृत्य ब्रह्मप्रतिपादकं ब्राह्मणमिति भगवता भाष्यकारेणोक्तम् । एवं ऋचां मूर्द्धानं यजुषामुत्तमाङ्गमिति श्रुत्युक्तं वेदान्तानां वेदशिरस्त्वं सिद्धं भवतीति महांल्लाभः । आपो वा इदमग्रे सलिलमासीदित्यादिसृष्टिनिरूपकाणां गतिमाहुः—'तच्छेषा' इत्यादिना । सृष्ट्यादि-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

तिरिक्तसर्ववेदभागे ब्राह्मणशब्दः ब्राह्मणपदवाच्यत्वमित्यर्थः । एवं ब्रह्मप्रतिपादकवेदत्वेनापि ब्राह्मणत्वमुक्तं बोध्यम् । ननु सृष्ट्युपासनाप्रकारफलप्रशंसनादिवेदभागानां ब्रह्मप्रतिपादकत्वाभावाद्ब्राह्मणत्वं न स्यादित्यत आहुः—'तच्छेषा' इत्यादि । तथा च माहात्म्यज्ञानद्वारा तेषामपि ब्रह्मप्रतिपाद-

नागताऽसन्दिग्धबोधजनकत्वस्य तत्राऽसत्त्वात्। अतएव 'आऽऽम्नायस्य क्रियार्थत्वादि'त्यनेन शास्त्रस्य सर्वस्यापि क्रियापरत्वमङ्गीकृत्य 'सोरोदीदि'त्यादीनां 'विधिना त्वेकवाक्यत्वादि'-त्यनेन स्तुत्याद्यर्थतया मन्त्राणां 'चेषेत्वे'त्यादीनां क्रियातत्साधनाऽभिधायित्वेन विध्येकवाक्यतां सम्पाद्य प्रामाण्यं समर्थितम्। न तु साक्षात्स्वार्थप्रत्यायनेन। नहि परिनिष्ठितवस्तुप्रतिपादकानां विध्येकवाक्यतां विनाऽर्थवत्त्वं क्वचिद्दृष्टमुपपन्नं वा। तस्मात्पूर्वकाण्डोक्तक्रियासमवायिकर्तृदेवतादि-प्रकाशनार्थत्वेन स्वप्रकरणोक्तोपासनादिक्रियार्थत्वेन वा प्रामाण्यस्य वक्तुं शक्यत्वान्न ब्रह्मप्रतिपादकत्वं वेदान्तानामुपपद्यत इति कथं ब्रह्मप्रतिपादकं ब्राह्मणमिति सङ्गच्छते। नन्वक्रियार्थत्वेऽपि ब्रह्मस्वरूप-विधिपरत्वं वेदान्तानां भविष्यति। न खल्वप्रवृत्तप्रवर्तनमेव विधिः। उत्पत्तिविधेरज्ञातज्ञापनाऽर्थ-त्वेन वेदान्तानामज्ञातं ब्रह्म ज्ञापयतां विधायकत्वात्स्वार्थ एव प्रामाण्यमिति चेत्। अनागतोत्पाद्यभा-वविषयत्वाद्विधिमात्रस्य। नन्वन्येषां तथात्वेऽप्युत्पत्तिविधेर्न तथात्वमिति वाच्यम्। उत्पत्त्यधिकार-प्रयोगविनियोगरूपाणां चतुर्णामपि परस्पराऽविनाभावादुत्पत्तिविधेरपि तथा नियमस्याऽवश्यकत्वात्। विधिमात्रस्य भावनाविषयत्वात्।

उच्यते। अस्ति तावद्वेदान्तानां ब्रह्मस्वरूपमात्रपरत्वम्। ननु क्रियासमवायिकर्तृदेवतादि-प्रकाशनाऽर्थत्वमेव कुतो नेतिचेत्त'त्केन कं पश्येदि'त्यादिवेदान्तवाक्येभ्यः क्रियाकारकफलनि-राकरणस्याऽवगतत्वात्। ननु सर्वत्र क्रियातत्साधनान्यतराऽभिधायित्वे पुरुषार्थपर्यवसायित्वं दृष्ट-मिति वेदान्तानां तदन्यतराऽनभिधायित्वे कथं तत्त्वमिति चेत्। 'ब्राह्मणो न हन्तव्य' इत्यादौ निवृत्तिरुपदिश्यते। न च सा क्रिया तत्साधनं वेति तदुपदेशस्य निष्प्रयोजनत्वं प्रसज्येत। स्वभा-वप्राप्तहननविषयत्वबोधनेन भवति। ननु क्रियाकारित्वेन। नञः स्वसम्बन्धिनोऽभावबोधकत्वस्यैव प्रतीयमानत्वात्। अभावबुद्धिश्चौदासीन्यकारणं दग्धेन्धनाऽग्निवत्स्वयमेवोपशाम्यति। तथा च क्रिया-तत्साधनाऽभिधायित्वेऽपि पुरुषार्थपर्यवसानस्य तत्र दृष्टत्वादत्रापि तथात्वे न किञ्चिदनुपपन्नम्। ननु वेदान्तानां सिद्धवस्तुपरत्वे प्रत्यक्षादिभिः समानविषयत्वेन प्रमाणलक्षणाऽसङ्गतिरिति चेत्। 'तत्त्वमसी'ति ब्रह्मात्मभावस्य वेदान्तव्यतिरेकेणाऽनधिगतत्वात्। न च सिद्धवस्तुनो हेयोपादेय-रहितत्वात्तत्प्रतिपादकानां तेषां परमपुरुषार्थत्वं स्यादितिवाच्यम्। 'त्वं हि नः पिता योऽस्माक-मविद्यायाः परं पारं तारयति' 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवि-दि'ति। 'सोहं भगवः शोचामि तं मां भवांच्छोकस्य पारं तारयतु, तस्मै मृदित-कषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार' इत्येवमाद्याः श्रुतयो मोक्षप्रतिबन्ध-निवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति। पुरुषार्थपर्यवसायित्वं न व्यभिचरन्ति।

ननु पूर्वकाण्डोक्तकर्मसमवायिकर्तृदेवतादिप्रकाशनाऽर्थत्वाऽभावेऽपि स्वप्रकरणगतोपास-नार्थत्वे किं बाधकमिति चेत्। एकत्वविज्ञानेन द्वैतविज्ञानस्योन्मथितत्वेनोपास्योपासकोपासनभेद-घटितोपासनाया निरस्तसमस्तभेदप्रपञ्चे ब्रह्मणि वक्तुमशक्यत्वान्नोपासनाविधिशेषत्वमपि वेदान्तानां सम्भवति। ननु ज्ञानं नाम मानसी क्रिया। तथा च यथा स्वर्गकामस्याऽग्निहोत्रादिसाधनं विधीयते तथाऽमृतत्वकामस्य ब्रह्मज्ञानमिति कथं न विधिविषयत्वं तस्येति चेत्। क्रिया हि नाम सा, या

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

वस्तुस्वरूपनिरपेक्षैव चोद्यते । पुरुषचित्तव्यापारायत्ता च यथा यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेद्वषट् करिष्यन्' 'सन्ध्यां मनसा ध्यायेदि'त्यादिषु ध्यानं चिन्तनं यथा मानसी क्रिया । पुरुषेण कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वात् । न तथा ज्ञानं प्रमाणजन्यं भूतवस्तु विषयम् । प्रमाणवस्तुपरतन्त्रत्वे कर्तुमकर्तुमन्यथाकर्तुमशक्यत्वेन चोदनाऽविषयत्वात् । यथा 'वाचं धेनुमुपासीत' 'मनो ब्रह्मेत्युपासीत' 'आदित्यो वै देवमध्वि'त्यादौ वागादिषु धेन्वादिबुद्धिर्मानसी क्रिया । नोदकवाक्यमात्रजन्यत्वात्पुरुषतन्त्रत्वाच्च । न तथा वागादिषु वागादिबुद्धिः पूर्वोक्तहेतुद्वयाऽभावात् ।

नन्वेवं सति 'द्रष्टव्य' इत्यादीनि कथं सङ्गतानि भविष्यन्तीति विधिरूपत्वस्य प्रतीयमानत्वादिति चेत् । अत्र ब्रूमः । तद्विषये श्रूयमाणा अपि लिङ्गादयोऽनियोज्यविषयत्वाद्वज्रमणिप्रयुक्तवासादितैक्ष्ण्यवत्कुंठीभवन्तो दर्शनादीनामर्हत्वादिबोधनेन बहिर्मुखपुरुषस्वाभाविकप्रवृत्तिविषयविमुखीकरणेन सार्थका भवन्ति । यद्यपि बहिर्मुखोऽपीष्टं मे भूयादनिष्टं मे मा भूदित्यनुसन्धाय प्रवर्तते । इष्टतत्साधनताज्ञानस्य प्रवृत्तिमात्रहेतुत्वात् । तथापि तदभिमतस्येष्टस्याऽनिष्टत्वात्स्वाभाविकेष्टप्रदर्शनार्थं तदुपयोगात् । ततस्तत्कारणापेक्षया 'श्रोतव्यो मन्तव्य' इत्यादिभिः फलोपकार्यङ्गाभ्यां सह श्रवणमेव साधनत्वेन विधीयते । चोदनाविषयत्वादिति । तदेतदनुसन्धायोक्त ब्रह्मप्रतिपादक-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

इति । ब्रह्मज्ञानमिति शेषः । यथा 'स्वर्गकामो यजेते'तिवाक्यस्य विधित्वात् स्वर्गरूपफलजनकयागप्रतिपादकत्वं तथात्र मोक्षरूपफलजनकब्रह्मज्ञानविधायकविध्यभावाद्वेदोपरत्वमिति भावः । वेदोपरत्वं खण्डयन्ति–'तथापी'ति । तादृशविध्यभावेऽपीत्यर्थः । 'ज्ञानमि'ति । तस्माद्वेत्यादि-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

शेषत्वमित्यत आहुः—'यद्यपी'ति । 'तादृशमि'ति । कर्तृत्वादिधर्मविशिष्टं ब्रह्मज्ञानम् । ननु

श्रीलालूभट्टकृता गूढार्थदीपिका ।

प्रतिपादका अपि सृष्ट्यादिद्वारा ब्रह्ममहिमानं वर्णयन्तो ब्रह्मप्रतिपादका एवेति भावः । ननु सृष्ट्याद्यर्थवादानां शेषत्वमनुपपन्नम् । स्तुत्यर्थेन विधीनां स्तुरित्वेन विधिशेषतयैव तेषां सार्थक्यकथनादित्याशङ्क्याऽऽहुः—'यद्यपि न विधीयत' इत्यादि । यद्यपि ब्रह्म न विधीयते । स्वतः सर्वदा विद्यमानत्वेनाऽऽविधेयत्वात् । तथात्र सृष्ट्याद्यर्थवादानामनुपयोग इवायाति, तथापि ब्रह्मविदाप्नोति परमित्यादौ फलप्राप्त्यर्थं ब्रह्मज्ञानाऽपेक्षोक्ता । ब्रह्मज्ञानं तु द्वेधास्ति । स्वरूपज्ञानं, लीलाविशिष्टज्ञानं च । तत्र सत्यं ज्ञानमनन्तं ब्रह्मेति स्वरूपज्ञानमुक्त्वा, तस्माद्वा एतस्मादि'त्यनेन सर्गलीला निरूपिता । इत्थं स्वरूपज्ञानं लीलाज्ञानं च परप्राप्तिसाधकमिति तन्निरूपकाः सृष्ट्यादिप्रतिपादका वेदान्ता ज्ञानशेषभावं भजन्तोऽत्यन्तमुपयुक्ता भवन्तीत्याहुः—'तादृशमेव

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

कत्वात् ब्रह्मप्रतिपादकवाक्यशेषतया तेषामपि प्रामाणत्वमव्याहतमित्यर्थः । यद्यपीत्यादि । न विधीयते सृष्ट्यादिवाक्यैर्माहात्म्यज्ञानं ब्रह्मणि न विधीयते । तथापि विधानाभावेपि । तादृशमेव ब्रह्मबोधक-

ज्ञानं फलायेति युक्तमुत्पश्यामः । पूर्ववैलक्षण्यन्तु भूषणाय । काण्डद्वयस्याऽन्योन्योप-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

मित्यारभ्य उत्पश्याम इत्यन्तमित्यलं विस्तरेण । नन्वेवं ब्रह्मज्ञानस्य धर्मवैलक्षण्यं भवेत्तदेव तु बाधकमितिचेत्तत्राह—'पूर्ववैलक्षण्यमि'ति । अलंकारो ह्ययमस्माकं यत्पूर्ववैलक्षण्यम् । धर्मस्य त्रिवर्गसाधकत्वाद्ब्रह्मज्ञानस्य च तद्विरोधिकृतकृत्यतासाधकत्वान्महदेव वैलक्षण्यम् । तथाच श्रुतिः— 'आत्मानं चेद्विजानीयादहमस्मीति पूरुषः । किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेदि'ति । स्मृतिश्च 'एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारते'ति । ननूत्तरस्य पूर्वापेक्षयाऽभ्यर्हितत्वे शास्त्रयोनित्वादिति सामान्यग्रहणं निःप्रयोजनम् । उपनिषद्योनित्वादित्यस्यैव सप्रयोजनत्वादित्यत आह—'काण्डद्वयस्ये'ति । अध्ययनविधिविषयत्वेन सर्वोऽपि वेदराशिः पुरुषार्थश्च नाऽमृतत्वव्यतिरेकेणाऽन्यो भवितुमर्हति । तथा च 'स्वर्गकामस्वाराज्यकामा'दिशब्दश्रवणा-

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

वाक्यादेव ब्रह्मणि जगत्कर्तृत्वज्ञानमित्यर्थः । 'फलाये'ति । परप्राप्तिरूपफलायेत्यर्थः । 'युक्तमि'ति । फलयुक्तमित्यर्थः । तथा च कुत्रापि वेदोपरत्वं नास्तीति भावः । ननु पूर्वकाण्डे विधिवाक्यादेव फलं प्रतीयतेऽत्र तु तथा नास्तीति वैलक्षण्यमित्यत आह—'पूर्वे'ति । 'भूषणाये'ति । विधिवाक्याभावेऽपि केवलवाक्यार्थज्ञानादेव फलं जायत इत्याधिक्यमेव भूषणार्थं भवतीत्यर्थः ।

एवंरीत्या मीमांसकमतं निराकृत्य शास्त्रयोनित्वादित्यत्र शास्त्रपदस्वारस्यमाहुः—'काण्डे'ति । 'अन्योन्ये'ति । उभयोरेकवाक्यत्वबोधनायेत्यर्थः । 'साधारणे'ति । सूत्र उभयसाधारण

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

पूर्वतन्त्रे विहितस्यैव फलदत्वमुक्तं, कथमविहितस्य तथात्वमित्यत आहुः—'पूर्वे'ति । वैयर्थ्यनिरासत्वादिति भावः । एतेन पूर्वोक्तोपरत्वमपि निरस्तं ज्ञेयम् । शास्त्रपदाऽऽदानस्य प्रयोजनान्तरम-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ज्ञानमि'त्यादि । 'तादृशमेवे'ति । सृष्ट्यादिकर्तृत्वविशिष्टज्ञानमेवेत्यर्थः । 'फलाये'ति । परप्राप्तिरूपाय फलायेत्यर्थः । तथा च तादृग्ज्ञानविषयीभूतलीलाप्रतिपादकत्वेन ज्ञानशेषभूताः सृष्ट्यार्थवादा इति फलितम् । ननु पूर्वकाण्डेऽर्थवादा विध्युक्तस्तावकत्वेन शेषभावं भजन्तोऽनुपयोगित्वमपनुदन्तः सार्थका भवन्त्यत्र तु सिद्धपदार्थमहिमानं वर्णयन्तो ज्ञानशेषभावं स्फोरयन्तः सार्थकतामापद्यन्त इत्युक्तं, तथा च धर्मनिरूपकपूर्वकाण्डवैलक्षण्यमेव महद्दूषणमित्याशङ्क्याऽऽहुः—'पूर्ववैलक्षण्यं त्वि'त्यादि । पूर्वकाण्डस्य नश्वरस्वर्गादिसाधकत्वमुत्तरस्य त्वक्षयरूपब्रह्मप्राप्तिसाधकत्व-

नवद्वीपस्थश्रीमदिच्छारामप्रणीत प्रदीप ।

वाक्यार्थज्ञानविषयब्रह्ममाहात्म्यविषयकमेव । फलाय भक्तिरूपफलसम्पादनायेत्यर्थः । नन्वेव ब्रह्मज्ञानस्य धर्मवैलक्षण्यं स्यादतआहुः—'पूर्वे'त्यादि । भूषणाय धर्मस्य त्रिवर्गसाधकत्वात् ब्रह्मज्ञानस्य च तद्विरोधिमोक्षरूपपरमफलसाधकत्वात् धर्मवैलक्षण्य इष्टमेवेत्यर्थः । 'आत्मानं चेद्विजानीयादहमस्मीति पूरुषः । किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेदि'तिश्रुतेः । ननूत्तरकाण्डस्य पुरुषार्थपर्यवसाने पूर्वस्य च त्रिवर्गोपक्षीणत्वे काण्डद्वयोपसंहारक शास्त्रयोनित्वादितिसामान्योपादानमनुचित उपनिषद्योनित्वादित्येव चोचितमित्यत आहुः—'काण्डद्वयस्ये'त्यादि । तथा चाध्ययनाध्यापनविधिविषयत्वेन

कारित्वाय साधारणग्रहणम् । 'यदेव विद्यया करोती' त्यादिना पूर्वशेषत्वं सर्वस्य । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'त्यादिना सर्वस्योत्तरशेषत्वम् । कर्मब्रह्मणोः क्रियाज्ञानयोर्धर्मिपरत्वेनैक्यात्कर्तृवाक्येषु सर्वत्र न विरोधः । तस्माच्छास्त्रयोनित्वं सिद्धम् ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

स्पूर्वस्य पुरुषार्थत्वमस्ति नवेति सन्देहनिराकरणाय 'यदेव विद्यया करोती'त्यादिना ज्ञानपूर्वं कृतस्य वीर्यवत्तरत्वनिरूपणेन पुरुषार्थत्वमबाधितमेव सिध्यति । न चैवमुत्तरस्य पूर्वशेषत्वे गौणत्वापत्तिरिति वाच्यम् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'त्यादिना पूर्वस्याऽप्युत्तरशेषत्वश्रवणात् । सर्वस्य कृत्स्नस्येत्यर्थः । नन्वेवं साम्यापत्तिरेव स्यादिति चेदिष्टापत्तिः । 'वेदो नारायणः साक्षादि'त्यादिना साम्यस्य निष्पत्यूहत्वात् ।

ननु वेदस्य सर्वस्याऽप्यपौरुषेयत्वेन निरस्तसमस्तदोषाशङ्कत्वे कथं प्रजापत्यग्निहोत्रप्रभृतीनां कर्तृत्वोक्तिरुपपन्ना भविष्यतीत्याशङ्क्याह—'कर्मब्रह्मणोरि'ति । क्रियायां प्रविष्टत्वात्क्रियारूपत्वेन

गोस्वामिश्रीमद्विट्ठलेश्वरविरचितं विवरणम् ।

शास्त्रपदग्रहणमित्यर्थः । एकवाक्यत्वमेवाऽऽहुः–'यदेवे'ति । चतुर्थाध्याये, यदेव विद्ययेति हीति सूत्रे वक्ष्यते । पूर्वशेषत्वं प्रथमतो ब्रह्मज्ञानं सम्पाद्यानन्तरं कर्मकरणे कर्मणः पौष्कल्यं जायत इति वेदान्तस्य पूर्वकाण्डाङ्गत्वमित्यर्थः । एवं पूर्वस्योत्तराङ्गत्वमाहुः–'तमेते'ति । कर्मणा च भगवत्प्रसादेन चित्तशुद्धौ ज्ञानमुत्पद्यत इति परस्परापेक्षितत्वेन साकाङ्क्षत्वादेकार्थप्रतिपादकत्वाच्चैकवाक्यत्वमिति भावः । ननु कथमुभयोरेकार्थत्वमत आहुः–'कर्मब्रह्मणोरि'ति । कर्मणः

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

प्याहुः—'काण्डद्वयस्ये'ति । तत्र प्रमाणमाहुः—'यदेवे'त्यादिना । 'सर्वस्ये'ति । उत्तरस्येति शेषः । नन्वेवमन्योन्याश्रय इति वाच्यम् । प्रामाणिकेऽर्थे तदनभ्युपगमात् । 'ननु न सर्वोपी'त्युक्तं विरोधं परिहरन्ति—'कर्मब्रह्मणो'रिति । कर्मज्ञानकाण्डयोः । 'क्रियाज्ञानयोरि'ति । स्वस्वप्रतिपाद्य-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

मतस्तद्वैलक्षण्यमत्र भूषणायैवेत्यर्थः । 'काण्डद्वयस्ये'त्यादि । यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवतीति श्रुतेः पूर्वकाण्डस्योत्तरकाण्डमुपकरोति । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्तीति श्रुतेरुत्तरकाण्डस्य पूर्वकाण्डमुपकरोत्येवं यः

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीपः ।

सर्वोपि वेदराशिः पुरुषार्थपर्यवसायी पुरुषार्थश्च परब्रह्मप्राप्तिरेव नान्यो भवितुमर्हति । इत्थं च पूर्वकाण्डे स्वर्गकामस्वाराज्यादिकामनाश्रवणात् परमपुरुषार्थपर्यवसाने च सन्देहः प्राप्तः । तन्निरासाय उक्तपुरुषार्थपर्यवसानाय च 'यदेव विद्यये'त्यादिना वीर्यवत्तरत्वनिरूपणेन कर्मणां पुरुषार्थपर्यवसानमुक्तम् । इत्थं च सर्वस्यापि वेदराशेः पूर्वकाण्डोक्तकर्मशेषत्वमागतम् । एवमुत्तरस्य पूर्वशेषत्वे गौणत्वं स्यादत आहुः—'तमेतमि'त्यादि । तथा च वेदानुवचनयज्ञदानतपःप्रभृतिभिर्ब्रह्मज्ञानेच्छापूर्तेः श्रवणात्सर्वस्य वेदराशेरुत्तरशेषत्वमिति न गौणता । सर्वस्य वेदस्य ब्रह्मत्वेन साम्ये त्विष्टापत्तिः । ननु सर्वस्य वेदस्य समप्रामाण्ये प्रजापत्यग्निहोत्रादीनामपि कर्तृत्वप्रतिपादनाद्ब्रह्ममात्रपर्यवसित कर्तृत्वं कथं सिद्ध्येदित्यत आहुः—'कर्मब्रह्मणो'रिति । क्रियाज्ञानयोः क्रियाज्ञानस्वरूपयोःधर्मिपरत्वेनेत्यादि । क्रियायाः

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

प्रतीयमानत्वेऽपि कर्मणो **'यज्ञो वै विष्णुरि'**तिश्रुतेर्धर्मिरूपत्वाज्ज्ञाने प्रविष्टत्वाज्ज्ञानरूपत्वेन प्रतीयमानत्वेऽपि ज्ञानस्य **'विज्ञानमानन्दं ब्रह्मे'**ति धर्मिरूपत्वादुभयकारणत्वनिरूपकयोरपि वाक्ययोरेकवाक्यत्वार्थं विशिष्टैकधर्मिनिरूपकत्वस्याऽवश्याऽभ्युपेयत्वात् । **कर्तृवाक्येषु** कर्मब्रह्मकर्तृत्वप्रतिपादकवाक्येषु पूर्वोत्तरकाण्डस्थेषु सर्वत्र विरोधो नास्तीत्यर्थः । धर्मरूपेण भेदेऽपि धर्मिण एकत्वात् । नन्वेवं कर्मकर्तृत्वबोधकानां तेषां परिहृत्वेऽपि विरोधे प्रजापत्यादिकर्तृत्वबोधकानां कथं सङ्गतिरिति चेत् । तेषामवान्तरकारणत्वेन विरोधस्याऽनवसरपराहतत्वात् । ननूक्तं तस्मात्परस्याऽश्रवणादिति । नैष दोषः । तेषामपि यज्ञतपःप्रभृतिसाधनकरणाऽनन्तरमेव कारणत्वोक्तेः । उत्तरकाण्डे ततोऽपि परस्य ब्रह्मणः श्रवणाच्च । न च प्रकरणभेदात्कथं तस्य प्रयोजकत्वमिति वाच्यम् । सर्वस्याऽपि वेदस्यैकार्थप्रतिपादकत्वेनैकवाक्यत्वात्प्रकरणभेदस्य बुद्धिसौकर्यार्थं कल्पितत्वात् । अधुनोक्तमर्थमुपसंहरन्ति—**'तस्मादि'**ति । पूर्वोक्तात्कारणकलापाद्ब्रह्मण एव शास्त्रोक्तं कारणत्वं सिद्ध-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

क्रियारूपत्वेन ब्रह्मणो ज्ञानरूपत्वेन, **धर्मो** यस्यामित्येकादशस्कन्धोक्तेर्ब्रह्मणोऽपि, धर्मरूपत्वेन धर्मिणोः क्रियाज्ञानयोरैक्यात्पूर्वोत्तरमीमांसयोरपि क्रियाज्ञानरूपधर्मिविचारात्मकत्वेनैक्यादेव पूर्वोत्तरकाण्डगतं कर्तृत्वं ब्रह्मण्येव पर्यवसतीति न विरोध इति भावः । **'सिद्धमि'**ति । ब्रह्मणि वेदप्रतिपाद्यं जगत्कर्तृत्वं सिद्धमित्यर्थः ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

भगवत्क्रियाज्ञानशक्तिरूपयोर्यो धर्मस्तत्परत्वेन भगवद्धर्माणां भगवदभिन्नत्वाद्यज्ञो वै विष्णु-**र्विज्ञानमानन्दं ब्रह्मे**त्यादिश्रुतेश्च धर्मनिरूपणेनानेन धर्मिप्रतिपत्तिसम्पत्तिवद्विशिष्टधर्मिनिरूपकत्वेनैक्यादेकार्थप्रतिपादकत्वेनैकवाक्यत्वाद्धेतोः कर्तृवाक्येषु सर्वत्र पूर्वोत्तरकाण्डस्थितेषु मिथो न विरोध

श्रीलालूभट्टकृता गूढार्थदीपिका ।

परस्परोपकारकत्वलक्षणो गुणस्तेन चैकहार्दत्वसूचनाय शास्त्रयोनित्वादित्यत्र काण्डद्वयसाधारणस्य शास्त्रपदस्य ग्रहणम् । अन्यथा वेदान्तयोनित्वादित्येव वदेत् । नन्वेवमेकहार्दत्व उत्तरकाण्डे ब्रह्मणः कारणत्वोक्तिवत्पूर्वकाण्डेऽपि ब्रह्मकारणत्वोक्तिरित्याशङ्क्याऽऽहुः—**'कर्मब्रह्मणोरि'**त्यादि । पूर्वकाण्डे प्रतिपाद्या या यज्ञात्मकभगवतो धर्मरूपा, तस्यां प्रविष्टस्य भगवतः क्रियारूपत्वम् । उत्तरस्मिन् काण्डे प्रतिपाद्य यज्ज्ञान ब्रह्मात्मक भगवतो धर्मरूप, तस्मिन् धर्मरूपे ज्ञाने प्रविष्टस्य भगवतो ज्ञानरूपत्वम् । एवं क्रियाज्ञानरूपयोः कर्मब्रह्मणोर्धर्मिपरत्वेन धर्मी यो भगवान् तत्परत्वेन तद्रूपत्वेनैक्यात्कर्तृवाक्येषु कर्मनिष्ठकर्तृत्वनिरूपकवाक्येषु न विरोधः । अग्निहोत्ररूपे कर्मणि यत्कर्तृत्वं निरूपितं ब्रह्मनिष्ठमेव, कर्मब्रह्मणो भगवद्रूपत्वेनाऽविरोधादिति भावः । एकदेशिमतदूषणार्थमनु-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

धर्मिरूपत्वं 'यज्ञो वै विष्णुरि'तिश्रुत्या, ज्ञानस्य धर्मिरूपत्वं 'विज्ञानमानन्दं ब्रह्मे'तिश्रुत्यावसेयम् । **न विरोधः** वेदे यत्र कापि प्रतिपादितं कर्तृत्वं ब्रह्मण्येव पर्यवस्यतीति न विरोध इत्यर्थः । तस्मात् पूर्वोक्तरीत्याऽविरोधप्रतिपादनात् । **शास्त्रयोनित्वं** शास्त्रोक्तकर्तृत्ववत्त्वं ब्रह्मणि सिद्धमित्यर्थः ।

केचिदत्र जन्मादिसूत्रं लक्षणत्वादनुमानमिति वर्णयन्ति । अन्ये पुनः श्रुत्यनुवाद-

गोस्वामिश्रीमुरलीधरविरचिता भाष्यप्रकाशव्याख्या ।

मित्यर्थः । एकदेशिमतद्वयमनूद्य दूषयति—'केचिदि'त्याऽऽरभ्यो'पेक्ष्यमि'त्यन्तेन । जन्माद्यस्य-यत इत्यस्य संसारिव्यतिरिक्तेश्वराऽस्तित्वसाधकाऽनुमाननिरूपकत्वमिति वदन्ति । अनुमानप्रकारस्तु—संसारिव्यतिरिक्त आत्माऽस्ति । जगज्जन्मादिकारणत्वादिति । अत्र हेतुनिरूपकत्वादनुमानरूपत्वं सूत्रस्य । अन्ये पुनर्यथा ब्रह्मणि श्रुतिः प्रमाणं तथा 'यतो वे'त्यादिश्रुत्यनुवादकमि-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

नैयायिकमतमनूद्य दूषयन्ति—'केचिदत्रे'ति । अत्र ईश्वरस्य जगत्कर्तृत्वविषये । 'लक्षणत्वादि'ति । लक्षणबोधकत्वादित्यर्थः । 'अनुमानमि'ति । तेषां मते लक्षणस्येतरभेदसाधकत्वात् गन्धवत्त्वस्य पृथिव्या लक्षणकरणेन पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् । यन्नैवं तन्नैवं यथा जलमिति व्यतिरेक्यनुमानेन यथा पृथिव्यां जलादिभेदः सिद्ध्यति, तथाऽनुमानद्वयेन जगत्कर्तृत्वस्येश्वरस्य च सिद्धौ सूत्रैर्जगज्जन्मादिकर्तृत्वरूपलक्षणकरणेन 'ब्रह्मस्वरूपं जीवजडव्यतिरिक्तं भवितुमर्हति । जगज्जन्मादिकर्तृत्वात् । यन्नैवं तन्नैवम् । यथा जीव' इति जीवभिन्नत्वसाधकं व्यतिरेक्यनुमानमित्यर्थः । ननु कीदृशानुमानद्वयमिति चेदुच्यते—प्रथमं जगति कार्यत्वसाधकमेकमनुमानम् । तथा हि—जगत् कार्यम् । सावयवत्वात् । महत्त्वे सति क्रियावत्त्वात् । महत्त्वे सति मूर्तत्वाच्च । घटादिवदित्यनुमानेन जगतः कार्यत्वसिद्धौ सत्यामनन्तरं कार्यहेतुकमपरमनुमानम् । तदित्थम् । जगत् बुद्धिमत्कारणपूर्वकम् । कार्यत्वात् । घटादिवदित्यनुमानेन जगति बुद्धिमत्कारणपूर्वकत्वसिद्धिः । अथ च जगत्कारणीभूतः चतुर्दशभुवनात्मकविचित्रप्रपञ्चरचनासमर्थो बुद्धिमान् को वेत्याकाङ्क्षायामीदृशजगदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञः कश्चिन्मन्तव्य इति जीवस्य तादृशाभिज्ञत्वाभावात्प्रकृतेश्च जडत्वादुभयभिन्नो भगवानेवैतादृश इत्यनुमानमेव ब्रह्मणि जगत्कर्तृत्वे प्रमाणं, न तु श्रुतिरिति सूत्रकाराऽऽशयो लक्षणकरणेन ज्ञायत इति नैयायिका वर्णयन्ति । अधिकं प्रकाशेऽनुसन्धेयमिति दिक् ।

विज्ञानेन्द्रभिक्षुमतमाहुः—'अन्ये पुनरि'ति । 'श्रुत्यनुवादकमि'ति । सूत्रमिति शेषः । सूत्रमनुमानोपष्टम्भकश्रुत्यनुवादकमित्यर्थः । तथा चास्मिन्सूत्रे यतो वा इमानि भूतानि

केशवकिशोरविरचिता वेदान्तचन्द्रिका ।

इत्यर्थः । तत्तद्रूपैकदेशिनोः प्रत्येकमतमनूद्य दूषयन्ति—'केचिदि'त्यारभ्य 'प्रमाणमित्यन्तेन । अनुमानमि'ति । केवलव्यतिरेक्यनुमानमस्मिन् पक्षे । लिङ्गस्यैव करणत्वाऽभ्युपगमात् । 'श्रुती'ति ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

वदन्ति—'केचिदत्रे'त्यादिना । जन्मादिसूत्रस्य हेतुनिरूपकत्वादनुमानत्वमित्यर्थः । 'लक्षणत्वादि'ति । जगज्जन्मादिकारणत्वलक्षणादित्यर्थः । लक्षणं ह्यसाधारणो धर्मः । गोः सास्नादिवत् । सचेतरभेदसाधकः । तथा च संसारिव्यतिरिक्तः परमात्मा । जगज्जन्मादिकारणत्वादित्यनुमानम् । 'अनुमानमिती'ति अनुमाननिरूपकवाक्यस्याप्यनुमानत्वव्यवहारादस्य सूत्रस्यानुमानत्वमित्यर्थः ।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

अनुमानं केवलव्यतिरेक्यनुमानम् । तथा हि 'जन्माद्यस्य यत' इत्यनेन हेतुसाध्यप्रदर्शनात् ब्रह्म इतरभिन्नास्तित्ववत् जगज्जन्मादिकर्तृत्वात् यन्नैवं तन्नैवमिति बोध्यम् । श्रुत्यनुवादकं 'यतो

कमाहुः । सर्वज्ञत्वाय श्रुत्यनुसार्यनुमानञ्च ब्रह्मणि प्रमाणमिति । तत्तु 'तन्त्वौपनिषदं पुरुषं पृच्छामी'ति केवलोपनिषद्वेद्यत्वादुपेक्ष्यम् । अनधिगतार्थगन्तृत्वात्प्रमाणस्य ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

दमनुमानमपीत्याहुः । अनुवादप्रयोजनमाहुः—'**सर्वज्ञत्वाये**'ति । ननु श्रुतिसत्त्वेऽनुमानस्य किं प्रयोजनमित्यत आहुः—'**श्रुत्यनुसारी**'ति । यथा श्रुत्या जगज्जन्मादिकारणत्वप्रदर्शनेन तस्य सर्वज्ञत्वादिकं सिध्यति तथा तदनुसार्यनुमानेनापि तत्सिद्धौ दार्ढ्यमेव भवेदिति भावः । एवं मतद्वयमुक्त्वा निराकुर्वन्ति—**तन्त्वि**ति । **तं त्वौपनिषदं पुरुषं पृच्छामी**ति श्रुतेस्तस्य केवलोपनिषद्वे-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

**जायन्त इति विषयवाक्यम्** । तेन च केवलं कर्तृत्वमेव बोध्यते, न तु जगदुपादानादिकारणज्ञानत्वम् । तदभावे ईश्वरस्य सर्वज्ञता न स्यादित्येतदर्थं श्रुतिबोधितकर्तृत्वहेतुना जगदुपादानाऽभिज्ञत्वं साधनीयम् । तथेत्थम् । ब्रह्म पक्षीकृत्य जगदुपादानादिगोचरापरोक्षज्ञानेच्छाकृतिमत्त्वं साध्यते । जगत्कर्तृत्वाद्धेतुः । कुलालवत् । कुलालस्य घटकर्तृत्वमस्ति घटाद्युपादानमृत्तिकाचक्रचीवरादिज्ञानमप्यस्तीति तस्य यथा तद्विषयकज्ञानवत्त्वं तथेश्वरस्यापि जगदुपादानविषयकज्ञानेच्छाकृतिमत्त्वस्य सत्त्वात्सर्वज्ञत्व सर्वशक्तिमत्त्वं च सिद्ध्यतीति भावः । **सर्वज्ञत्वाये**ति । ईश्वरस्य सर्वज्ञत्वसिद्ध्यर्थमित्यर्थः । '**श्रुत्यनुसार्यनुमानमि**'ति । यथाऽऽदौ धूमप्रत्यक्षे जातेऽनन्तरं वह्न्यनुमितिः कर्तुं शक्यते । एवं श्रुत्या कर्तृत्वशाब्दबोधे जातेऽनन्तरं सर्वज्ञत्वानुमितिः कर्तुं शक्यत इति श्रुत्यनुसारित्वमनुमानस्येत्यर्थः । '**अनुमानं चे**'ति । सर्वज्ञत्वे सर्वशक्तिमत्त्वे चानुमानं प्रमाणम् । कर्तृत्वे च श्रुतिः प्रमाणमिति चकारार्थः ।

एवं च नैयायिकमते सूत्रे विषयवाक्यमेव नास्ति केवललक्षणमुक्तम् । तेन च ब्रह्मण्यनुमानमेव प्रमाणं श्रुतिस्पर्शोऽपि नास्ति । भिक्षुमते तु-यतो वेति विषयवाक्यं वर्तते, परन्तु तेन विना कर्तृत्वरूपहेतुज्ञानाऽभावेऽनुमितिर्न भविष्यतीत्यनुमानोपष्टम्भकमेव सूत्रमिति रहस्यम् । तन्मतद्वयमेकोक्त्यैव दूषयन्ति—'**तन्त्वि**'ति । '**औपनिषदमि**'ति । बृहदारण्यके शाकल्यब्राह्मण इदं वाक्यम् ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

**यतो वा इमानि भूतानी**त्यादिश्रुत्यनुवादकमत्रलक्ष्म । हीत्याद्यनुपज्यते । अनुमानस्य ब्रह्मप्रमाणत्वाऽभावमाशङ्क्याहुः—'**श्रुत्यनुसारी**'ति । '**तन्त्वि**'ति । पूर्वोक्तं द्वयमप्यनुमानम् । श्रुत्यनुसारित्वात्तस्योपेक्षानर्हत्वमाशङ्क्याहुः—'**अनधिगते**'ति । श्रुत्यनुसारिणस्तस्य तथात्वाभावान्न तत्त्व-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

'**अन्ये पुनरि**'त्यादि । यथा ब्रह्मणि श्रुतिः प्रमाणं तथा श्रुत्यनुवादकमनुमानमपि प्रमाणमित्याहुः । प्रयोजनमाहुः—'**सर्वज्ञत्वाये**'ति । श्रुतिर्हि जगज्जन्मादिकारणत्वं प्रदर्श्य ब्रह्मणः सर्वज्ञतां साधयति । तथा तदनुसार्यनुमानमपि जगज्जन्मादिकारणत्वं साधयत्सर्वज्ञत्वं साधयतीत्यर्थः । एवमनूद्य दूषयन्ति—'**तत्तु तन्त्वौपनिषदं पुरुषं पृच्छामी**'त्यादिना । औपनिषदमिति विशेषणेनोपनिष-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीपः ।

वा' इतिश्रुत्यनुवादकम् । **सर्वज्ञत्वाय** सर्वकर्तृत्वस्य सर्वज्ञतां विनाऽसम्भवेन सर्वज्ञत्वसिद्धये इत्यर्थः । तन्मतद्वयं दूषयन्ति—'**तन्त्वि**'त्यादिना । केवलेति तुशब्देनोपनिषदतिरिक्तवेद्यत्वनिरासात्

**मनननिदिध्यासनयोः श्रवणाङ्गत्वम् । सन्देहवारकत्वाच्छास्त्रस्याऽपि तदङ्गत्वमिति ॥ २ ॥**

॥ इति प्रथमाध्याये प्रथमे पादे द्वितीयं जन्माद्यधिकरणम् ॥

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

यत्नेनाऽनुमानस्याऽनवसरपराहतत्वात् । यथाकथंचित्तदवगतिसाधनत्वाऽभ्युपगमेऽपि न तस्य प्रामाण्यम् । श्रुत्येकसमधिगतत्वेन प्रमाणलक्षणाऽभावात् । तदेवाऽऽहुः—'**अनधिगते**'ति । ननूपनिपन्मात्रवेद्यत्वे श्रवणस्यैव तत्साधनत्व नान्यस्येति पर्यवस्यति । तथा च मनननिदिध्यासनयोरपि श्रुतौ तदवगतिसाधकत्वोक्तेस्तत्राऽपि प्रामाण्याऽनुपपत्तिरित्यत आहुः—'**मनने**'ति । नहि तयो.

गोस्वामिश्रीगिरिधरविरचितं विवरणम् ।

'**पुरुषमि**'ति । उपनिषन्मूलप्रमाणक पुरुषमित्यर्थः । '**केवले**'ति । ब्रह्मणो यावत्प्रमाणाऽगोचरत्वेऽपि प्रतिप्रसवेनोपनिषद्वेद्यत्वार्थ केवलपदम् । तेन च विश्वरूपदर्शनं, **धातुः प्रसादा**दितिश्रुत्या मननादिद्वारा दर्शनमपि **आत्मा वारे द्रष्टव्य** इतिश्रुत्या प्रतिपाद्यत इति नानुमानवेद्यत्वमिति भावः । '**उपेक्ष्यमि**'ति । एकेन श्रुतिं विहायाऽनुमानवेद्यत्वमपरेण च श्रुतिसहकारेणाऽनुमानवेद्यत्वमुक्तमिति मतद्वयमपि दूरतस्त्याज्यमित्यर्थः ।

अथैवं येन श्रुतिप्रामाण्यमेव न स्वीक्रियते तादृशबाह्य प्रति किं वक्तव्यमिति चेत् । मैवम् । नानायुक्तिप्रसारणशीलानां बाह्यानां निराकरणार्थमेव त्वदीयं मतम् । न तु ब्रह्मणि प्रामाण्यसिद्ध्यर्थम् । एवं च वेदप्रामाण्यमभ्युपगच्छता त्वयाप्युपनिषद्वेद्यत्व स्वीकर्तव्यम् । तथा च ब्रह्मणः प्रमाणान्तरावेद्यत्वादनुमानप्रसर एव नास्तीत्यलमधिकेन । '**अनधिगतार्थे**'ति । न अधिगतः अनधिगतः अज्ञातः । एतादृशो योऽर्थस्तत्र गन्तृत्वात्तद्विषयकबोधजनकत्वादित्यर्थः । **प्रमाणस्य** अनुमानादिप्रमाणस्येत्यर्थः । तथा च श्रुतिसिद्धेऽर्थे नानुमान प्रमाणमिति भावः । नचैवं सर्वज्ञत्वसिद्धिर्न स्याच्छ्रुत्या कर्तृत्वस्यैव बोधितत्वादिति वाच्यम्[१] । **ब्रह्मणा विपश्चिता, यः सर्वज्ञः सर्ववि**दित्यादिना सर्वज्ञताबोधनात् । ननु युक्तिभिरनुचिन्तन मनन, युक्तयश्चानुमानरूपा इति मननोपयोगित्वाद्य

किंश्चिद्विरचिता वेदान्तचन्द्रिका ।

मिति भावः । ननु **मन्तव्य** इत्यादिश्रुतौ मननस्याऽपि ब्रह्माऽवगतिसाधकत्वोक्तेः कथमनुमानाऽप्रामाण्यमित्यत आहुः—'**मनने**'ति । न हि ते स्वातन्त्र्येण तद्गन्तृणी किन्तु श्रवणस्यैव फलोपकार्यङ्गभूते इति नोक्तदोषाऽवसरः ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

स्प्रतिपाद्यत्वं, **यतो वाचो निवर्तन्त** इत्यनेन मनोवागगम्यत्वमुक्तमत उभयोरैकार्थ्याय प्रमाणान्तराऽगम्यत्वमुपनिषद्गम्यत्वं साधनीयम् । तथा चौपनिषदमित्यस्योपनिषदेकप्रतिपाद्यत्वमिति सिध्यति स्म । एवं सत्यनुमानस्य प्रामाण्य वदन्तोऽनायासेन प्रत्युक्ताः । ननु केवलानुमानस्याप्रामाण्येऽपि श्रुत्यनुसारिणोऽनुमानस्य कुतो न प्रामाण्यमित्याकाङ्क्षायामाहु:—'**अनधिगतार्थगन्तृत्वा**-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

केवलोपनिषद्वेद्यत्वमुक्तमित्यर्थः । '**अनधिगते**'त्यादि । तथा चानधिगतार्थगन्तृत्वरूप प्रामाण्य वेद एवास्ति नतु अनुमाने इत्यर्थः । ननु ब्रह्मण उपनिषदतिरिक्तावेद्यत्वे मनननिदिध्यासनयोर्ब्रह्मावग-

१ इत्येति कदाचित्स्यात् । २ 'आत्मावारे' इति श्रुत्या मनन विधीयते । तत्र 'धातु प्रसादा'दिति श्रुत्युक्तभगवत्प्रसादसहकृतेन मननेन दर्शनमुच्यते तेनाऽनुमान ब्रह्मणि न प्रमाणमिति भाव ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

स्वातन्त्र्येण तद्गन्तृत्वमस्ति किन्तु श्रवणस्यैव फलोपकार्यङ्ग इति न किञ्चिद्दूषणमित्यर्थः । एवं मनननिदिध्यासनयोः श्रवणाङ्गत्वेन, स्वातन्त्र्येण फलसाधकत्वं निराकृत्य शास्त्रस्याऽपि सूत्रकारकृतस्य तथैव तन्निराकरणायाह—'**सन्देहवारकत्वादि**'ति ।

इति द्वितीय जन्माद्यधिकरण सम्पूर्णम् ।

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

कथमनुमानस्य निरास इत्यत आह—'**मनने**'ति । '**श्रवणाङ्गत्वमि**'ति । श्रवणेन कृतवात्मदर्शने जननीये मननादीनां सहकारित्वमित्यर्थः । एवञ्च मननोपयोगित्वेनाऽनुमानस्यावश्यकत्वमिति भावः । नन्वेवं चेदनुमानेनैव मननसिद्धौ वेदान्तमीमांसाशास्त्रं व्यर्थमित्यत आह—'**सन्देहे**'ति । श्रवणानन्तरं सन्देहे सति मनन न सम्भवति । शास्त्रस्य सन्देहवारकत्वादित्यर्थः । '**तदङ्गत्वमि**'ति । मननाङ्गत्वमित्यर्थः । शास्त्रस्यापीत्यपिकारेणाऽनुमानस्य सङ्ग्रहः । एवं च मनने सहकारिकारणत्वमेवाऽनुमानस्य बोद्ध्यमिति सर्वमनवद्यम् । इति द्वितीयाधिकरणम् ।

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

ननु शास्तीति शास्त्रमिति व्युत्पत्त्या तद्गन्तृत्वात्कथं केवलोपनिषद्वेद्यतेत्यत आहुः—'**शास्त्रस्ये**'ति । तन्मननश्रवणमेव वा ।

इति द्वितीय जन्माद्यधिकरणम् ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

**त्वप्रमाणस्वे**'ति । श्रुत्यनुसारिणोऽनुमानस्य श्रुत्यधिगतार्थगन्तृत्वादप्रामाण्यमित्यर्थः । ननु केवलोपनिषद्वेद्य ब्रह्म । **मन्तव्यो निदिध्यासितव्य** इति श्रुतौ ब्रह्मप्रमितौ मननस्य विहितत्वात् । मनन हि युक्तिभिरनुचिन्तनम् । युक्तयस्तु पूर्वोक्तानुमानरूपा. । अतोऽनुमानमपि ब्रह्मणि प्रमाणं कुतो न भवतीत्याकाङ्क्षायामाहुः—'**मनननिदिध्यासनयोः श्रवणाङ्गत्वमि**'ति । ब्रह्मप्रमितौ ह्युपनिषच्छ्रवणमेव साधनत्वेनोक्तम् । मनननिदिध्यासनयोस्तु श्रवणाङ्गत्वेनोपकारकत्वमतो ब्रह्म तूपनिपदेकवेद्यमित्यर्थः । ननूपनिपदेकवेद्यत्वे मीमांसायाः किंप्रयोजनमित्याकाङ्क्षायामाहुः—'**सन्देहवारकत्वादि**'त्यादि ।

इति द्वितीय जन्माद्यधिकरणम् ।

भगवदीयश्रीमद्विठ्ठलरामप्रणीत प्रदीप ।

तिसाधनत्वोक्तिर्व्यर्था स्यादत आहुः—**मननेत्यादि** । **श्रवणाङ्गत्वं** श्रवणेन ब्रह्मप्रमितौ जननीयायां सहकारिकारणत्वमित्यर्थः । **शास्त्रस्य** व्याससूत्ररूपशास्त्रस्य । **तदङ्गत्वं** श्रवणाङ्गत्वम् ॥ २ ॥

॥ इति प्रथमाध्याये प्रथमपादे द्वितीय जन्माद्यधिकरणम् ॥

---

**अयमर्थः**—ये केचन मनन व्याजीकृत्यानुमानमपि ब्रह्मणि ब्रह्मधर्मे वा सर्वेहत्वे प्रमाणत्वेनाभ्युपगच्छन्ति ते रूपान्तरेण वेदस्यैवाप्रामाण्य स्वीकुर्वन्ति । कथमितिचेत्—तथावादी प्रष्टव्य श्रुत्वा ब्रह्म कि सन्देह ज्ञात न वा । ज्ञात चेदधिगतार्थज्ञापकत्वादप्रमाणमेव निष्प्रयोजन च त्वदभिमतमनुमान तस्मिन् । अथ न ज्ञात कि संदिग्ध वा ज्ञात चेदज्ञापकत्वादसदिग्धाज्ञापकत्वाद्वा श्रुतेरप्रामाण्यम् । ननु श्रुतिमात्रशरणानां मननविधेरेवं प्रामाण्यापहतिर्भवति इति चेत् । न । मनन हि जीवस्य मनोदोषमपाकृत्य श्रवणस्योपकरोति न ब्रह्मणो ब्रह्मज्ञानस्य वा । तस्मात् श्रवणकर्तुरन्त करणदोषापाकरणेन श्रवणसंबाहकत्व मननस्य । न तु ब्रह्मणि प्रमाणम् । ब्रह्म तु वेदेनैव कि सन्दिग्ध ज्ञातम् । श्रवणस्त्वनुमाने स्वमनोमालिन्यमपनीयते मननेन सन्दमप्यनाधिकारिणो । सन्नोदा ।

## तृतीयं समन्वयाऽधिकरणम्।

तत्रैतत् स्यात्। तत्र किं समवायि, निमित्तं, कर्तृ, वा? किमतो यद्येवम्?। एवमेतत् स्यात्। यद्येकमेव स्यात्तदा क्रियाज्ञानशक्त्योर्निरतिशयत्वं भज्येत। मृदादिसाधारण्यं

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

एवं जन्मादिसूत्रं व्याख्यायैकदेशिमतद्वयं निराकृत्य सूत्रान्तरमवतारयितुमाह—'तत्रे'ति। शास्त्रस्य ब्रह्मकारणत्वनिश्चायकत्वे सति। एतदग्रे। उच्यमानं संशयरूपमेव ज्ञानं स्यात्। तथा च कुतो निश्चय इति भावः। कथमित्याकांक्षायां तत्स्वरूपमाहुः—'तत्र किं समवायि निमित्तं कर्तृ वे'ति। तत्र शास्त्रे। उक्तमिति शेषस्त्रिष्वपि सम्बध्यते। ननु त्रिरूपत्वे किं बाधकमित्याहुः—

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

पूर्वाधिकरणे कार्यलक्षणेन ब्रह्मणि सामान्यतो जगत्कारणत्वं प्रतिपादितमिदानीं विशेषरूपेण समवायि कारणत्वप्रतिपादकं समन्वयाधिकरणमवतारयन्ति—'तत्रैत'स्यादित्यादिना। तत्र शास्त्रे। एतत् वक्ष्यमाणम्। स्यात् विचार्यं स्यात्। वक्ष्यमाणमेवाऽऽहुः—'तत्र किमि'ति। तत्र यतो वेति श्रुतौ। 'कर्तृ वे'ति। कुलालवत्कारणं वेत्यर्थः। तथा च श्रुतौ ब्रह्म जगतः समवायिकारणं निमित्तकारणं कर्तृकारणं वा प्रतिपादितमिति विचार्यं स्यादिति पूर्वेणान्वयः। तदिति प्रथमान्तपाठे तद्ब्रह्म समवायिकारण वेति विचार्यं स्यादित्यर्थः। अस्मिन्पाठे ब्रह्मेति प्रतिपादितमिति पदद्वय—

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

एवं सप्रमाणं ब्रह्मणो लक्षणं निर्णीयोक्ताकारविधां निर्वक्तुमग्रिमाधिकरणमवतारयन्ति—'तत्रैतदि'ति.। तत्र कारणत्वाङ्गीकृतौ एतद्विनिगमनाविरहाद्वक्ष्यमाणसंशयफलपर्यवसानात्मकं दूषणं स्यादित्यर्थः। तमेव संशयं प्रदर्शयन्ति—'तत्रे'ति। अत्र ब्रह्मेतिशेषः। अत्रोट्टङ्कन्ते—'किमि'ति। यद्येवंविधः संशयस्तर्हीत ईदृशसंशयात्किमनिष्टमित्यर्थः। नद्यासु विधासु कयाप्येकविधया कारणत्व ह्रियते, अत एका काऽपि ग्राह्येति भावः। अत्रोत्तरमाहुः—एवमिति। वक्ष्यमाणप्रकारेण वक्ष्यमाणमनिष्टं स्यादित्यर्थः। तदेवोद्घाटयन्ति—'यद्येकमि'ति। समवायि निमित्तं वा कर्तृत्वं वा।

श्रीबालकृष्णभट्टकृता गूढार्थदीपिका।

'यद्येकमेव स्यादि'ति। समवाय्येव, निमित्तमेव, कर्त्रेव, वा स्यादित्यर्थः। 'क्रियाज्ञानशक्त्योरि'त्यादि। यद्येकमेव स्यात्तदा तु मृदादावप्येकस्य समवायिकारणत्वादेः साधिका

मथक्दीयश्रीमदिच्छारामप्रणीत. प्रदीप.।

पूर्वोक्तरीत्या जन्माद्यधिकरणं निर्णीय सूत्रान्तरमवतारयन्ति—तत्रेत्यादि। तत्र जगत्प्रति ब्रह्मणः कारणत्वे। एतत् स्यात् वक्ष्यमाणसंशयविषयत्वं स्यादित्यर्थः। तत्र संशयविषयकोटीनां मध्ये संशयकोटिगणनामाहुः—'समवायी'त्यादि। उक्तसंशये किं दूषणमित्याहुः—'किमत' इति। यद्येवं संशयोऽत्र को दोष इत्यर्थः। 'एवमि'त्यादि। वक्ष्यमाणप्रकारो दोषः स्यादित्यर्थः। दूषणमेवाहुः—'यद्येकमित्यादिना। एकं कुलालवत्कर्तृ दण्डवन्निमित्त मृत्पिण्डवत्समवायि एतेषां अन्य-

१ समन्वयो नाम ब्रह्मण सर्वत्र जगति अस्तिभातिप्रियरूपेण सम्यगनुवृत्तत्वम्। ननु वेदान्तानां ब्रह्मण्यन्वय इति। तस्य द्वितीयाधिकरणेनैव सिद्धत्वात्।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

'किमत'इति । यद्येवमेकस्यैव त्रिरूपत्वम् । अतः किं किं दूषणमित्यर्थः । तत्रोत्तरमाहुः—'एवमेतत्स्यादि'ति । एवमुच्यमाने एतद्बाधकं स्यादित्यर्थः । किं बाधकमित्याकांक्षायां गूढाभिसन्धिमुद्घाटयति—'यद्येकमेवे'ति । यदि समवायि निमित्तं कर्तृ चैकमेव ब्रह्म स्यात्तदा ब्रह्मणः क्रियाज्ञानशक्त्योर्निरतिशयत्वं व्यापकत्वं भज्येतेत्यर्थः ।

अयमर्थः—ब्रह्मणः सैन्धवघनवदेकरसत्वेन क्रियाज्ञानशक्त्योः सर्वत्रैव व्याप्तत्वेन समवायित्वांशे तदनङ्गीकारेऽस्मदादिवदादेशिकत्वाऽऽपत्त्या निरतिशयत्वं सर्वस्मिन्नपि व्याप्तत्वं भज्येतेत्यर्थः । दूषणान्तरमप्याहुः—'मृदादी'ति । मृदादिसाधारण्यं, कृतकत्वेन-सावयवत्वेन चाऽनित्यत्वं भवेदित्य-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

स्याऽध्याहारो नास्तीति लाघवम् । अत एव प्रकाशे श्रीपुरुषोत्तमैः प्रथमान्तपाठ एवाऽऽदृतः । शङ्कते—'किमतो यद्येवमि'ति । यद्येवं संशयः स्यात्तर्हि । अतः अंसात् संशयात् किं भविष्यति न किमपीत्यर्थः । तथा च श्रुत्या ब्रह्मणि सामान्यतो जगत्कारणताज्ञाने जाते लक्षणं प्रमाणं च ज्ञातमेवातःपरं संशयेन किं कर्तव्यं विचारेण तन्निरासे च किं फलं भविष्यति न किमपीति भावः । उत्तरयन्ति—'एवमेतत्स्यादि'ति । एवमनेन प्रकारेण वक्ष्यमाणविचारेणेत्यर्थः । एतत् दोषनिवृत्तिरूपं फलं स्यादित्यर्थः । विचारमेवोपपादयन्ति—'यद्येकमि'ति । सर्वेषु समवायिनिमित्तादिषु कारणेषु मध्ये एकं वक्तव्यम् । तत्र दण्डादिवन्निमित्तं वा प्रयोज्यवत्कर्तृ वा समवायि वेति त्रयाणां मध्ये एकं स्यादित्यर्थः । तदा निमित्तत्वकर्तृत्वयोः स्वीक्रियमाणे—'क्रियाज्ञानशक्त्योरि'ति ब्रह्मणि निमित्तत्वे स्वीक्रियमाणे क्रियाशक्तेः, प्रयोज्यकर्तृत्वस्वीकारे ज्ञानशक्तेश्चेतरनैरपेक्ष्यरूपं निरतिशयत्वं भज्येतेत्यर्थः । तथा च यथा निमित्तकारणीभूतदण्डे स्वतन्त्रा क्रिया नास्ति, यथा वा प्रयोज्यकर्तरि कुलाले प्रयोजककुलालपितृनिष्ठं कर्तृत्वज्ञानमादायैव कर्तृत्वज्ञानं तथेतरसापेक्षज्ञानं ब्रह्म-

केनचिद्विरचिता वेदान्तचन्द्रिका ।

अनायं भावः—यदि मृत्सुवर्णादिवत्समवायित्वं यदि वा दण्डचक्रादिवन्निमित्तत्वं, यदि वा कुलालादिवत्कर्तृत्वं, तदा तयोर्निरतिशयत्वं सर्वत्र सदैकरसत्वेन यत्सर्वव्याप्तत्वं, तद्धीयेत । समवायित्वांशे ज्ञानाऽसम्भवात् । क्रियाया अपि परायत्तत्वात्कर्तृत्वांशेऽपि ज्ञानकर्मेन्द्रियैरेव तत्प्रान्त्यात् । तयोः प्रादेशिकत्वं स्यात् । दूषणान्तरमाहुः—'मृदादी'ति । साधारण्यं सावयवत्वं निकृतत्व-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

शक्तिरस्त्येवेति तत्साधारण्यं ब्रह्मणोऽपि स्यादिति निरतिशयत्वं ब्रह्मनिष्ठक्रियाज्ञानशक्त्योरपगच्छेदित्यर्थः । तथा च परास्य शक्तिर्विविधैव श्रूयत इति श्रुत्युक्तं ब्रह्मशक्तिषु परत्वं निर्गच्छेदित्यर्थः ।

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीप. ।

तरदेव स्यादित्यर्थः । तथा सति दूषणमाहुः—'क्रियाज्ञाने'त्यादि । तथा चोक्तत्रिविधकारणानां मध्ये यद्येकं कारणं ब्रह्म भवेत्तदा तेषामितरेतरकारणसमवधानं विना कार्यजनकत्वं न स्याद्ब्रह्मणोपि । इत्थं च क्रियाज्ञानशक्तिमत्त्वेन यन्निरतिशयत्वमितरनैरपेक्ष्येण कार्यजननसामर्थ्यं तद्भज्येतेत्यर्थः । ब्रह्मणः समवायिकारणत्वे दूषणान्तरमाहुः—'मृदादी'त्यादि । साधारण्यं ब्रह्मणो मृदुन्यतयाऽनि-

च स्यात् । मतान्तरवत् । कथमेवं सन्देहः यावता 'यतो वा इमानी' त्यादिभ्यो निःस-न्देहश्रवणात् ? । एवं हि सः, पञ्चमी श्रूयते यत इति । पञ्चम्यास्तसिरिति । 'आत्मन'

गोस्वामिश्रीमत्पुरुषोत्तमविरचिता अणुभाष्यव्याख्या ।

र्थः । ननु समवायित्वेऽभ्युपगम्यमानेऽनित्यत्वप्रसक्तौ किं विनिगमकमित्यतो दृष्टान्तेन तत्साधयन्ति—'मतान्तरवदि'ति । यथा सांख्यमते प्रधानस्यैव समवायित्वं न पुरुषस्य । यत्परिणामि तद्विकृत-त्वात्सावयवत्वाच्चाऽनित्यमिति मृदादौ दृष्टम् । तन्न्यायेन ब्रह्मणोऽप्यनित्यत्वप्रसङ्गो दुर्निवारः स्यादि-त्यर्थः । अधुना सूत्रान्तरमवतारयितुं तत्सम्भूतिजनकं सन्देहमेव दृढीकर्तुमुपक्षिपन्ति—'कथमेवमि'ति । एवमेवंप्रकारकः सन्देहः । कथं कथमुपपद्यत इत्यर्थः । तत्र हेतुमाहुः—'यावते'ति । यतो वेत्यादा-बुत्पत्त्यादिक्रियाऽधिष्ठानत्वनिरूपणेन निःसन्दिग्धमेव समवायित्वस्य श्रवणादित्यर्थः । संशयबीजो-द्घाटनेन तं समर्थयन्ति—'एवं हि स' इत्यारभ्य 'सुतरां सन्देह' इत्यन्तेन । सः संशयः । 'एवं' वक्ष्यमाणप्रकारेण । तमेवाऽऽहुः—'पञ्चमीति' । ननु पञ्चम्यां सामान्यतः कारणमात्रबोधनात्सम-वायित्वं को निवारयेदित्यत आहुः—'पञ्चम्यास्तसिरि'ति । तसेरपादानाऽर्थकपञ्चमीविषय एव

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

ण्यपि स्यादिति भावः । ननु समवायिकारणत्वमेवास्तु इत्यत आहुः—'मृदादिवदि'ति । 'मता-न्तरवदि'ति । यथा साङ्ख्यमते मृद्विकारत्वं घटे, मृत्तिकायां विकारित्वम् । तथा ब्रह्मण्यपि विकारित्वं स्यादित्यर्थः । एवं चैतद्दोषनिवारणार्थं विचारः कर्तव्य इति भावः । एवंरीत्या विचारे प्रसक्तेऽधि-करणाङ्गसंशयमाहुः—'कथमि'त्यादिना । 'एवमि'ति । समवायि निमित्तकारणं कर्तृ वेत्येवंरूपः सन्देहः कथमित्यर्थः । ननु कुतो न भवतीत्यत आह—'यावते'ति । यावत्पर्यन्तमित्यर्थः । वाक्य-श्रवणानन्तरमपि सन्देहतादवस्थ्यं प्रतिपादयन्ति—'एवं ही'ति । स सन्देहः । भवतीत्यध्याहारः ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

मनित्यत्वमनाप्तकामत्वं परस्परसापेक्षत्वं कार्योत्पादने नैय्यायिकादिमतवद्भवेत् । अत्र नोदकमाहुः—'कथमि'ति । एवं पूर्वोक्तविधया । 'निःसन्देहे'ति । यतो वेत्यादिसम्पूर्णवाक्यार्थपर्यालो-चनया समवायित्वस्य निःसन्देहश्रवणात् । उत्तरमाहुः—'एवं ही'ति । सः संशयः ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

धत्वं च न संगच्छेत । दूषणान्तरमाहुः—'मृदादि साधारण्यं च स्यान्मतान्तरवदि'ति । यथा मृत्तिकाघटस्य समवायिकारणमेव । दण्डो निमित्तमेव । कुलालः कर्तैव । तथा ब्रह्माप्येकमेव स्यात्तदा मृदादितुल्यता स्यात् । तत्र दृष्टान्तः—'मतान्तरवदि'ति । मतान्तरे ब्रह्मणः कर्तृ-

भगवदीयश्रीमदिच्छाराममणीतः प्रदीपः ।

त्वस्य सावयवत्वं च स्यादित्यर्थः । तत्रोपष्टम्भकमाहुः—'मतान्तरव'दिति । यथा च सांख्यैः पुरुषस्य परिणामित्वमेतद्दोषादेव न स्वीक्रियते प्रकृतेश्च सावयवत्वात्स्वीक्रियते । नैयायिकमतमादाय तु कपाल-तुल्यतया द्रव्यसमवायिकारणतायां ब्रह्मणोऽनित्यत्वमपि स्यादित्यर्थः । अग्रिमाधिकरणघटक संशयं दृढीकुर्वन्ति—'कथमि'त्यादिना । एवं ब्रह्म कारणं न वेत्याकारकः । यावता निश्चयेन । 'निःसन्दे-हे'त्यादि—कारणतासन्देहनिर्गमनं येन स्यात्तादृशकारणतायाः श्रुतिवाक्येभ्यो निश्चयादित्यर्थः । एवं

इत्यपि पञ्चमी । निमित्तत्वे **न सन्देहः । पञ्चम्या निमित्तत्वकथनात् । उपादानत्वे कर्तृत्वे च सन्देहः। तद्वाचकाश्रवणात् । कल्पनायां प्रमाणाभावात् । समवायित्वे पुनः सुतरां सन्देहः । एवं प्राप्त आह—**

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

विहितत्वेन विश्लेषविशिष्टस्यैव तस्य प्रतीतेर्न समवायित्वं किन्तु निमित्तत्वमेवेत्यर्थः । नन्वत्र तसिश्रवणेऽपि **'आत्मन आकाशः सम्भूत'**इत्यत्र साधारण्येनैव पञ्चमीश्रवणात्कारणत्वमात्रमेव प्रतीयतामित्यत आहुः—**'आत्मन इत्यपी'**ति।अपादानार्थ इत्यर्थः।सम्भवत्येकवाक्यत्वे वाक्यभेदस्याऽनुचितत्वेनैकवाक्यत्वार्थं तत्राऽपि तथा कल्पनीयमित्यर्थः। तदेतत्सर्वमभिसन्धायोक्त—**'निमित्तत्वे न सन्देहः । पञ्चम्यां निमित्तत्वकथनादि'**ति। ननु तर्हि कुत्र सन्देह इत्यत आहुः—

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

कथं भवतीत्यत आह—**'पञ्चमी'**ति। **यतो** वेति वाक्ये पञ्चम्युक्ता। **तस्माद्वा एतस्मादि**ति वाक्ये साक्षाद्ब्रह्मवाचकादात्मपदादपि पञ्चमी । **'आत्मन'** इति। **निमित्तत्वे** पञ्चम्या निमित्तत्वरूपार्थवाचकत्वे **'न सन्देह'** इति। सन्देह एव नास्तीत्यर्थः। **'कथनादि'**ति। घण्टाघोषा

केश्चिद्विरचिता वेदान्ततत्त्वचन्द्रिका ।

ननु पञ्चम्या सामान्यतः कारणतामात्रबोधनाद्भवति सम्भावना समवायित्वस्यापीत्यत आहुः—**'पञ्चम्या'** इति । तसेरपादानार्थकपञ्चमीविषय एव विधानाद्विश्लेषविशिष्टस्यैव कारणत्वस्य प्रतीतेर्न समवायित्वमपि तु निमित्तत्वमेवेति भावः। नन्वत्र तसिश्रवणेऽप्यात्मन **आकाशः सम्भूत** इत्यत्र साधारण्येनैव पञ्चम्यभिधानादस्तु कारणत्वमात्र [ विभानेस्तु तथात्व ] मित्यत आहुः—**'आत्मन इती'**ति। हेतावित्यर्थः। **'निमित्तत्व'** इति । गूढाभिसन्धिमुद्घाटयन्ति—'उपा-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

त्वमात्रमधगच्छन्ति नैयायिकादयस्तद्वत्स्यात् । साङ्ख्यमते प्रकृतेः समवायित्वमेव तद्वत्स्यादित्यर्थः । प्रकृते ब्रह्ममीमांसाशास्त्रे तु समवायिकारणत्वं, निमित्तकारणत्वं, कर्तृत्वं च, ब्रह्मण्येवेति बोद्धव्यम् । **'कल्पनायामि'**ति । अद्वैतश्रुत्यनुरोधेनोपादानत्वकल्पनायाम् । **यतो वा इमानी**त्यादौ निमित्तत्वश्याप्योपादानत्वकल्पनायामित्यर्थः । तथा च पञ्चम्या निमित्तत्वकथनेऽप्यद्वैतश्रुत्येकवाक्यताकरणे **यतो वा इमानी**त्यादावुपादानरूपात् यतो निमित्ताद्भूतानि जायन्त इत्यर्थो लभ्यत इत्यर्थः ।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

वक्ष्यमाणप्रकारेण। **सः सन्देहः। तसिरि**तीति। तथाचाश्वतः-पतितः स्वर्गतः पतितः दण्डाद्धत इत्यादौ पञ्चम्या अपादानत्वशुद्धनिमित्तकारणत्वयोरेव बोधनादितिभावः । ननु 'यतो वे'तिश्रुतौ तसेः सत्त्वेपि 'तस्माद्वा एतस्मादि'त्यत्र तसाश्रवणात् कारणत्वान्तरमेव पञ्चम्या बोध्यतामित्याक्षेपे एकवाक्यतया तत्रापि निमित्तकारणताबोधकतां व्यवस्थापयन्ति—**'आत्मन'** इत्यादिना। **निमित्तत्वे**नेति। निमित्तत्वेन रूपेण निमित्तकारणं बोधयतीत्यर्थः। **निमित्तत्वकथनात्** ब्रह्मणो निमित्तकारणत्वबोधनादि-

---

१ इत्यादि मूलानुसृतोऽयं पाठः आसीत्परमपरपुस्तकाभावादस्माभिः परित्यक्तः ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

'**उपादानत्वे कर्तृत्वे चे**'ति । तत्र हेतुमाहुः—'**तद्वाचके**'ति । नहि यतो वेत्यादावुपादानत्वस्य कर्तृत्वस्य वा वाचकं किञ्चिदस्ति । पञ्चम्या सामान्यतः कारणमात्रस्य प्रतिपादनात् । ननु **निर्विशेषं न सामान्यमि**ति नियमात्सामान्ये विशेषस्याऽपि सत्वात्सामान्यवाचकस्याऽपि विशेषवाचकत्वे न कश्चिद्विरोध इत्याशङ्क्याहुः—**कल्पनायामि**ति । सामान्यपरस्य विशेषपरत्वकल्पनायामित्यर्थः । '**प्रमाणाऽभावादि**'ति । विनिगमकाऽभावादित्यर्थः । ननु'**यतो वे**'त्यादावुत्पत्त्यादित्रयकारणत्वोक्तेः कर्तृत्वमेव तस्येति विनिगमनाऽस्तीत्यत आहुः—'**समवायित्व**'इति । कदाचित्तत्र यथाकथञ्चिद्विनिगमनायामपि समवायित्वे तदभावात्पूर्वोक्तदूषणप्रसक्तेश्च सुतरामेव सन्देह इत्यर्थः । ननु तर्हि व्यतिरेकनिश्चय एव स्यान्न संशय इति चेत् । न । **निर्विशेषं न सामान्यमि**तिव्याप्तेः सामान्ये विशेषमात्रस्य सम्भाव्यमानत्वेन सन्देहसम्भवात् । तथा चैवमेवप्रकारेण सन्देहे प्राप्ते शास्त्रस्य सन्देहवारकत्वात्तन्निराकरणाऽर्थं सूत्रकार आह—

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

दित्यर्थः । एव पञ्चम्या निमित्तत्वे सन्देहो नास्ति, परन्तु ब्रह्मणि निमित्तकारणत्वस्वीकारे क्रियाशक्तिनिरतिशयित्वभङ्गरूपदूषणस्य प्रागुक्तत्वात्कारणतासन्देहतादवस्थ्यमिति भावः । ननु मास्तु निमित्तत्वमन्यकारणत्वमस्त्वित्यत आहुः—'**उपादानत्व**'इति । '**अश्रवणादि**'ति । विभक्तिपदयोर्मध्य एकस्याप्यश्रवणादित्यर्थः । ननु कल्प्यत इत्यत आहुः—'**प्रमाणे**'ति । '**सुतरामि**'ति । साङ्ख्यमतरीत्या विकारित्वदूषणग्रस्तत्वात्कारणतासन्देहत्वपर्यवसानमित्यर्थः । '**एवं प्राप्त**' इति । श्रुतौ तु कारणतोक्ता । परन्तु एतासां कारणतानां मध्ये एकापि कारणता वक्तुं न शक्यत इति । ब्रह्म कारणं भवति न वेत्येवं संशये प्राप्त इत्यर्थः । '**आहे**'ति सिद्धान्तमाहेत्यर्थः । सूत्रमाहुः—

केनचिद्विरचिता वेदान्तचन्द्रिका ।

**दानत्व**' इति । तत्र हेतुः—'**तद्वाचके**'ति । '**कल्पनायामि**'ति । उपादानत्वकल्पनायाम् । ननु तदभावनिश्चय एव कुतो न स्यात्कथं संशय इति चेन्न—**निर्विशेषं न सामान्यमि**ति । व्याप्तेर्विशेषस्यापि सम्भवात्स इति निगर्वः । तथा चैव समवायित्व एव संशयपर्यवसाने तमपाकर्तुं सूत्रकार आह—

श्रीलालूभट्टकृता गूढार्थदीपिका ।

'**प्रमाणाऽभावादि**'ति । अन्यथानुपपत्तिरूपप्रमाणाऽभावात् । अद्वैतश्रुतेः प्रपञ्चमिथ्यात्वेन यतो वेत्यादौ निमित्तत्वस्य दण्डादिनिष्ठनिमित्तत्वस्वीकारेणाऽप्युपपत्तेरिति भावः ।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

त्यर्थः ।**तद्वाचकेत्यादि** । कर्तृत्वसमवायिकारणत्वयोर्वाचकपदाश्रवणादित्यर्थः । ननु तन्तुभ्यः पट इतिप्रयोगस्यापि बाधकाभावेन सम्भवाद्ब्रह्मणः 'तस्माद्' इतिपञ्चमीतः समवायिकारणत्वमपि कल्प्यमित्यत आहुः—'**कल्पनाया**'मित्यादि । **सुतरां संदेहः** । सावयवत्वानित्यत्वयोरापत्त्या सुतरां सन्देह इत्यर्थः । **एवं प्राप्ते** ब्रह्मणि कर्तृत्वसमवायिकारणत्वयोरभाव इति पूर्वपक्षे प्राप्ते इत्यर्थः । **आह** समाधानरूपं सूत्रमाहेत्यर्थः ।

१—निमित्तत्वेति युज्यते ।

## तत्तु समन्वयात् ॥ ३ ॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। निमित्तत्वस्य श्रुतिसिद्धत्वान्मतान्तरनिराकरणत्वेनाग्रे वक्ष्यते। तत् ब्रह्मैव समवायिकारणम्। कुतः?। समन्वयात्। सम्यगनुवृत्तत्वात्। अस्ति-

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

**तत्तु समन्वयात्**। ननु तत्र सामान्यरूपेणैव कारणत्वस्य प्रतीयमानत्वान्निमित्तत्वमपि विचारणीयमेवेति कथमुपादानत्वमेव विचार्यत इत्यत आहुः—'**निमित्तत्वस्ये**'ति। अपादानपञ्चम्या विश्लेषस्योपस्थितत्वान्निमित्तत्वं तु व्यक्तमेव श्रुतिसिद्धमिति नाऽत्र विचार्यते। अत एवात्र द्वितीयाऽध्याये ब्रह्मणो निमित्तत्वमभ्युपेत्य काणादादिमतानां जीवाऽदृष्टाऽऽदिनिमित्तत्वप्रतिपादकानां निराकरणं करिष्यति सूत्रकारः। सूत्राऽवयवान्व्याचक्षते—'**तदि**'ति। समवायिकारणमिति शेषः। हेतुं पृच्छति—'**कुत**' इति। तदेवोपपादयन्ति—'**समन्वयादि**'ति। नामरूपाऽऽत्मके सर्वस्मिन्कार्यजातेऽस्तित्वादीनि प्रतीयन्ते।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

**तत्तु समन्वयादिति**। नन्वस्मिन्नधिकरणे पूर्वपक्षो न दृश्यत इत्यत आहुः—'**तुशब्द**' इति। '**पूर्वपक्षव्यावृत्त्यर्थ**'इति। पूर्वपक्षस्याऽवसर एव नास्तीति तन्निवृत्त्यर्थं तुशब्द इत्यर्थः। तेन कारणताविचारो विषयः। तत्संशयः। पूर्वपक्षस्तु न। अस्त्येवेति सिद्धान्तः। उपोद्घातः सङ्गतिरिति चतुष्टयाङ्गमिदमधिकरणं सूचितम्। ननु ब्रह्मैव निमित्तकारणमिति पूर्वपक्षः कुतो न स्वीक्रियते इत्यत आहुः—'**निमित्तत्वे**'ति। '**श्रुतिसिद्धत्वादि**'ति। तथा च तत्र निराकर्तुं शक्यत इति भावः। नन्वेवं चेत्तर्हि तस्य स्वीकारः किमर्थमित्यत आहुः—'**मतान्तरे**'ति। तटस्थनिमित्तकारणता यैः स्वीक्रियते तन्मतनिराकरणत्वेनेत्यर्थः। वक्ष्यते द्वितीयाध्याय इति शेषः। सूत्रार्थमाहुः—'**तदि**'ति। ब्रह्मणोऽधिकारलभ्यत्वात्सूत्रस्थतत्पदस्य कारणपरत्वमाहुः—'**ब्रह्मैव सम**'।

वैश्विद्गिरविरचिता वेदान्तचन्द्रिका।

'**तत्तु समन्वयादि**'ति। '**पूर्वपक्षे**'ति। संशयानपायादकारणत्वपक्षम्। ननु निमित्तत्वस्यापि सिद्धत्वात्कथं केवलं समवायित्वमेवोच्यत इत्यत आहुः—'**निमित्तत्वस्ये**'ति। अग्रे

श्रीलालुभट्टकृता गूढार्थदीपिका।

**तत्तु समन्वयात्**। तद्ब्रह्मैव समवायिकारणम्। तत्र हेतुः समन्वयात्। '**सम्यगनुवृत्तत्वादि**'ति। अस्तिभातिप्रियत्वेन सर्वं प्रतीयते। तत्राऽस्तीति सदंशः। भातीति चिदंशः। प्रिय

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

**तत्तु समन्वयात् ॥ ३ ॥** **पूर्वपक्षव्यावृत्त्यर्थः** अकर्तृत्वासमवायिकारणत्वरूपपक्षव्यावृत्त्यर्थः। ननु तुशब्दो विशेषावधारणपूजाव्यावृत्तिपादपूरणाद्यर्थहेतुषु दृष्ट इति कथं व्यावृत्त्यर्थ एवात्र गृह्यत इत्यत आहुः—'**मतान्तरे**'त्यादि। **मतान्तरं** व्यावृत्त्यतिरिक्तार्थोपादानरूपं मतान्तरम्। निराकरणत्वेन निराकरणं यथा स्यात्तेन प्रकारेण अग्रे 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इत्यत्र 'तु' शब्दस्येतरार्थत्वनिरासो वक्ष्यत इत्यर्थः। **ब्रह्मैव** 'सत्यं ज्ञानमनन्तं ब्रह्मे'तिश्रुतिप्रतिपादितं ब्रह्मैव। **समवायिकारणं** नामरूपात्मकप्रपञ्चस्य समवायिकारणम्। **सम्यगित्यादि** कार्यमात्रे सम्यक्सम्बद्धत्वादित्यर्थः। एतदेवोपपादयन्ति—'**अस्ती**'त्यादीना। ननु ब्रह्मधर्मास्तित्वादीनां कार्ये-

भातिप्रियत्वेन सच्चिदानन्दरूपेणाऽन्वयात् । नामरूपयोः कार्यरूपत्वात् । प्रकृतेरपि स्वमते

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

तानि च तत्कारणनिष्ठाऽस्तित्वादिनारब्धा(?)इति मन्तव्यम् । उपादानगुणानां कार्यगुणाऽऽरम्भकत्वस्य सर्वसम्मतत्वात् । तच्च 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिभिर्ब्रह्मैव भवतीति तदेवोपादानमित्यर्थः । नन्वस्तित्वादिवत्त्रैगुण्यस्याऽपि कार्ये प्रतीयमानत्वात्त्रिगुणं प्रधानमेव कथं नोपादानकारणमित्यत आहुः—'प्रकृतेरपी'ति । ब्रह्मणः सर्वकारणकारणरूपत्वेन प्रधानमपि तत्कार्यम् । भगवतः सदंशादाविर्भूतत्वात् । अत एव 'सदंशेन जडा अपी'ति । एवं च यथा घटादौ मृदादिधर्माणां प्रतीयमानत्वेऽपि न ब्रह्मण उपादानत्वे काचित्क्षतिः । तेषामवान्तरकारणत्वेन मूलकारणनिराकरणाऽसम्भवात् । तथा प्रधानस्यापि कारणत्वेऽपि ब्रह्मकारणत्वे न काचिदनुपपत्तिरित्यर्थः । ननु कार्येऽस्तित्वादिवत्परि-

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

'वापिकारणमि'ति । एवकारेण प्रकृतेर्व्यवच्छेदः । 'सम्यगनुवृत्तत्वादि'ति । जगति ब्रह्मण। सम्यगनारोपिताऽनागन्तुकरूपेण, पटे.तन्तुवदनुस्यूतत्वादित्यर्थः ।

ननु पटे तु तन्तोरभिव्याप्तिर्दृश्यते, ब्रह्मणस्तु प्रपञ्चे केन रूपेणाभिव्याप्तिरित्यत आहुः—'अस्ती'ति । प्रपञ्चे यदस्तित्वादित्रय मासते तत्सच्चिदानन्दरूपब्रह्माऽन्वयादेवेत्यर्थः । ननु नामरूपयोरप्यन्वयो दृश्यत इति मायाया अप्यन्वयोऽस्तीत्यत आहुः—'नामरूपयोरि'ति । एतयो. कर्मणोरप्युपलक्षकत्वं बोध्यम् । त्रयं वा इदं नामरूपं कर्म चेति श्रुतेः । कार्यरूपत्वात् जगदुत्पत्त्यनन्तर प्रतीयमानत्वेन जन्यत्वात् । तथा चाऽनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीतिश्रुत्या, लोके च पटो रसन तमेव रूप नाम कथम(?)त्र दृश्यत इति भावः ननु सत्वरजस्तमसामनुवृत्तिदर्शनेन प्रकृतेरेव समन्वयः कुतो न स्वीक्रियत इत्यत आहुः—'प्रकृते-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

द्वितीयेध्याये । सूत्रं व्याकुर्वन्ति—'तदि'ति । इतरव्यवच्छेदकोऽयमेवकारः । तद्धेतुः—'समन्वयादि'ति । हेत्वर्थं विशदयन्ति—'सम्यगि'ति । तत्वं चाऽनारोपिताऽनागन्तुकरूपेण सर्वत्र विद्यमानत्वम् । तदेव दर्शयन्ति—'अस्ती'त्यादि । अस्तित्वादिरूप यत्सच्चिदानन्दस्य तेन रूपेण सर्वत्र कार्यजातेऽन्वयात् । नहि ब्रह्मव्यतिरेकेण कस्यचिदप्यस्तित्वं स्वतोस्ति । नन्वेव नामरूपयोरपि सर्वसमन्वयात्तयोरपि स्यादुपादानत्वमित्याशङ्क्याहुः—'नामरूपयोरि'ति । जीवरूपेण सर्वस्य व्याकरणात् । ननु प्रकृत्यात्मकानां सत्वादिगुणानां सर्वानुवृत्तेस्तदुपादानकमेवेदं स्यादित्यत आह.—

श्रीलाळूभट्टकृता गूढार्थदीपिका ।

इत्यानन्दांश इति सर्वं सच्चिदानन्दात्मकमेवेति ज्ञेयम् । नन्विदं ब्रह्मेति प्रत्ययाऽभावात् घटपटादौ घटोऽस्ति पटोऽस्तीति प्रत्ययाद्घटपटादयः पृथगेव सन्त इति न ब्रह्मणः समन्वय इत्याशङ्क्याऽऽहुः—'नामरूपयोः कार्यरूपत्वादि'ति । नामरूपात्मकं जगत्कार्यं जन्यम् । स्वकारणजनितसत्ताकत्वात् । न पृथक् सार्वदिकसत्तावत् । प्रतीयते तु सत्तामात्रम् । न तु जन्यसत्ता । अतः सत्तामात्रप्रतीयते तत्कारणनिष्ठमेवेति ब्रह्मणः समन्वयो ह्यबाधितः । 'स आत्मानꣲ स्वयमकुरुत स सर्व

सम्प्रदायपथीमद्दिष्टारामप्रणीत प्रदीप ।

न्वयवत् प्रकृतिगुणसत्वादीनामपि कार्येन्वयात्तस्या एव प्रपञ्चोपादानत्वमस्त्वत आहुः—'प्रकृते'रिति

तदंशत्वात् । अज्ञानात्परिच्छेदाप्रियत्वे । ज्ञानेन बाधदर्शनात् । नानात्वं त्वैच्छिकमेव ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

च्छेदाऽप्रियत्वयोरपि प्रतीतेस्तादृशधर्मवदेव कारणं कस्मान्न भवतीत्यत आहुः—'अज्ञानादि'ति । 'एतदात्म्यमिदं सर्वं' 'स आत्मानꣳस्वयमकुरुते'त्यादिभिः सर्वस्याऽपि कार्यजातस्य ब्रह्मरूपत्वेनाऽवान्तरकारणेष्वपि तयोरश्रूयवचनत्वादज्ञानकार्ये एवेति मन्तव्यम् । न च तयोर्मूलकारणधर्मत्वमेवाङ्गीकर्तव्यमिति वाच्यम् । तस्याऽनित्यत्वप्रसङ्गेन तत्कारणापेक्षायामनवस्थापत्तेर्दुः परिहरत्वात् । अज्ञानकृतत्वे विनिगमकमाहुः—'ज्ञानेने'ति । गर्भेस्थित एव हि वामदेवः सिद्धज्ञानत्वेन

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

रपी'ति । 'तदंशत्वादि'ति । वाङ्मनोगोचरातीतं द्विधा समभवद्बृहत् । तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका । ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयत' इत्येकादशस्कन्धीयभगवद्वचनैरंशत्वे सिद्धे कार्यत्वे नाऽऽगन्तुकत्वानुवृत्तत्वं नास्तीति भावः ।

ननु प्रपञ्चे कस्यचिद्दुःखं कस्यचित्सुखमिति देशत, एकस्यैव कदाचिद्दुःख कदाचित्सुखमिति कालतः, परिच्छेदो दुःखं च दृश्यते, परिपूर्णस्य ब्रह्मणः समन्वये सति तदुभय न स्यादित्यत आहुः—'अज्ञानादि'ति । परिच्छेदोऽप्रियत्वं चाऽज्ञानेनानुभूयत इत्यर्थः । ननु कथमिद ज्ञायत इत्यत आहुः—

केनचिद्विरचिता वेदान्तचन्द्रिका ।

'प्रकृतेरपी'ति । स्वमते व्यासमते । तदंशत्वाद्ब्रह्मांशत्वात् । वाङ्मनोगोचरातीतं द्विधा समभवद्बृहत् । तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिकेत्येकादशीयवाक्यात् । ननु न यदि कार्येऽन्वयः प्रकृतेस्तर्हि कथ परिच्छेदाप्रियत्वे तत्राहुः—'अज्ञानादि'ति । प्रतीयेते इति शेषः । ब्रह्मत्वेन ज्ञानाभावात् । 'ज्ञानेने'ति । ब्रह्मत्वेन ज्ञानेन परिच्छेदाऽप्रियत्वयोर्बाधदर्श-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

भवति पुरुष एवेदꣳसर्व'मित्यादिश्रुते । तथा च नामरूपात्मकस्य जगतो ब्रह्माऽभिन्नत्वेन न पृथक्सत्ता किन्तु ब्रह्मरूपत्वाद्ब्रह्मण एव सर्वत्र समन्वय इति भावः । ननु जगति त्रैगुण्यप्रतीतेः प्रकृतिसमवायिकारणकत्वमेवास्त्वित्याशङ्क्याऽऽहुः—'प्रकृतेरपि स्वमते तदंशत्वादि'ति । सतोऽभिव्यञ्जकः कालो ब्रह्म तन्नितयं प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म तन्नितयं त्वहमित्येकादशवाक्यात्प्रकृतेर्ब्रह्मांशत्वम् । तथा च प्रकृतिसमवायिकारणकत्वस्वीकारेऽपि ब्रह्मसमवायिकारणकत्व न हीयत इत्यर्थः । ननु सर्वत्र व्यापकत्वाभावः प्रतीयते । अतो न सर्वस्य ब्रह्मतेत्याशङ्क्याऽऽहुः—'अज्ञानात्परिच्छेदाप्रियत्वे' इति । अविद्यामोहितबुद्धेरविदुषो व्यापकत्वाऽभाव । किन्तु व्यापकत्वतिरोधानम् । ततश्च न ब्रह्मत्वहानिरिति भावः ।

मगधदेशीयश्रीमदिच्छारामप्रणीत प्रदीप ।

तथा च चैत्रादिकर्तृके कार्ये ब्रह्मणः कर्तृत्वमिवोपादानत्वेपि बाधकाभावः । इत्थ चेतरोपादनकेपि तथोपादानकत्वमव्याहतमेवेतिभावः । तदंशत्वात् ब्रह्मांशत्वात् । 'सदंशेन जडा अपी'त्यनेन सदंशात् प्रकृतेरप्युत्पत्तेरित्यर्थः । ननु प्रपञ्चे परिच्छेदाप्रियत्वयोरपि भानात् तयोरप्युपादानब्रह्मधर्मता स्यादत आहुः—'अज्ञाना'दित्यादि । अन्यथा गर्भस्थो वामदेवो 'अह मनुरभव सूर्यश्चे'ति न वदेत् । 'सर्व खल्विदं ब्रह्म' 'ऐतदात्म्यमिद सर्वमि'तिश्रुतिश्च न वदेत् । ज्ञानेन ब्रह्मत्वेन सकलपदार्थाना

जडजीवान्तर्यामिष्वेकैकांशप्राकट्यात् । कथमेवमिति चेत् । न । सद्रूपे घटरूपक्रियास्विव

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

परिच्छेदाऽभावं पश्यन् 'अहं मनुरभवं सूर्यश्च'त्यादिना सर्वरूपत्वं स्वस्यैव ब्रुवन् परिच्छेदं निराकरोति । तथाऽप्रियत्वमप्यज्ञानकृतमेव 'न ह वै सशरीरस्य सतः प्रियाऽप्रिययोरपहतिरस्ती'ति देहाध्याससहितस्य प्रियाऽप्रियसंस्पर्शमुक्त्वा .'अशरीरं शरीरे वा वसन्तं न प्रियाप्रिये स्पृशत'इति तस्यैव पश्चात्तद्रहितस्य प्रियाऽप्रियस्पर्शाऽभावं दर्शयन्ती तयोरज्ञानकार्यत्वमेव श्रुतिर्निरूपयति । यतो ब्रह्मांशत्वेन नित्यशुद्धमुक्तस्वभावस्याऽध्यासमन्तरेण सशरीरत्वं तत्कृते प्रियाऽप्रियत्वे ततोज्ञानमन्तरेणाऽशरीरत्वं च वक्तुं शक्यम् । यतोऽज्ञानं ज्ञानस्यैव निवर्तकमिति व्याप्तेः सर्वसम्मतत्वात् । तस्मान्न कारणधर्मता तयोर्वक्तुं शक्येति भावः । ननु परिच्छेदस्याऽब्रह्मधर्मत्वे 'एकोऽहमि'त्यादिना ब्रह्मणो नानात्वं कथमुच्यत इति चेत्तत्राऽऽहुः—'नानात्वमि'ति । तत्र नानात्वं 'एकोऽहं बहु स्यामि'त्यादिना रमणाऽर्थत्वादैच्छिकमेव । तेन विना तदसम्भावात् । कथं तदित्याकांक्षायामाहुः—'जडजीवान्तर्यामिष्वि'ति । जडे सदंशः प्रकटः । इतरयोरनुद्भू-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

'ज्ञानेने'ति । आत्मानन्दज्ञानेनेत्यर्थः । ननु प्राकृतिकं नानात्वमपि नादरणीयमित्यत आहुः—'ऐच्छिकमि'ति । बहु स्यामिति श्रुतेरिति शेषः । ननु प्रपञ्चे कया रीत्याऽऽन्वय इत्यत आहुः–'जडे'ति ।

केनचिद्विरचिता वेदान्तचन्द्रिका ।

नात् । नन्वेवं प्रकृत्यन्वयाऽभावे नानात्वानुपपत्तिरित्यत आहुः—'नानात्वमि'ति । 'एकोऽहं बहुस्या'मितिश्रुतेः । तत्र हेतुः—'जडे'ति । सच्चिदानन्दरूपस्य सदैकरसस्य । ननु ब्रह्मण एकैकांशेन

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ननु घटपटाद्यनेकपदार्थरूपस्य नानात्वं प्रतीयते न ब्रह्मत्वम् । ब्रह्मणस्त्वेकत्वादेकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चनेतिनानात्वनिषेधादित्याशङ्क्याऽऽहुः—'नानात्वं त्वैच्छिकमेवे'ति । 'एकोऽहं बहु स्यामि'ति श्रुतेर्बहुभवनेच्छया प्रादुर्भूतं यन्नानात्वं तत्त्वन्योन्याऽभावरहितव्यक्तिबहुलरूपम् । न ह्येकस्य नानात्वमन्योन्याऽभावमवगाहते । अत एकस्य नानात्वमैच्छिकं, स्वेच्छया जातं न त्वन्योन्याभावावगाहीत्यर्थः । अत एव श्रुतौ 'एकोऽहं बहु स्या'मित्येकस्य बहुभवनमुक्तं नत्वेकोऽहं बहु कुर्यामिति करणमुक्तम् । एकस्य केन प्रकारेणैच्छिकं नानात्वमित्याकाङ्क्षायामाहुः—'जडजीवान्तर्यामिष्वि'त्यादि । जड एकस्य सदंशस्य प्राकट्यम् । जीवे चिदंशस्य

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

ज्ञानेन । बाधदर्शनात् परिच्छेदाप्रियत्वयोर्बाधदर्शनादित्यर्थः । ननु 'तस्मादेकाकी न रमते द्वितीयमैच्छदि'त्यादिश्रुतिभिः रमणार्थं 'एकोहं बहु स्यामि'त्यादिश्रुत्युक्तं नानात्वं भगवता स्वीकृतं तच्च परिच्छिन्नत्वं विना सकलपदार्थानां प्रत्येकं व्यापकत्वे न सम्भवत्यत आहुः—नानात्वमिति । परिच्छिन्नतया नानातत्तद्व्यक्तित्वैरेकस्मिन् ब्रह्मण्यनुभूयमानं नानात्वम् । ऐच्छिकं स्वस्य रमणार्थमभेदांशे व्यापकत्वांशे च जीवानां दृष्ट्यावरणसम्पादनं स्वेच्छया तत् कृतमित्यर्थः । ऐच्छिकत्वमेवोपपादयन्ति–'जडे'त्यादिना । तथा च जडजीवान्तर्यामिषु प्रत्येकं सच्चिदानन्देनि निरूपत्वमस्त्येपि जडे सदंशस्य प्राकट्यं चिदानन्दांश इच्छयाऽऽवरणम् । एवं जीवे चैतन्यांशस्याधिक्यात् सदानन्दांश ऐच्छिकावरणम् ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

तत्वम् । तस्माज्जडपदवाच्यत्वम् । जीवे चिदंश उद्भूतः । सदानन्दयोरनुद्भूतत्वम् । यद्यपि सदंशोऽप्युद्भूत एव तथापि चिदंशस्य तदपेक्षयाऽप्युद्भूतत्वाज्जीवपदप्रयोगः । तथाऽन्तर्यामिण्यपि त्रयाणामुद्भूतत्वेऽप्यानन्दांशस्येतराऽपेक्षयोद्भूतत्वादन्तर्यामित्वमित्यनुसन्धायोक्तं-**जडजीवान्तर्यामिष्वेकैकांशप्राकट्यादिति** । अन्यथा जड एकांशस्य प्राकट्येऽपि जीवाऽन्तर्यामिणोर्द्वयोस्त्रयाणां च प्राकट्यात्तयोक्तिरनुपपन्नैव स्यात् । ननु ब्रह्मण एकरूपत्वेन कथमनेकरूपत्वापादकैकैकांशप्राकट्यकरणं सम्भवतीत्याशङ्क्य कैमुतिकन्यायेन निराकुर्वन्ति-'**कथमेवमिति चेन्ने**'ति । यथा घटे तद्रूपे तत्क्रियायां च सदंशस्योद्भूतत्वेऽपि यथा घटे घटः सन्निति सत्ता प्रतीयते न तथा रूपे । यथान रूपे तत्प्रतीतिर्न तथा क्रियायामिति तारतम्येन सदंशस्यैकस्याऽऽविर्भावः प्रत्यक्षसिद्धः । तथा जड एव

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

जडे सदंशो जीवे चिदंशोऽन्तर्यामिण्यानन्दांशोऽनुभूयत इत्यर्थः । शङ्कते—'**कथमि**'ति । जडजीवान्तर्यामिरूपप्रपञ्चे सच्चिदानन्दरूपब्रह्मणोऽन्वयसत्त्व एकांशस्य प्राकट्यमन्यांशस्य तिरोहितत्वं कया रीत्यैवमङ्गीक्रियत इत्यर्थः । अत्र समाधानमाहुः—'**ने**'ति । सद्रूप अस्तीतिप्रत्ययविषय एकस्मिन्नर्थे । घटरूपक्रियासु द्रव्यगुणकर्मसु । '**तारतम्येने**'ति. । त्रिष्वेकैकांशप्राकट्यरूपतारतम्येन । सदंशस्येति शेषः । '**जडेऽपी**'ति । मानत्वादीत्यादिपदेन प्रियत्वपरिग्रहः । यथा घटः सन्, रूपं सदित्यादिप्रतीत्याऽस्तीति विषयीभूतेर्थे विद्यमानस्य सदंशस्य द्रव्यगुणकर्मस्वाविर्भावः स्वीक्रियते,

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

प्राकट्यमसम्भावितम् । तेन वा कथं नानात्वमित्याशयेनाहुः—'**कथमि**'ति । आशङ्कां निराकुर्वते—'**ने**'ति । तद्विशदयन्ति—'**सद्रूप**'इति । घटः सन् घटोऽस्तीति प्रत्ययात्सद्रूपे ब्रह्मणि घट इति नाम, कम्बुग्रीवाद्यवयवादिविशिष्टस्वरूपमाकारो वाय्वादिवशात्स्पन्दनादिक्रिया । एतेष्विव सद्रूपस्य ब्रह्मणस्तारतम्येन तत्त्वेन गुणित्वादिना च गुणप्रधानभावेन चाविर्भाव इव सद्रूपेऽपि जडे, घटो भाति घटो भात इति भातत्वप्रतीतेर्हेतोः सच्चिदान्दांशानां तारतम्येन गुणप्रधानभावेन सच्चिदानन्दात्मकस्य ब्रह्मणः सदाद्येकैकांशेन प्रतीत्याऽन्यथाऽनुपपत्तिबलादाविर्भावोऽङ्गीकर्तव्य इत्यर्थः । अत्राऽऽदिपदेन प्रियत्वं बोध्यम् ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

प्राधान्येन प्राकट्यम् । अन्तर्यामिण्यानन्दांशस्य प्राधान्येन प्रादुर्भाव इत्य वैचित्र्यान्नानात्वमिति हार्दम् । एकरसे ब्रह्मणि नानात्वप्रयोजकोऽसौ तारतम्येनाऽऽविर्भावो न युज्यत इत्याशङ्क्य निराकुर्वन्ति—'**कथमेवमि**'त्यादिना । दृष्टान्तेन तारतम्यस्य युक्तत्वं साधयन्ति-'**सद्रूप**' इत्यादि । ब्रह्मणः सदंशरूपे घटपदार्थे घटे तद्रूपे, तत्क्रियासु, सदंशस्य प्राकट्येऽपि, घटे यथा घटः सन्निति सत्ता प्रतीयते तथा घटरूपे सत्ताप्रत्ययो न भवति । यथा घटरूपे यादृक् सत्वं प्रतीयते, न तथा घटक्रियायां

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

एवमन्तर्यामिण्यानन्दांशस्योद्भूतत्वेनानन्दतुल्यत्वाभावात्सच्चिदंश ऐच्छिकावरणमित्येवं बोध्यमित्यर्थः । ननु सदेकरसस्य ब्रह्मणः कथं पूर्वोक्तरीत्या वैचित्र्येणानुभव इत्याशङ्क्य कैमुतिकन्यायेन समाधानमाहुः—कथमित्यादि । एवं उक्तरीत्या वैलक्षण्येन । सद्रूपे इत्यादि । तथाचैक एव सदंशो घटरूपक्रियेति त्रिभिः प्रकारैः प्रकटो जातस्तत्रैकस्यैव सदंशस्य घटत्वरूपत्वक्रियात्वधर्माणां परस्परं विरुद्धत्वेनैव भान

तारतम्येनाविर्भाववज्जडेऽपि भानत्वादिप्रतीतेस्तारतम्येनाऽऽविर्भावोऽङ्गीकर्तव्यः । भगवदिच्छाया नियामकत्वात् । नच साधारण्येन सर्वजगत्प्रति परमाण्वादीनामन्वयः सम्भवति ।

गोस्वामिश्रीपुरुषोत्तमविरचिता अणुभाष्यव्याख्या ।

भानत्वादिप्रतीतेरपि कदाचित्सत्त्वाचिदाविर्भावोऽपि तारतम्येनाऽवश्यमभ्युपेयः । तथा चैकस्मिन्नेव पदार्थे यत्रैव व्यवस्था तत्र त्रिष्वपि तथाऽऽविर्भावे किं वक्तव्यमिति कैमुतिकन्यायो ज्ञेयः । ननु जडे चिदाविर्भावः कथमिव स्यादिति चेत्तत्राऽऽहुः—'**भगवदिच्छाया**'इति । अत एवा'**ऽस्पन्दनं गतिमतां पुलकस्तरूणामि**'त्यादिकं सगच्छते । '**ता आप ऐक्षन्ते**'त्याद्यपि । अत्राऽप्येवकारार्थो ज्ञेयः ।

गोस्वामिश्रीगिरिधरविरचितं विवरणम् ।

तथा जडेऽपि मद्यांशयोः चिदानन्दयोरप्याविर्भावोऽङ्गीकार्य इति भावः । नन्वेवं चेत्तर्हि घटः सन्निति सामानाधिकरण्यप्रतीतिवत् ज्ञानं घट इति प्रतीतिः कुतो न जायत इत्यत आह—'**भगवदि**'ति । जडे ज्ञानांशस्य क्रीडार्थमिच्छया तिरोहितत्वान्न तादृशप्रतीतिरिति भावः । उच्चनीचभावादीनामाविर्भावोऽपि क्रीडार्थमिच्छयेत्येकादशस्कन्धे स्पष्टमिति सर्वमनवद्यम् ।

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

एवं च सति सदात्मके जडे सदंशः प्रधानं चिदानन्दांशौ गुणभूतौ तिरोभूतावाच्छन्नाविति यावत् । अनुभवाऽविषयत्वं तिरोभावः । एवं चिदात्मके जीवेऽपि चिदंशप्रधानमितरौ गुणभूतौ । यद्यपि सदंशोऽपि प्रधानं तथापि चित्प्राधान्येन तत्प्रतीतेस्तथा । आनन्दांशस्तु तिरोहितः । अन्तर्यामिणि तु त्रयमपि प्रकटम् । तथाप्यानन्दप्राधान्येनैव तयोः प्रतीतिविषयत्वं बोध्यम् । *आनन्दः प्रीतिरेव । ननु जडे भातत्वेन ज्ञानविषयतास्ति । नतु ज्ञानम् । तत्कथं गुणभावेनापि तद्वत्त्व*मिति चेत् । न । **पुत्रेति तन्मयतया तरवोऽभिनेदुरिति, त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्नित्यादिवाक्यैरभिनन्दनादेरुक्तत्वात्** । नह्यभिनन्दनं, *विना ज्ञानं भवति । ता आप ऐक्षन्तेतिश्रुतेश्च । जडादिषु सदादीनां तारतम्येनाऽऽविर्भावे कारणत्वेन* भगवदिच्छैवेत्याहुः—'**भगवदि**'ति । सा चैकोऽहं बहु **स्यामि**त्याकारिका ज्ञेया । परमाणूनां

केश्चिद्विरचिता वेदान्तचन्द्रिका ।

सत्त्वप्रतीतिः । तथा चैकस्मिन् सदंश एव प्रतीतितारतम्य, तदा सच्चिदानन्दांशेषु तारतम्येनाऽऽविर्भावे

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीप ।

ननु सामानाधिकरण्येन । तथा सति सच्चिदानन्देतित्रयाणां परस्य वैलक्षण्ये भाने किं चित्रमिति कैमुतिको बोध्यः । भानत्वादीनि । 'ता आप ऐक्षन्त' 'चक्षुरब्रवीत्' 'अस्पन्दनं गतिमतां पुलकस्तरूणामि' त्यादीनित्यर्थः । '**तारतम्येने**'त्यादि । सदादिष्वपि एकैकांशप्राकट्यरूपतारतम्येन । **आविर्भावः** प्रत्यक्षयोग्यता । **नियामकत्वात्** तरतमभावे नियामकत्वात् । ब्रह्मणः सर्वजगत्प्रति समवायिकारणत्वं अस्तिभातिप्रियत्वादिरूपजगति ब्रह्मण समन्वयं चोपपाद्येतरस्य जगत्प्रत्युपादानत्वं न सम्भवतीत्याहुः—'**नचे**' त्यादिना । **साधारण्येन** सकलकार्यान्वयिकारणधर्मेण । **सर्वजगत्प्रति** कार्यद्रव्यगुणक्रियासमुदायरूपजगत्प्रतीत्यर्थः । **अन्वयः** मृत्सुवर्णकार्येषु मृत्सुवर्णानामिव भानमित्यर्थ. ।

एकस्मिन्ननुस्यूते सम्भवत्यनेककल्पनाया अन्याय्यत्वात् । लोके कर्तृविशेषवदुपादानविशे-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

यद्वा । ननु तारतम्येनाऽऽविर्भावे को हेतुरित्यत आहुः–'**भगवदिच्छाया**' इति । '**तस्मादे-काकी न रमते' 'एकोऽहं बहु स्याम्' 'लोकवत्तु लीलाकैवल्यमि**'त्यादिभिरात्मारामस्य पूर्णकामस्य प्रयोजनान्तराऽभावादिच्छैव नियामिकेति भावः । वैचित्र्यं विना तदसम्भवात् । तस्य च तारतम्याऽधीनत्वात् । एवमेकरूपत्वेऽपि ब्रह्मणि नानात्वं समर्थयित्वा तस्यैवोपादानत्वं नान्यस्येति वक्तुमितरेषु तदनुपपत्तिमाहुः—'**न च साधारण्येने**'ति । नहि परमाणूनां प्रकृतेर्वा सर्वस्मिन्प्रपञ्चेऽन्वयः कदाचिदपि सम्भवति । आकाशादौ परमतस्य वक्तुमशक्यत्वात् । ननु कार्ये हि कारणानामन्वयः । तथाच पृथिव्यादिषु चतुर्ष्वपि तदन्वयस्य निष्प्रत्यूहत्वात्कथं नाऽन्वय इत्याशङ्क्याऽऽहुः–'**एकस्मिन्नि**'ति । नहि परमाणूनामपि सामान्यरूपेणाऽन्वयः सम्भवति । सजातीयानामेवाऽऽरम्भकत्वस्याऽभ्युपगम्यमानत्वात् । तथाच '**एकमेवाऽद्वितीयमि**'त्यादिभिर्ब्रह्मण एवैकत्वात्तदन्वयस्यैव वक्तुमुचितत्वेनाऽनेकतत्कल्पनस्य गौरवग्रस्तत्वेनाऽन्याय्यत्वम् । नन्वनेकेषामन्वयस्य कथमन्याय्यत्वमिति चेत् । न । द्वितीयाऽध्याये **महद्दीर्घवद्ध्रस्वपरिमण्डलाभ्यामि**त्यादिना

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

अत्र समवायिकारणपरमाणुसमन्वयवादी नैयायिक शङ्कते—'न चे'ति । समाधानमाहुः—'**एकस्मिन्नि**'ति । ब्रह्मणीति शेषः । नन्वनेकेषु समवायित्वं न स्वीक्रियते चेत्तन्त्वादीनां पट-समवायित्वं न स्यादित्यत आहुः—'**लोके**'ति । '**कर्तृविशेषवदि**'ति । कुलालादिलोकेशान्तकर्तृ-

कैश्चिद्विद्वद्विरचिता वेदान्तचन्द्रिका ।

समन्वयेऽनुपपत्तिं दर्शयन्ति—'**नचे**'ति । साधारण्यं हि कारणतावच्छेदकविशेषधर्माऽनाक्रान्तत्वम् । आकाशादौ तदभावात् पार्थिवादीनां तेषां कालादावपि तथा । आदिना प्रकृत्यादेः सग्रहः । ननु नाथ आकाशादौ तदभावात् पार्थिवादीनां ... दोषः । सजातीयानामेव तेषां सजातीयेषु कार्येष्वन्वयस्याऽनुभवसिद्धत्वात् । आकाशादौ तु कार्यत्व-स्यैवाऽनभ्युपगमादित्यत आहुः–'**एकस्मिन्नि**'ति । एकस्मिन्ब्रह्मणि तत्स्रष्टा तदेवानुप्राविशदि'तिश्रुत्या सिद्धे अनुस्यूते सम्भवति, अर्थात्समवायित्वे सम्भवति सत्यनेकेषां परमाणूनां समवा-यित्वकल्पनस्य गौरवग्रस्तत्वात् । नन्वेवमपि सति मृत्तन्त्वादिभिरेव घटपटाद्युत्पत्तेरन्वयव्यतिरेकाभ्यां तेषामेव तत्त्वमुचितं, न त्वदृष्टस्य ब्रह्मण इत्यत आहुः—'**लोक**'इति । यथा कुलालादेः कर्तृत्वेपि

श्रीलालूभट्टकृता गूढार्थदीपिका ।

क्वा वाऽनुपपत्तिरिति भावः । '**लोके कर्तृविशेषवदि**'ति । घटनिरूपितं कर्तृत्वं यथा कुलाले भवदपि ब्रह्मणि घटकर्तृत्वं नापनुदति । तथा मृदादौ घटसमवायिकारणत्वं सत्यपि न ब्रह्मणि घटसमवायि-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

'**परमाण्वादी**'त्यादिपदेन दिक्कालयोर्ग्रहणम् । ननु पार्थिवादिपरमाणुचतुष्टयस्य प्रत्येकं पृथिवीजलादौ समन्वयोऽस्त्येवेत्यत आहुः—**एकस्मिन्नि**त्यादि । एकस्मिन् ब्रह्मण्यनुगते उपादाने सम्भवति सत्य-नेकोपादानकल्पनाया गौरवेणान्याय्यत्वादित्यर्थः । ननु यत्रयत्र कार्यत्वं तत्रतत्र ब्रह्मोपादानकत्वमिति विनियतान्वयो न सम्भवति घटपटादौ कार्यत्वे मृदाद्युपादानकत्वस्य च सत्त्वेन ब्रह्मोपादानकत्वस्य त्वभावेन व्यभिचारादित्यत आहुः—'**लोके**' इत्यादि । तथा च लोके तत्तत्कार्यं प्रति तत्तत्कुलालादि-

पग्रहणेपि न ब्रह्मणि व्यभिचारः । अलीकप्रतीतेऽस्तित्वादिप्रतीतावपि सम्यगन्वयाऽभा-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

निराकरिष्यमाणत्वात् । ननु घटादौ मृदादीनामुपादानत्वं प्रत्यक्षतो दृष्टम् । न ब्रह्मणः । तथाच कथं तस्य सम्यगनुवृत्तत्वमित्याशङ्क्य निदर्शनेन समाधानमाहुः—लोके कर्तृविशेषवदिति । यथा प्रत्यक्षतो दृष्टमपि कुलालादिकर्तृत्वं न ब्रह्मकर्तृत्वोपघातकम् । तथोपादानविशेषस्य मृदादेरिन्द्रियेण ग्रहणेऽपि ब्रह्मणि न व्यभिचारः । उपादानत्वस्येति शेषः ।

ननु शुक्तिरजतादावप्यस्तित्वादिप्रतीतेस्तत्राऽपि ब्रह्मणः समन्वयः कस्मान्न भवतीत्याशङ्क्याहु—'अलीकप्रतीत'इति । यदलीक सत्सत्त्वेन प्रतीतं तस्मिन्नित्यर्थः । तत्राऽस्तित्वादिप्रतीतेस्तद्व्यवहितोत्तरक्षण एव 'नेदं रजतमि'ति बुद्ध्या बाधदर्शनेन प्रातिभासिकत्वात् । तद्व्यतिरिक्ताया एव तस्यास्तत्साधकत्वान्न ब्रह्मकार्यत्वम् । अस्तित्वादिप्रतीतेः समन्वयस्य व्यभिचारः साहचर्यनियमाऽभावश्च

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

विशेषवदित्यर्थः । 'उपादाने'ति । तन्तुपरमाण्वादीनां प्रकृत्यन्तानां ग्रहणेऽपीत्यर्थः । 'न ब्रह्मणि व्यभिचार' इति । ब्रह्मणः सर्वनियन्तृत्वेन समवायित्वेन च कारणत्वव्यभिचारो नास्तीत्यर्थः । ननु भ्रमे स्वाप्निकप्रतीतौ चास्तित्वप्रतीतिर्जायत इति ब्रह्मणोऽन्वयस्तत्रापि स्यादित्यत आहुः—'अलीके'ति । 'प्रतीत'ेति । रजतादाविति शेषः । 'सम्यगि'ति । अन्वये सम्यक्त्वं नाम, अनारोपितानागन्तुकरूपेणान्वयत्वम् । जागरणोत्तरं विशेषदर्शनोत्तरं स्वाप्निकराज्यस्य भ्रमीयरजतस्य च बाधदर्शनात् । स्वाप्निके भ्रमीयरजतादौ च सत्ताऽऽरोपितेति तत्र न ब्रह्मकार्यत्वम् । अथ च तादृश-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

न ब्रह्मणः कर्तृत्वव्यभिचारस्तथा मृत्तन्त्वाद्युपादानग्रहणेपि नोपादानत्वव्यभिचारः । ननु यद्यस्तीति प्रत्ययबलाद्ब्रह्माऽन्वयाङ्गीकारेण ब्रह्मकार्यत्वं तदा शुक्तिरजतादावस्तित्वप्रतीतेस्तदन्वये तथात्वं स्यादित्यत आहुः—'अलीक'इति । अलीकं सत्प्रतीतं तस्मिन् रजतादावस्तित्वादिप्रतीतिबलान्न तदन्वयेन तत्कार्यत्वं वक्तुं शक्यम् । न वा तत्र भगवतोऽस्तित्वव्यभिचारः । तथाज्ञाने स्वस्यैव बाधात् । स्वेच्छया स्वस्यैव बहुरूपेण भवनानन्तरं स्वप्रवेशाभावादित्यर्थः । तथाच तत्र रजतत्वाऽऽरोपादस्तित्वस्यारोपः ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

कारणत्वाऽभाव इति हार्दम् । तदाहुः—'उपादानविशेषग्रहणेऽपि न व्यभिचार' इति । उपादानत्वस्य न व्यभिचार इत्यर्थः । नन्वस्तिप्रत्ययो रज्जुभुजङ्गादावप्यस्ति, ततस्तत्रापि ब्रह्मसमन्वयः कुतो नाङ्गीक्रियत इत्याशङ्क्याऽऽहुः—'अलीकप्रतीत'इत्यादि । अलीकं यत्सत्वेन प्रतीतं तस्मि-

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीप. ।

विशेषकर्तृसत्त्वेपि यथा ब्रह्मणः कर्तृत्वमुरीक्रियते तथा तत्तद्घटादिकार्येषु कपालादिविशेषोपादानसत्त्वेपि ब्रह्मोपादानकत्वस्य सत्त्वान्न व्यभिचार इत्यर्थः । ब्रह्मणि ब्रह्मोपादानकत्वस्य । ननु यत्रयत्रास्तित्वप्रियत्वाद्यन्वयस्तत्तत्र ब्रह्मोपादानकत्वरूपं ब्रह्मकार्यत्वमितिनियमाङ्गीकारेऽलीकप्रतीतस्वाप्निकरथयोगपथादौ मायाकार्येऽस्तित्वप्रियत्वयोः सत्त्वात्तत्र ब्रह्मोपादानकत्वरूपब्रह्मकार्यत्वस्यासत्त्वाद्व्यभिचार इत्यत आहुः—अलीकेत्यादि । सम्यगित्यादि । जागरणोत्तरं तत्रास्तित्वादिप्रतीतेर्बाधाद्बाधिता-

वान्न कार्यत्वव्यभिचारो । तस्माद्ब्रह्मण एव समवायित्वम् । एतत्सर्वं श्रुतिरेवाह—'स आत्मानः स्वयमकुरुते'ति । निमित्तत्वं तु स्पष्टमेव सर्ववादिसम्मतम् ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

नास्तीत्यर्थः । उक्तमर्थमुपसहरति—'तस्मादि'ति । नन्वेतस्याः प्रातिभासिकत्वमेव कुतो नेत्याशक्य तन्निरासाय श्रुतिसंवादमाहु:—'एतत्सर्वमि'ति । तथा चोक्तश्रुत्यनुरोधात्सर्वस्य ब्रह्मरूपत्वेनाऽस्तित्वादिप्रतीतिः प्रामाणिकी । विकल्पप्रतीतिस्तु वाचारम्भणमात्रत्वादप्रमाणम् । या पुनः श्रुतिसिद्धा, सा तु प्रमाणमेवेति तत्त्वम् । ननु यथोपादानत्व सोपपत्तिकं प्रतिपादितं तथा निमित्तत्वमपि कुतो नेत्यत आहुः—'निमित्तत्वमि'ति । सांख्यादीनां काणादादीनां च सर्वेषां वादिनां सम्मतम् । सांख्यानां मते प्रकृतेर्जडत्वाच्चैतन्योपरागेणैव प्रकृतेः कार्योत्पत्तेरभ्युपगमात् । काणादानामपि मते परमाण्वादिसंघट्टने तस्य कारणत्वात् । तथा च विप्रतिपत्त्यभावान्न भिन्नतया सोपपत्तिकं निरूपणीयमित्यर्थः ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

कार्यतानिरूपिता कारणता, ब्रह्मणि नास्तीति, कार्यलक्षणस्य व्यभिचारोऽपि नास्तीत्यर्थः । उपसहरन्ति—'तस्मादि'ति । प्रपञ्चे प्रकटानां सच्चिदानन्दानामेवाऽऽविर्भावादित्यर्थः । अत्र प्रमाणमाहुः—'एतदि'ति । 'आहे'ति । एकस्यैव कर्तृत्व कर्मत्वमाहेत्यर्थः । 'स आत्मानमि'ति । अत्र श्रुतावात्मपदस्वारस्यादविकृतपरिणामवाद एव सम्मत. । आत्मनो विकाराभावादिति भावः । ननु समवायिकारणत्वं ब्रह्मणः प्रतिपादित परन्तु निमित्तकारणत्व श्रुतिर्वदतीत्यत्र किं कर्तव्यमत आहुः—'निमित्तमि'ति । 'संमतमि'ति । केषांचिन्मते केवलं निमित्तकारण ब्रह्म । अस्माभिस्तु श्रुतिर्वदतीत्येतदर्थं निमित्तवदुपादानकारणत्व ब्रह्मणः स्वीक्रियत इति सर्वसम्मतमिति भावः । एतेन सर्वविधा कारणता ब्रह्मण्यस्तीति क्रियाज्ञानशक्त्योर्निरतिशयित्वभङ्गो नास्तीति सूचितम् ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

ननु वास्तव तदिति भावः । उपसहरन्ति—'तस्मादि'ति । उक्तयुक्तिभ्य. । अन्यत्र समवायित्वस्य वक्तुमशक्यत्वादेवकारोऽन्यव्यवच्छेदकः । ननु प्रयोजकत्वादिरूपेण कर्तृनद्दुत्वसम्भवेपि प्रत्यक्षनिरुद्धत्वान्न समवायिमहुत्वसम्भव इत्यत आहुः—'एतदि'ति । ब्रह्मातिरिक्तस्य समवायित्वनिषेधः । ब्रह्मण एव समवायित्वम् । नानात्वमितरनिरपेक्षत्व कार्यस्य सद्रूपस्य चात्र सर्वपदार्थः । तामेव श्रुतिं दर्शयन्ति—स आत्मानमिति । उक्तार्थोऽत्रात्मस्वयपदैर्ज्ञेयाः । ननु कारणत्वविचारे निमित्तत्वस्यापि विचारः कुतो न कृत इत्यत आहुः—'निमित्तत्वं त्वि'ति । तथा च तत्र विप्रतिपत्त्यभा-

श्रीलालुभट्टकृता गूढार्थदीपिका ।

न्नित्यर्थः । 'सम्यगन्वयाभावादि'ति । अबाध्यप्रत्ययजनकान्वयाऽभावादित्यर्थः । 'न कार्यत्वव्यभिचाराचि'ति । कार्यत्व नास्ति, व्यभिचारस्य नास्तीत्यर्थ । अलीकप्रतीते शुक्तिरजतादौ

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीपः ।

न्वयाभावादित्यर्थः । न कार्यत्वेत्यादि । तथा च तत्रास्तित्वरूपहेतोरेवाभावात् ब्रह्मकार्यत्वमपि न ब्रह्मकार्यत्वस्यास्तित्वे व्यभिचारोपि नेत्यर्थः । ब्रह्मणः समवायिकारणत्व निगमयन्ति—'तस्मा'दित्यादि । निमित्तत्वं ब्रह्मणः कार्यमात्र प्रति निमित्तकारणत्वमित्यर्थः ।

१—अत्रे वादो भूमिकायां द्रष्टव्यः ।

केचिदत्र शास्त्रयोनित्वपूर्वपक्षनिराकरणाय तत्तु समन्वयादिति योजयन्ति । तत्पूर्व-

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

एवं समन्वयसूत्रं सोपपत्तिकं व्याख्याय तत्र विनिगमनार्थं मतान्तरीयं व्याख्यानमनूद्य दूषयति-केचिदित्यारभ्य 'समन्वयसूत्रं वक्तव्यमि' त्यन्तेन । अथातो ब्रह्मजिज्ञासेति ब्रह्मजिज्ञासां प्रतिज्ञाय किं तदित्याकांक्षायां जन्मादिसूत्रे तल्लक्षणमुक्त्वा सर्वज्ञत्वं सर्वशक्तित्वं च समर्थितं तदेव दृढीकर्तुं पुनः शास्त्रयोनित्वादिति प्रयुक्तवान् । शास्त्रस्य ऋग्वेदादिलक्षणस्य योनिः कारणम् । शास्त्रं वा योनिः कारणमिति प्रतिपादितमिति शेषः । तथा च शास्त्रप्रमाणकत्वात्सर्वज्ञत्वं सर्वशक्तित्वं च दृढीकृतमित्यर्थः । ननु शास्त्रस्य तत्प्रतिपादकत्वे सर्वमेतद्भवेत्तदेव तु कथमिव वक्तुं शक्यते । यतः क्रियार्थस्यैवाऽबाधितानधिगतासन्दिग्धार्थप्रतिपादकत्वेन स्वार्थे प्रामाण्यस्य वक्तुं शक्यत्वादक्रियार्थानां स्वार्थेऽप्रामाण्यसम्भवात्तदुपपत्त्यर्थं क्रियासमवायिकर्तृदेवतादिप्रकाशकत्वेन विधिनैकवाक्यतां सम्पाद्य प्रामाण्यस्य पूर्वकाण्डेऽभ्युपगतत्वात्तन्न्यायेन वेदान्तानामपि भूतार्थोपदेशिनामक्रियार्थत्वात्पूर्वकाण्डोक्तकर्मसमवायिकर्तृदेवतादिप्रकाशकत्वेन स्वप्रकरणगतोपासनाविषयसमर्पकत्वेन वा प्रामाण्यस्योपपत्तेर्न स्वार्थे तद्वक्तुं शक्यमिति कथं शास्त्रप्रमाणकत्वं ब्रह्मणो वक्तुं शक्यमित्यतः शास्त्रयोनित्वादिति स्वरूपाऽसिद्धो हेतुरित्याशंकां मनस्यभिसन्धाय तदेव समर्थयितुं सूत्रकारस्तत्तु समन्वयादिति सूत्रं प्रयुक्तवान् । शास्त्रयोनित्वं तु अन्यत्रसिद्धवस्तुप्रतिपादकानां स्वार्थपरत्वाऽभावेऽपि वेदान्तानामक्रियार्थानामपि स्वार्थे सम्यगन्वयस्य वक्तुं शक्यत्वात् । तरति शोकमात्मविदित्यादौ

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

ननु समवायिकारणत्वं नाम समवायसम्बन्धावच्छिन्नकारणत्वम् । एवं च समवायस्याऽभेदसम्बन्धातिरिक्तत्वात्सम्बन्धस्य च द्विनिष्ठत्वाज्जगद्ब्रह्मणोरभेद इदं न संगच्छत इति चेत् ॥ न । अस्मन्मते समवायस्य समन्वयरूपत्वेनाऽभेदस्वरूपत्वमेव वक्तव्यम् । तस्य बहु स्यामितीच्छोत्तरं द्विनिष्ठत्वं संगच्छते । यथा हिरण्यं कुण्डलमित्यत्र हिरण्याऽभिन्नं कुण्डलमित्यर्थेऽभेदस्य द्विनिष्ठत्वं तद्वदत्रापि मन्तव्यम् । अत एवोक्तमभियुक्तैः—कार्यरूपेण नानात्वमभेदः कारणात्मना । हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदेति, सर्वमनवद्यम् । अत्र सर्वेषां मतानामनुवादनं खण्डनं च प्रकाशेनुसन्धेयम् ।

अत्र सूत्रे रामानुजाचार्यादीनां मतमनूद्य खण्डयन्ति—'केचिदि'त्यादिना 'ब्रह्मणः समया-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

याम तद्विचारविषय इति भावः । अत्र मतान्तरीयपूर्वपक्षसिद्धान्तादर्शाननूद्य, स्वसिद्धांतदार्ढ्याय दूषयितुमुपक्रमन्ते—'केचिदि'त्यादि । अत्र शास्त्रयोनित्वादिति सूत्रे । 'पूर्वपक्षे'ति । दृष्टो हि तस्यार्थः

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ब्रह्मकार्यत्वं नास्ति । ब्रह्मसमन्वयस्य व्यभिचारः साहचर्यनियमाभावः । यत्र यत्रास्तित्वप्रतीतिस्तत्र तत्र ब्रह्मसमन्वय इत्याकारकस्य नियमस्याऽभावो नास्ति । अलीकप्रतीतस्य शुक्तिरजतादेरबाध्यत्वेन तद्व्यवस्थापनाद्यावश्यकत्वाद्बाधितत्वादित्यर्थः । मतान्तरीयं व्याख्यानमनूद्य दूषयन्ति—'केचिदि'त्यादिना ।

भगवदीयश्रीगोपेश्वरात्मजश्रीयोगेश्वरकृतः प्रदीपः ।

स्वोक्तसिद्धान्तं दृढीकर्तुं मतान्तरव्याख्यानान्यनूद्य दूषयितुमाहुः—'केचि'दित्यादि । समन्व-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

**पित्वाय समन्वयसूत्रं वक्तव्यमि**'त्यन्तेन । '**पूर्वपक्षनिराकरणाये**'ति । शास्त्रयोनित्वसूत्रे यः पूर्वपक्षस्तन्निराकरणायेत्यर्थः ।

पूर्वपक्षस्तु पूर्वोत्तरकाण्डरूपो वेदः सर्वोऽपि क्रियापर एव । तत्र विधिघटितं वाक्यं मुख्यं क्रियापरम् । अन्यानि वाक्यानि कानिचित्तदङ्गबोधकानि कानिचिदर्थवादवाक्यानि क्रियाप्राशस्त्यबोधकानि । एवंच सर्वोऽपि वेदः क्रियाप्रतिपादक एव, न ब्रह्मप्रतिपादक इति कथं सूत्रे ब्रह्मणि जगत्कर्तृत्वं शास्त्रप्रमाणत्वप्रतिपादकमिति । ननु **आत्मा वारे द्रष्टव्यः आत्मेत्येवोपासीते**त्यादिविधिवाक्यानां ब्रह्मोपासनाङ्गब्रह्मज्ञानप्रतिपादकानामन्येषामपि वाक्यानामुत्तरकाण्डेऽपि सत्वाद्ब्रह्मप्रतिपादकत्वमपि वेदस्य सम्भवतीति चेत् । न । तथापि विधिना उपासनानुकूला क्रिया विधीयते, अन्येषां च वाक्यानां तदङ्गध्यानार्थं ब्रह्मज्ञानप्रतिपादनपरत्वेनैव निर्वाहे, कारणताया न प्रमाणत्वम् । **यतो वेति** वाक्यं ध्यानविधौ प्राशस्त्यबोधकमिति ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

इदमत्र ज्ञेयम् । शास्त्रयोनित्वादित्यनेन ब्रह्मणः शास्त्रप्रमाणकत्वं निरूपितम् । तन्न सम्भवति । वेदान्तानां प्रामाण्यस्यैव दुरुपपादत्वात् । स्वार्थे प्रामाण्यं हि क्रियार्थस्यैव । अबाधितानधिगताऽसन्दिग्धार्थप्रतिपादकत्वात् । अत एव क्रियासमवायिकर्तृदेवतादिप्रकाशकत्वेनाऽक्रियार्थानां विधिनैकवाक्यतां सम्पाद्य, प्रामाण्यं पूर्वकाण्डे प्रतिपादितम् । एवमक्रियार्थानां वेदान्तानामपि स्वप्रकरणगतोपासनाविषयसमर्पकत्वेन प्रामाण्यान्न स्वार्थे प्रामाण्यमिति, तत्रोक्तस्य ब्रह्मणः कथं शास्त्रयोनित्वमित्युत्सूत्रपूर्वपक्षः । एवं पूर्वपक्षे, तत्तु समन्वयादिति सूत्रकार आह–शास्त्रयोनित्वं अस्ति ब्रह्मणः ।

भगवदीयश्रीमद्विठ्ठलरामप्रणीतः प्रदीपः ।

यसूत्रं वक्तव्यमित्यन्तेन अन्थेन । प्रथमसूत्रे ब्रह्मजिज्ञासाप्रतिज्ञाकरणे किं ब्रह्मपदवाच्यमितिजिज्ञासोत्पत्तौ जातायां जन्मादिसूत्रेण ब्रह्मलक्षणमुक्त्वा ब्रह्मणि सर्वज्ञत्वसर्वशक्तिमत्त्वयोः समर्थनं कृतम् । एतद्द्वयदृढीकरणार्थमेव पुनः शास्त्रयोनित्वादित्युक्तवान् सूत्रकारः । शास्त्रस्य वेदरूपस्य योनित्वात् कारणत्वादित्यर्थः । शास्त्रे वेदे प्रतिपादकतासम्बन्धेन योनित्वं कारणत्वं वा यस्येत्यर्थः । शास्त्रोक्तसर्वकारणतावदिति सिद्धम् । एतत्रोक्तं सर्वं तदा सिद्ध्येद्यदि क्रियाप्रतिपादकभिन्नानां सिद्धार्थानां वेदान्तवाक्यानां स्वार्थे प्रामाण्यं स्यात् । तदेव तु न । तेषां क्रियाप्रतिपादकत्वाभावात् । तस्मात्पूर्वकाण्डे क्रियार्थानां कर्मसम्बन्धप्राशस्त्यकर्तृदेवतादिप्रकाशनद्वारा विधिनैकवाक्यतया प्रामाण्यं यथोरीकृतं तथा सिद्धार्थानां वेदान्तवाक्यानामपि कर्मसम्बन्धकर्तृदेवतादिप्रकाशनद्वारा क्रियावाक्यैकवाक्यतयैव प्रामाण्यमुपासनाविध्येकवाक्यतया प्रामाण्यं न तु स्वातन्त्र्येण स्वार्थेपि प्रामाण्यम् । इत्थं च 'यतो वा इमानी'त्यादिशास्त्रोक्तकारणत्वेन सर्वज्ञत्वसर्वशक्तिमत्त्वयोरसिद्ध्या शास्त्रयोनित्वादित्यत्रोपष्टम्भको हेतुरसिद्ध इति पूर्वपक्षे प्राप्ते मतान्तरीयाणां समाधानसूत्रम्–तत्तु समन्वयादिति । तेषां मते सूत्रार्थस्तु तत्तु ब्रह्मणो वेदान्तोक्तकारणत्वन्तु समन्वयात् सिद्धार्थे योग्यत्वेन सम्यगन्वयात् 'तरति शोकमात्मवित्' 'ज्ञानादेव हि कैवल्यं' 'ब्रह्मैव सन् ब्रह्माप्येती'त्यादौ ब्रह्मणो वेदान्तैकसमधिगम्यत्वेन तत्प्राप्त्यादिक्रियात्वाकमाधनफलादिप्रतिपादकतया पुरुषार्थपर्यवसानेन वेदान्तानां स्वार्थे प्रामाण्याभ्युपगमात् क्रियात्वाकाङ्क्षा तेषां प्रामाण्यार्थमिति समाधानमाहुः ।

केचिदत्र शास्त्रयोनित्वपूर्वपक्षनिराकरणाय तत्तु समन्वयादिति योजयन्ति । तत्पूर्व-

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

एवं समन्वयसूत्रं सोपपत्तिकं व्याख्याय तत्र विनिगमनार्थं मतान्तरीयं व्याख्यानमनूद्य दूषयति—केचिदित्यारभ्य 'समन्वयसूत्रं वक्तव्यमि' त्यन्तेन । अथातो ब्रह्मजिज्ञासेति ब्रह्मजिज्ञासां प्रतिज्ञाय किं तदित्याकांक्षायां जन्मादिसूत्रे तल्लक्षणमुक्त्वा सर्वज्ञत्वं सर्वशक्तित्वं च समर्थितं तदेव दृढीकर्तुं पुनः शास्त्रयोनित्वादिति प्रयुक्तवान् । शास्त्रस्य ऋग्वेदादिलक्षणस्य योनिः कारणम् । शास्त्रे वा योनिः कारणमिति प्रतिपादितमिति शेषः । तथा च शास्त्रप्रमाणकत्वात्सर्वज्ञत्वं सर्वशक्तित्वं च दृढीकृतमित्यर्थः । ननु शास्त्रस्य तत्प्रतिपादकत्वे सर्वमेतद्भवेत्तदेव तु कथमिव वक्तुं शक्यते । यतः क्रियार्थस्यैवाऽबाधितानधिगतासन्दिग्धार्थप्रतिपादकत्वेन स्वार्थे प्रामाण्यस्य वक्तुं शक्यत्वादक्रियार्थानां स्वार्थेऽप्रामाण्यसम्भवात्तदुपपत्त्यर्थं क्रियासमवायिकर्तृदेवतादिप्रकाशकत्वेन विधिनैकवाक्यतां सम्पाद्य प्रामाण्यस्य पूर्वकाण्डेऽभ्युपगतत्वात्तन्न्यायेन वेदान्तानामपि भूतार्थोपदेशिनामक्रियार्थत्वात्पूर्वकाण्डोक्तकर्मसमवायिकर्तृदेवतादिप्रकाशकत्वेन स्वप्रकरणगतोपासनाविषयसमर्थकत्वेन वा प्रामाण्यस्योपपत्तेर्न स्वार्थे तद्वक्तुं शक्यमिति कथं शास्त्रप्रमाणकत्वं ब्रह्मणो वक्तुं शक्यमित्यतः शास्त्रयोनित्वादिति स्वरूपाऽसिद्धो हेतुरित्याशङ्कां मनस्यभिसन्धाय तदेव समर्थयितुं सूत्रकारस्तत्तु समन्वयादिति सूत्रं प्रयुक्तवान् । शास्त्रयोनित्वं तु अन्यत्रासिद्धवस्तुप्रतिपादकानां स्वार्थपरत्वाऽभावेऽपि वेदान्तानामक्रियार्थानामपि स्वार्थे सम्यगन्वयस्य वक्तुं शक्यत्वात् । तरति शोकमात्मविदित्यादौ

गोस्वामिश्रीगिरिधरविरचितं विवरणम् ।

ननु समवायिकारणत्वं नाम समवायसम्बन्धाऽवच्छिन्नकारणत्वम् । एवं च समवायस्याऽभेदसम्बन्धातिरिक्तत्वात्सम्बन्धस्य च द्विनिष्ठत्वात्प्रपञ्चब्रह्मणोरभेद इदं न सङ्गच्छत इति चेत् । न । अस्मन्मते समवायस्य समन्वयरूपत्वेनाऽभेदस्वरूपस्यैव वक्तव्यम् । तस्य बहु स्यामितीच्छोत्तरं द्विनिष्ठत्वं संगच्छते । यथा 'हिरण्यं कुण्डलमित्यत्र हिरण्याऽभिन्नं कुण्डलमित्यर्थेऽभेदस्य द्विनिष्ठत्वं तद्वदत्रापि मन्तव्यम् । अत एवोक्तमभियुक्तैः—कार्यरूपेण नानात्वमभेदः कारणात्मना । हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदेति, सर्वमनवद्यम् । अत्र सर्वेषां मतानामनुवादनं खण्डनं च प्रकाशेऽनुसन्धेयम् ।

अत्र सूत्रे रामानुजाचार्यादीनां मतमनूद्य खण्डयन्ति—'केचिदि'त्यादिना 'ब्रह्मणः समवा-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

यात्र तद्विचारविषय इति भावः । अत्र मतान्तरीयपूर्वपक्षसिद्धान्तादर्शावनूद्य, स्वसिद्धांतदार्ढ्याय दूषयितुमुपक्रमन्ते—'केचिदि'त्यादि । अत्र शास्त्रयोनित्वादिति सूत्रे । 'पूर्वपक्षे'ति । दृष्टो हि तस्यार्थः-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ब्रह्मकार्यत्वं नास्ति । ब्रह्मसमन्वयस्य व्यभिचारः साहचर्यनियमाभावः । यत्र यत्रास्तित्वप्रतीतिस्तत्र तत्र ब्रह्मसमन्वय इत्याकारकस्य नियमस्याऽभावो नास्ति । अलीकप्रतीतस्य शुक्तिरजतादेरवास्तवत्वेन लक्ष्यत्वाभावान्नास्तीत्यर्थः । मतान्तरीयं व्याख्यानमनूद्य दूषयन्ति—'केचिदि'त्यादिना ।

भगवदीयश्रीमदिन्द्ररमणप्रणीतः प्रदीपः ।

सोक्तसिद्धान्तं दृढीकर्तुं मतान्तरव्याख्यानान्यनूद्य दूषयितुमाहुः—'केचि'दित्यादि । समन्व-

तिपादकस्य. पूर्वकाण्डस्य समन्वयमाह । अवान्तरवाक्यानां प्रकारशेषत्वात् । नच सर्व-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

'जैमिनिरि'त्यारभ्य 'मूर्खा एवे'त्यन्तेन । पूर्वपक्षस्योत्तरवादिनोऽपी'त्यारभ्य 'सूत्रेण सिद्ध'-मित्यन्तेन सिद्धान्तस्य चासङ्गतत्वप्रदर्शनं भाष्ये ज्ञेयम् । यदुक्तमाम्नायस्य सर्वस्यैव पुरुषार्थत्वेन क्रियार्थत्वादक्रियार्थानां कर्मसमवायिपदार्थप्रकाशनद्वारेण प्रामाण्यस्य पूर्वतन्त्रे सिद्धत्वात्तन्न्यायेनाऽत्रापि वेदान्तानामप्यक्रियार्थानां प्रकरणान्तरोक्तक्रियासमवाय्यर्थप्रतिपादकत्वेन स्वप्रकरणोक्तोपासनार्थत्वेन वा पुरुषार्थपर्यवसायित्वेन प्रामाण्यस्य वक्तव्यत्वात्कथं ब्रह्मणः शास्त्रयोनित्वं सिद्ध्यतीत्युक्तसूत्रं पूर्व-पक्षरचनम् । तन्नोपपद्यते । यतो जैमिनिरथातो धर्मजिज्ञासेति धर्मजिज्ञासां प्रतिज्ञाय द्वितीयेन धर्म-लक्षणमुक्त्वा तत्प्रतिपादके पूर्वकाण्डे तदतिरिक्तपदार्थनिरूपणस्य दृष्टत्वात्कथं तस्य सर्वांशेन तत्प्रति-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

तत्प्रतिपादकस्य धर्मप्रतिपादकस्य । समन्वयं धर्मे प्रतिपाद्यप्रतिपादकभावसम्बन्धम् । अवान्तरवा-क्यानां ह्यर्थवादमन्त्रादिरूपाणाम् । 'प्रकारशेषत्वादि'ति । धर्मप्रकाराङ्गत्वादित्यर्थः । तथा च धर्मे प्रकारीभूतं यत्कर्मस्तवनं, तत्प्रकाशकानामर्थवादवाक्यानामथ च धर्मे प्रकारीभूतं यद्द्रव्यदेवतादि, तत्प्रकाशकानां मन्त्रादीनां च धर्माङ्गत्वमेवेति सर्वस्य पूर्वकाण्डस्य धर्म एव समन्वय इति भावः । शङ्कते-'नचे'ति । नहीत्यर्थः ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

जनम् । तामेवाऽसङ्गतिं दर्शयन्ति-'तथाही'त्यादिना । 'पूर्वकाण्ड'स्येति । अत्र धर्म इति शेषः । 'अ-वान्तरे'ति । स्वप्रकरणगतानामक्रियार्थानामपि मन्त्रार्थवादादीनां प्रकारेतिकर्तव्यताताच्छेषत्वद्रव्यदेव-तादिप्रकाशनद्वारा । अतः पूर्वस्य सर्वस्याऽपि धर्म एव सम्बन्धः । ननु वायुर्वा इत्याद्यर्थवादवत्कर्तृस्त-रूपोपासनोपास्यप्रतिपादकतयोत्तरस्याऽपि धर्म एव समन्वय इति सर्वस्याऽप्याम्नायस्य क्रियापरत्वम-क्षुण्णमेवेत्यत आहुः—'न चे'ति । अत्र यतस्तथा स्यादिति शेषः । अन्यथा वेदार्थजिज्ञासेत्येवमेवोक्तं स्यात् । तत्र हेतुमप्याहुः— 'यत'इति । अन्यथा जिज्ञासान्तरं न वदेदित्याशयः ।

श्रीकालभट्टकृता गूढार्थदीपिका ।

पादके पूर्वकाण्डे तदतिरिक्तनिरूपणस्य प्रतीयमानत्वात्सर्वांशेन धर्मप्रतिपादकत्वं न सम्भवतीति तदुपपत्तये स्वप्रकरणस्थानामेव सिद्धार्थप्रतिपादकानामवान्तरवाक्यानां प्रयोगविधिशेषत्वेन धर्मे समन्वयमुपपादितवान् । तदाहुः—'अवान्तरवाक्यानामि'त्यादि । अतः पूर्वकाण्डे धर्मप्रतिपादको यो न्यायः स प्रकरणान्तरेणाऽऽपादयितुं शक्यः । प्रकरणान्तरे धर्मेतरस्यैवाऽर्थस्य ब्रह्मणः प्रतिपादित-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

गविधिशेषतया सर्वेषां पूर्वकाण्डीयवाक्यानां कर्मणि समन्वयमाहेत्यर्थः । कथं प्रयोगविधिशेषतया सर्वेषां कर्मणि समन्वय इत्यत आहुः—अवान्तरेत्यादि । अवान्तरवाक्यानां मन्त्रार्थवादरूपवाक्याना-मित्यर्थः । प्रकारशेषत्वात् यज्ञसाधकसाधनसमुदायमध्यपातादित्यर्थः । तथा च पूर्वकाण्डीय-वाक्यानां धर्मे समन्वयप्रतिपादनेनैव धर्मजिज्ञासाया विषयमिद्देदर्शनात्प्राकरणिकवेदान्तवाक्यानां सिद्धार्थप्रतिपादनोपक्षीणानां धर्मे समन्वयाकाङ्क्षागन्धोऽपीति भावः । नन्वाम्नायस्य क्रियार्थत्वा-

पक्षसिद्धान्तयोर्द्वयोरप्यसङ्गतत्वादुपेक्ष्यम्। तथाहि—जैमिनिर्धर्मजिज्ञासामेव प्रतिज्ञाय तत्प्र-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

भूतार्थज्ञानस्यैव पुरुषार्थसाधकत्वस्य प्रतीयमानत्वात्। ब्रह्मणः श्रुत्येकसमधिगम्यत्वेन प्रामाण्यस्याऽपि वक्तुं शक्यत्वाच्च। नाऽपि कर्मसमवायिकर्तृदेवतादिप्रकाशनार्थत्वं स्वप्रकरणगतोपासनार्थत्वं वा वक्तु शक्यम्। एकत्वविज्ञानस्य द्वैतविज्ञाननाशकत्वात्स्वातन्त्र्येण फलसाधकत्वाच्चेत्यादि सिद्धान्तितं कैश्चित्। तत्तु पूर्वपक्षसिद्धान्तयोर्द्वयोरप्यसङ्गतत्वादुपेक्ष्यमित्यर्थः। तदेतदाहुः—'तथा ही'ति।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

अत्र समाधानं समन्वयसूत्रम्। तत्र समन्वय इत्यस्य सम्यक्प्रतिपाद्यतयान्वयः समन्वयः। तथा च सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिवाक्येषु निरतिशयानन्दरूपं ब्रह्मैव प्रतिपाद्यत इति शास्त्रप्रमाणकत्वं ब्रह्मणः सिद्धम्। एवं चैतादृश निरतिशयानन्दरूपब्रह्मप्राप्त्युपायभूतब्रह्मज्ञानप्रतिपादनपरं ब्रह्मविदाप्नोति परमिति वाक्यम्। ब्रह्मज्ञानार्थमात्मानमेव लोकमुपासीतेत्यादिनोपासना विधीयत इति सर्ववेदान्तवाक्यानां मोक्षोपायप्रतिपादकत्वं निरवद्यमिति।

ननु कथं पूर्वपक्षसिद्धान्तयोरसङ्गतत्वमित्यतः प्रथमं पूर्वपक्षासङ्गतिमाहुः—'तथा ही'त्यादिना।

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

कर्मावबोधमिति, आम्नायस्य क्रियार्थत्वादित्यादिसूत्रैः शास्त्रस्य धर्मप्रमाणत्वे सिद्धे कथं शास्त्रप्रमाणकं ब्रह्मेति पूर्वपक्षनिराकरणाय योजयन्ति—सिद्धान्तत्वेनेति शेषः। 'तदि'ति। तत्सूत्रस्य तथायो-

श्रीलालूभट्टकृता गूढार्थदीपिका।

सिद्धवस्तुप्रतिपादकानामपि वेदान्तानां स्वार्थे समन्वयात्। 'तमेव विदित्वा अतिमृत्युमेति तरति शोकमात्मवि'दित्यादौ सिद्धवस्तुज्ञानस्य पुमर्थसाधकताप्रत्ययात्। पुरुषार्थसाधकवाक्यस्य स्वार्थे प्रामाण्याङ्गीकारात्। श्रुत्येकसमधिगम्यस्य ब्रह्मणोऽधिगतार्थत्वाऽभावात् तद्वन्दृणां वेदान्तानां प्रामाण्यस्य भेरीघोषेण सिद्धत्वात्। न चोपनिषदां कर्मसमवायिकर्तृदेवताप्रकाशनार्थत्वम्। न वा स्वप्रकरणगतोपासनार्थत्वम्। अपि तु 'तरति शोकमात्मवि'दित्यादिभिर्ब्रह्मज्ञानस्य स्वातन्त्र्येण फलसाधकत्वात्तन्निरूपकाणामस्ति स्वार्थे प्रामाण्यमिति सिद्धान्तितं कैश्चित्। तत्तु पूर्वपक्षसिद्धान्तयोर्द्वयोरप्यसङ्गतत्वादुपेक्ष्यमित्यर्थः। तदुपपादयन्ति—'तथाही'त्यादिना। यदुक्तमाम्नायस्य सर्वस्य क्रियार्थत्वेन पुरुषार्थसाधकत्वादक्रियार्थानां कर्मसमवायिपदार्थप्रकाशनद्वारा प्रामाण्यस्य पूर्वतन्त्रे सिद्धत्वात्तन्न्यायेनात्राऽप्यक्रियार्थानां वेदान्तानां प्रकारणान्तरोक्तक्रियासमवाय्यर्थनिरूपकतया स्वप्रकरणोक्तोपासनार्थत्वेन वा पुमर्थपर्यवसायित्वेन प्रामाण्याऽभावस्तथासति तदुक्तब्रह्मणो न शास्त्रयोनित्वमित्युत्सूत्रपूर्वपक्षरचनम्। तत्तु न युक्तम्। अक्रियार्थानां स्वार्थे प्रामाण्याऽभावो, विध्येकवाक्यत्वेन प्रामाण्यमित्यादिनिर्णयस्य पूर्वकाण्ड एवाऽङ्गीकारात्। उत्तरकाण्डे तु नायं निर्णय इत्याहुः—'जैमिनिर्हि धर्मजिज्ञासामेवे'त्यादिना। जैमिनिर्धर्मजिज्ञासां प्रतिज्ञाय धर्मलक्षणमुक्त्वा धर्मप्रति-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप।

तद्व्यपन्ति—'तत्पूर्वपक्षे'त्यादिना। वाद्युक्तं पूर्वपक्षसिद्धान्तनिर्वचनम्। उपेक्षाबीजमाहुः—'तथाही'त्यादि। धर्मजिज्ञासामेवेत्येवकारेण ब्रह्मजिज्ञासानिराकरणमुक्तम्। तत् यज्ञादिरूपं कर्म। तथा 'आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानामि'तिसूत्रात्कर्मप्रतिपादकस्य पूर्वकाण्डस्य प्रयो-

तिपादकस्य पूर्वकाण्डस्य समन्वयमाह । अवान्तरवाक्यानां प्रकारशेषत्वात् । नच सर्व-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

'जैमिनिरि'त्यारभ्य 'मूर्खो एवे'त्यन्तेन । पूर्वपक्षस्यो'त्तरवादिनोऽपी'त्यारभ्य 'सूत्रेण सिद्ध'-मित्यन्तेन सिद्धान्तस्य चासङ्गतत्वप्रदर्शनं भाष्ये ज्ञेयम् । यदुक्तमाम्नायस्य सर्वस्यैव पुरुषार्थत्वेन क्रियार्थत्वादक्रियार्थानां कर्मसमवायिपदार्थप्रकाशनद्वारेण प्रामाण्यस्य पूर्वतन्त्रे सिद्धत्वात्तन्न्यायेनाऽत्रापि वेदान्तानामप्यक्रियार्थानां प्रकरणान्तरोक्तक्रियासमवाय्यर्थप्रतिपादकत्वेन स्वप्रकरणोक्तोपासनार्थत्वेन वा पुरुषार्थपर्यवसायित्वेन प्रामाण्यस्य वक्तव्यत्वात्कथं ब्रह्मणः शास्त्रयोनित्वं सिद्ध्यतीत्युक्तं पूर्व-पक्षरचनम् । तन्नोपपद्यते । यतो जैमिनिरथातो धर्मजिज्ञासेति धर्मजिज्ञासां प्रतिज्ञाय द्वितीयेन धर्म-लक्षणमुक्त्वा तत्प्रतिपादके पूर्वकाण्डे तदतिरिक्तपदार्थनिरूपणस्य दृढत्वात्कथं तस्य सर्वांशेन तत्प्रति-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

तत्प्रतिपादकस्य धर्मप्रतिपादकस्य । समन्वयं धर्मे प्रतिपाद्यप्रतिपादकभावसम्बन्धम् । अवान्तरवा-क्यानां ह्यर्थवादमन्त्रादिरूपाणाम् । 'प्रकारशेषत्वादि'ति । धर्मप्रकाराङ्गत्वादित्यर्थः । तथा च धर्मे प्रकारीभूतं यत्कर्मस्तवनं, तत्प्रकाशकानामर्थवादवाक्यानामथ च धर्मे प्रकारीभूतं यद्द्रव्यदेवतादि, तत्प्रकाशकानां मन्त्रादीनां च धर्माङ्गत्वमेवेति सर्वस्य पूर्वकाण्डस्य धर्म एव समन्वय इति भावः । शङ्कते-'नचे'ति । नहीत्यर्थः ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

जनम्'। तामेवाऽसङ्गतिं दर्शयन्ति-'तथाही'त्यादिना । 'पूर्वकाण्ड'स्येति । अत्र धर्म इति शेषः । 'अ-वान्तरे'ति । स्वप्रकरणगतानामक्रियार्थानामपि मन्त्रार्थवादादीनां प्रकारेतिकर्तव्यतातच्छेषत्वद्रव्यदेव-तादिप्रकाशनद्वारा । अतः पूर्वस्य सर्वस्याऽपि धर्म एव समन्वयः । ननु वायुर्वा इत्याद्यर्थवादवत्कर्तृस्स-रूपोपासनोपास्यप्रतिपादकतयोत्तरस्याऽपि धर्म एव समन्वय इति सर्वस्याऽप्याम्नायस्य क्रियापरत्वम-क्षुण्णमेवेत्यत आहुः—'न चे'ति । अत्र यतस्तथा स्यादिति शेषः । अन्यथा वेदार्थजिज्ञासेत्येवमेवोक्तं स्यात् । तत्र हेतुमप्याहुः— 'यत'इति । अन्यथा जिज्ञासान्तरं न वदेदित्याशयः ।

श्रीलालुभट्टकृता गूढार्थदीपिका ।

पादके पूर्वकाण्डे तदतिरिक्तनिरूपणस्य प्रतीयमानत्वात्सर्वांशेन धर्मप्रतिपादकत्वं न सम्भवतीति तदुपपत्तये स्वप्रकरणस्थानामेव सिद्धार्थप्रतिपादकानामवान्तरवाक्यानां प्रयोगविधिशेषत्वेन धर्मे समन्वयमुपपादितवान् । तदाहुः—'अवान्तरवाक्यानामि'त्यादि । अतः पूर्वकाण्डे धर्मप्रतिपादको यो न्यायः स प्रकरणान्तरेणाऽऽपादयितुं शक्यः । प्रकरणान्तरे धर्मेतरस्यैवाऽर्थस्य ब्रह्मणः प्रतिपादित-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

गविधिशेषतया सर्वेषां पूर्वकाण्डीयवाक्यानां कर्मणि समन्वयमाहेत्यर्थः । कथं प्रयोगविधिशेषतया सर्वेषां कर्मणि समन्वय इत्यत आहुः—अवान्तरेत्यादि । अवान्तरवाक्यानां मन्त्रार्थवादरूपवाक्याना-मित्यर्थः । प्रकारशेषत्वात् यज्ञसाधकसाधनसमुदायमध्यपातादित्यर्थः । तथा च पूर्वकाण्डीय-वाक्यानां धर्मे समन्वयप्रतिपादनेनैव धर्मजिज्ञासाया विषयसिद्धेर्दर्शनात्प्राकरणिकवेदान्तवाक्यानां सिद्धार्थप्रतिपादनोपक्षीणानां धर्मे समन्वयाकाङ्क्षागन्धोपीति भावः । नन्वाम्नायस्य क्रियार्थत्वा-

स्मिन् वेदे धर्म एव जिज्ञास्यः। तद्गुरुणैव व्यासेन ब्रह्मजिज्ञासायाः प्रतिज्ञातत्वात्। सन्देहमात्रवारकत्वाज्जिज्ञासयोः। न त्वलौकिकार्थसाधकत्वम्। तथा सति वेदानामन्याधीनत्वेनाऽप्रामाण्यं स्यात्। वेदजिज्ञासेत्येवोक्तं स्यात्। किञ्च—

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

पादकं सम्भवतीति तद्व्युत्पत्त्यर्थं स्वप्रकरणस्थानामेव सिद्धार्थानामवान्तरवाक्यानां प्रयोगविधिशेषत्वेन समन्वयमुपपादितवान्। न चैतावता प्रकरणान्तरे तदापादनं वक्तुं शक्यम्। तत्र भिन्नस्यैवाऽर्थस्य प्रतिपादितत्वेन तन्न्यायस्याऽत्रापादयितुमशक्यत्वात्। ननूत्तरस्मिन्नपि स एवास्ति नार्थान्तरमित्याशंक्याहुः—'न च सर्वस्मिन्नि'ति। तत्र हेतुमाहुः—'यत' इति। जैमिनेः कदाचिद्भ्रमसम्भावनायामपि ततोऽप्यधिकतरविज्ञानस्य तदुपदेष्टुर्व्यासस्य तत्सम्भावयितुमशक्यम्। तथा च तेन सर्वज्ञेन भिन्नतयैव ब्रह्मजिज्ञासायाः प्रतिज्ञातत्वात्तेनैव गतार्थत्वे पृथक्तदुक्तिरनुपपन्ना स्यात्तस्मादत्राऽर्थान्तरमेवेति निश्चीयते।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

उत्तरयन्ति—'तद्गुरुणे'ति। यदि उत्तरकाण्डं धर्मप्रतिपादकं स्यात्तदा व्यासो ब्रह्मविचारप्रतिज्ञां न कुर्यादित्यर्थः। 'सन्देहे'ति। मन्दमध्यमयोरित्यादि। 'जिज्ञासयो'रिति। धर्मब्रह्मजिज्ञासयोरित्यर्थः। 'अलौकिकार्थे'ति। धर्मब्रह्मप्रमितिसाधकत्वमित्यर्थः। 'तथा सती'ति। धर्मे-ब्रह्मणि च वेदस्य प्रामाण्ये मीमांसाधीने सतीत्यर्थः। ननु कर्मणामग्निहोत्रादिरूपाणां

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

नन्वेवं पूर्वोत्तरकाण्डयोरेव पार्थक्येन तदुभयप्रतिपादकत्वे जिज्ञासाद्वयवैयर्थ्यम्। यदि च पूर्वोत्तरमीमांसयोरेव धर्मब्रह्मरूपाऽऽलौकिकाऽर्थसाधकता तर्हि वैशेषिकादिवत्स्वतन्त्रतया वैदिकाऽनादरणीयत्वं स्यादित्यत आहुः—'सन्देहे'ति। नन्वेवं जिज्ञासासहकृतस्यैव वेदस्याऽलौकिकार्थसाधकत्वे प्रोक्षणावहननादिसंस्कारवदलौकिकार्थसाधकत्वं स्यादिति तन्निवृत्तये मात्रपदम्। तदेवाहुः—

श्रीलालूभट्टकृता गूढार्थदीपिका।

त्वात्। तदेवाऽऽहुः—न च सर्वस्मिन्वेद इत्यादिना। सर्वस्मिन्वेद उत्तरकाण्डेऽपि धर्म एव कुतो न जिज्ञास्य इत्याकाङ्क्षायामाहुः—'तद्गुरुणैव व्यासेने'त्यादि। यद्युत्तरकाण्डेऽपि धर्म एव जिज्ञास्यः स्यात्तदा सर्वज्ञो जैमिनिगुरुर्भगवान् व्यासो ब्रह्मजिज्ञासां न प्रतिजानीत। अतो ज्ञायते सर्वस्मिन्वेदे धर्मो न जिज्ञास्यः। किन्तु पूर्वकाण्डे धर्म उत्तरकाण्डे ब्रह्म- जिज्ञास्यमित्यर्थभेदात् प्रकरणभेदात्पूर्वकाण्डव्यवस्था, नोत्तरकाण्डे नेतव्येति हार्दम्। ननु सर्वस्मिन्वेदे धर्म एव जिज्ञास्यः। मीमांसा तु संस्काररूपत्वाद्व्रीह्यादौ प्रोक्षणवदलौकिकार्थसाधिकेति पृथक्प्रतिज्ञापूर्विका कृतिरित्याशङ्क्य समादधते—सन्देहमात्रवारकत्वाज्जिज्ञासयोर्न त्वलौकिकार्थसाधकत्वमिति। द्वे सम्भव-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

स्सर्वस्मिन्नेव वेदे धर्मो विचारणीय इत्यत आहुः—नचेत्यादि। सर्वस्मिन् उत्तरकाण्डेपि। धर्म एवेत्येवकारेण ब्रह्मविचारनिरासः। नचेत्यत्र हेतुः—तद्गुरुणेत्यादि। तथा च शिष्यस्य कदाचिद्भ्रमोपि सम्भाव्येत नतु तादृशसर्वज्ञगुरोरिति तादृशेन व्यासेन ब्रह्मविचारप्रतिज्ञायाः पृथक्कृतत्वादुत्तरकाण्डस्य ब्रह्मण्येव समन्वयो नतु कर्मणि। उत्तरकाण्डस्यापि कर्मणि समन्वयाङ्गीकारे तु व्यासीयपृथग्जि-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

नन्वु जिज्ञासयोः संस्काररूपत्वेन व्रीह्यादौ प्रोक्षणादिवदलौकिकार्थसाधकत्वात्पार्थक्येन प्रतिज्ञेत्याशंक्य निराकुर्वन्ति—'सन्देहमात्रे'ति । जिज्ञासापदस्य विचारार्थकत्वेऽपि सामान्यरूपत्वेन सन्देहप्रयोजनसूचकत्वेन सन्देहमात्रवारकत्वं तस्य फलम् । तस्य शब्दशेषत्वेन फलान्तरासाधकत्वमिति ज्ञापनाय मात्रपदम् । दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् । विपक्षे बाधकमाहुः—'तथा सती'ति । अलौकिकार्थसाधकत्वे सति तत्संस्कृतस्यैव वेदस्य पुरुषार्थपर्यवसायित्वाद्वनपेक्षत्वलक्षणं प्रामाण्यं व्याहन्येत । एकार्थप्रतिपादकत्वे दूषणान्तरमाहुः—'वेदजिज्ञासे'ति । जिज्ञासासंस्कृतस्यैव तस्य पुरुषार्थत्वात्प्रोक्षणादिवत्सकृत्कृतस्यैतत्साधनत्वाद्वेदजिज्ञासेत्येतावतैव

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

भिन्नत्वात्तत्तद्रूपक्रियापरत्वं वेदस्य कुतो नोच्यत इत्यत आहुः—'वेदे'ति । जैमिनेरिदं यद्यभिप्रेतं स्यात्तदेदं प्रतिज्ञावाक्यं ब्रूयादित्यर्थः । तथा च पूर्वकाण्ड धर्मपरमिति भावः । नन्वाम्नायस्य क्रियार्थत्वादिति जैमिनिसूत्रे प्रवृत्तिरूपक्रियापरविधिवाक्यस्य वेदत्वमुक्तम् । मन्त्रार्थवादानामपि विधिशेषत्वम् । उत्तरकाण्डेऽपि धर्मरूपोपासनाविधिरस्ति । तच्छेषत्वं ब्रह्मप्रतिपादकानां वाक्यानाम् । एवं च सर्वोऽपि वेदः प्रवर्तनारूपक्रियापर इत्यत आहु—'किञ्चे'ति । सर्वस्याऽग्निहोत्रादिकर्मण

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

'न त्वि'ति । विपक्षे बाधकमाहुः—'अन्यथे'ति । अप्रामाण्यं सापेक्षत्वरूप ज्ञेयम् । नापि सर्वस्मिन्नपि वेदे ब्रह्मार्थ इति व्यासाशयः । तथा सति वेदजिज्ञासेत्येव ब्रूयादिति हृदि कृत्वाऽऽहुः—'वेदे'ति । यद्यपि 'सर्वे वेदा यत्पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्य'इतिश्रुत्या स्मृत्या तथा वक्तुं शक्यमेव तथापि पूर्वकाण्डे ब्रह्मण एव धर्मत्वेन प्रतिपाद्यता । न तु तत्त्वेनेति, न सर्वस्य ब्रह्मत्वेन ब्रह्मप्रतिपादकत्वम् । स्मृत्याशयस्तु धर्मो न वस्त्वन्तरं किन्तु ब्रह्मात्मक एवेति । अतःपरं प्रकारान्तरेणाऽपि तयोर्द्वयोरप्यसङ्गतत्वमुपपादयन्ति—'किञ्चे'त्यादि 'न कोपि दोष'इत्यन्तेन । अत्र तन्मते-पूर्वपक्षस्त्वित्थम्—

श्रीलालूभट्टकृता गूढार्थदीपिका ।

त्यदृष्टकल्पनाया अन्याय्यत्वात् । कुतो नालौकिकार्थसाधकत्वमित्याकाङ्क्षायामाहुः—'तथा सती'त्यादि । 'अन्याधीनत्वेने'त्यादि । अन्याधीनत्वेनेति, मीमांसाधीनत्वेनेत्यर्थः । मीमांसाभ्यां संस्कृता एव वेदाः फलदातार इत्यङ्गीकारे वेदानामन्याधीनत्वापत्तावन्यनिरपेक्षं प्रामाण्यं न स्यादित्याशयः । मीमांसायाः संस्कारकत्वाङ्गीकारे दूषणान्तरमाहुः—'वेदजिज्ञासेत्येवोक्तं स्यादि'ति । संस्कारार्थं मीमांसाङ्गीकार एकयैव मीमांसया चारितार्थ्ये । अथातो वेदजिज्ञासेत्येकामेव प्रतिज्ञां कुर्यादित्यर्थः ।

प्रस्थानदीक्षश्रीमद्विठ्ठलरायप्रणीतः प्रदीपः ।

ज्ञासाप्रतिज्ञाया वैयर्थ्यमेव भवेदिति भावः । ननु प्रोक्षणादिसंस्कारसंस्कृतव्रीहीणामिव जिज्ञासापदवाच्यविचारसंस्कृतानां वेदानामलौकिकार्थसाधकत्वमिति संस्कारार्थमेव वेदान्तानां व्यासजिज्ञासा जैमिनिजिज्ञासायाः पूर्वकाण्डसंस्कारार्थत्वादित्यत आहुः—सन्देहमात्रेति । तथा च पूर्वोत्तरजिज्ञासाद्वयस्यापि वेदार्थसन्देहनिरसनमेव प्रयोजनं नतु वेदसंस्कारसम्पादनमपि । इदमेवाहुः—नत्वित्यादिना । तथा अलौकिकार्थसाधकत्वं वेदस्यालौकिकार्थसाधकत्वोपयोगिसंस्कारसम्पादकत्वमित्यर्थः ।

साधनं च फलं चैव सर्वस्याऽऽह श्रुतिः स्फुटम्।
न प्रवर्तयितुं शक्तो तथा चेन्नरको न हि ॥

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

चारितार्थ्ये पार्थक्येन तद्द्वयकरणमनर्थकमेव भवेदित्यर्थः। यदुक्तं प्रवर्तनापराणामेव वाक्यानां पुरुषार्थत्वात्प्रमाकरणत्वाच्चाऽतत्पराणां तदेकवाक्यतया प्रामाण्यमिति तदसङ्गतमित्याहुः—'किं चे'ति। प्रवर्तकत्वे वाक्यानां तथा वक्तुं शक्यम्। नत्वेतदस्ति तदाहुः—'साधनं च फलं चे'ति। ब्रह्मवादाऽतिरिक्तेषु मतेषु शब्दश्रवणाऽनन्तरभाविन्यां प्रवृत्तौ शब्दस्य करणत्वमभ्युपगम्यते। काकतालीयतया पूर्वभावो न हेतुत्वसाधकः। ननु दृश्यते ममेदं ममेदं कार्यमिति ज्ञानानन्तरमेव प्रवृत्तिरिति तज्ज्ञानजनने वाक्यस्यैव हेतुत्वात्कथं न शब्दस्य प्रवर्तकत्वमित्यत आहुः—'साधनं च फलं चे'ति। श्रुतिर्विधिवाक्यं, सर्वस्याऽपि स्वर्गादेर्यागादेश्च,

कैश्चिद्विरचिता वेदान्तचन्द्रिका।

ननु प्रवृत्तिनिवृत्तिप्रयोजनपरत्वाच्छास्त्रप्रमाणकमपि ब्रह्म योऽपहतपाप्मा, सोन्वेष्टव्यः स विजिज्ञासितव्य आत्मावारे द्रष्टव्यः श्रोतव्य इत्यादिप्रतिपत्तिविधिविषयतयैव समर्प्यते शास्त्रेण। वायव्यं श्वेतमालभेतेत्यादिविधिशेषतयैव, वायुर्वै क्षेपिष्ठेत्याद्यर्थवादा अर्थवन्त एवं ज्ञानविधिशेषतयैव सर्वे वेदान्ताः 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादयोऽर्थवन्तो भवेयुः। इतरथा कर्तव्यविध्यननुप्रवेशे वस्तुमात्रकथने, हानोपादानासम्भवात्सप्तद्वीपा वसुमतीतिवाक्यवदानर्थक्यं स्याद्वेदान्तानाम्। यथा स्वर्गादेः साधनमग्निहोत्राद्येवममृतत्वसाधनं ब्रह्मज्ञानमिति। अत्र समाधिप्रकारस्त्वेवम्। कर्मब्रह्मविद्याफलयोर्वैलक्षण्यान्नैवं वक्तुं शक्यम्। तथाहि—मनुष्यत्वादारभ्य ब्रह्मान्तेषु शरीरवाङ्मनोजन्यधर्माधर्मफले शरीरोद्ग्रहणपूर्वके प्रियाप्रियरूपे विषयेन्द्रियसंयोगजन्ये श्रुतिस्मृतिन्यायसिद्धे एव। 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती'तिश्रुतेः। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इतिश्रुत्या प्रियाप्रियस्पर्शनप्रतिषेधान्मोक्षाख्यस्याऽशरीरत्वस्य न चोदनालक्षणधर्मकार्यत्वं वक्तुं शक्यम्। न चाशरीरत्वमेव धर्मकार्यम्। तस्य स्वाभाविकत्वात्। अशरीरं शरीरेष्वनवस्थेष्ववस्थितमितिश्रुतेः। अन्यच्च यदि कर्तव्यशेषत्वेनोपदि-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः।

सति वेदानां संस्काराधीनतया लौकिकार्थबोधकत्वाङ्गीकारे सति। अन्याधीनत्वेन संस्काराधीनप्रमाजनकत्वेन। अप्रामाण्यमितरानधीनप्रमापकत्वरूपानधिगतार्थगन्तृत्वरूपं प्रामाण्यं वेदानां न स्यादिति भावः। जिज्ञासाद्वयस्यापि संस्कारार्थत्वे दूषणमाहुः—'वेदे'त्यादिना। तथा च व्रीह्यादिषु सकृत्संस्कारस्य यथा लौकिकार्थसिद्ध्युपयोगित्वं तथाथातो वेदजिज्ञासेत्येकजिज्ञासयैव पूर्वोत्तरकाण्डयोरलौकिकार्थसाधनोपयोगिसंस्कारसम्भवेन जिज्ञासाद्वयकृतेर्वैयर्थ्यादिति भावः। अथ प्रवर्तकविधिवाक्यानामेव प्रवर्तकत्वं पुरुषार्थोपयोगित्वं प्रमापकत्वं च तदितरवाक्यानां च तदेकवाक्यतयोक्तार्थेषूपयोगित्वमिति सिद्धान्तात्कथं सिद्धार्थप्रतिपादकवेदान्तवाक्यानां स्वातन्त्र्येण प्रामाण्यमित्येतद्दूषयन्ति—'किञ्चे'त्यादिना। साधनं चेत्यादि। सर्वस्य पूर्वकाण्डे कर्मण उत्तरकाण्डे ज्ञानस्येत्यर्थः। तथा चेष्टसाधनताधीसाध्या प्रवृत्तिः फलं च सर्वत्रैवोपपन्नं न कोपि विधेर्विशेष इत्यर्थः। ननु विधेः प्रवर्त-

१ धनचेत्यपिपाठः।

प्रवर्तकस्तु सर्वत्र सर्वात्मा, हरिरेव हि ।
यज्ञ एव हि पूर्वत्र बोध्यते स्वर्गसिद्धये ॥

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

साधन यागादिः, फल स्वर्गादिरिति बोधयति, न तु प्रवर्तयति । तथा सत्यनिष्टसाधने विषभक्षणे युद्धे दुपतने पाषण्डमते, मिथ्यात्वेनाऽसाध्येऽपि मोक्षे च प्रवृत्तिर्न स्यात् । प्रवर्तकत्वे दूषणान्तरमाहुः—'तथा चेदि'ति । प्रवर्तकत्वे शब्दस्य सर्वानिवेष्टसाधनेऽविशेषेण प्रवर्तयेदिति न कस्याऽपि नरको भवेत् । अतो दृष्टादृष्टारिष्टदर्शनान्न प्रवर्तकत्वं शब्दस्य । ननु तर्हि कस्य प्रवर्तकत्वं तत्राहुः—'प्रवर्तकस्तु सर्वत्रे'ति । ननु भगवत्प्रवर्तनायां भगवतो वैषम्यनैर्घृण्यादिदोषप्रसक्तिः । न हि परमकृपालुर्भगवांस्तथा करोतीति तथा न वक्तु शक्यमित्यत आहुः—'सर्वात्मे'ति । ऐतदात्म्यमिदं सर्वं स आत्मेत्यादिभिर्भगवतः सर्वरूपत्वाधयासुख सर्वप्रेरणेऽपि न वैषम्यादिप्रसक्तिः । ननु तर्हि भगवान्स्वात्मानमपि कथमेव प्रेरयति । समतयापि प्रेरणे समर्थस्तत्राहुः—'हरिरि'ति । सर्वासु योनिषु सर्वेषु जीवेषु सुखदुःखयोः समता । पुरुषः स्वप्रमादेव तारतम्य पश्यति । अन्यथा ततो किचित्कृत्स्नैव भवेत् । तथा च राज्यान्ते नरक ध्रुवमित्यादीनि कथ सङ्गतानि भवेयुः । राजदण्डादेरप्यविषयत्वाऽऽपत्तिश्च । फलस्य स्वरूपस च सर्वत्र समत्वेऽखण्डं कृष्णवत्सर्वमित्याद्युपपत्तिर्हिशब्देन द्योत्यते ।

ननु भगवत एव प्रवर्तकत्वेऽर्थवादादीनां वैयर्थ्यमेव भवेदित्यत आहुः—'यज्ञ एव ही'ति ।

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

एव । 'नरके'ति । वेदे प्रवर्तकनिवर्तकवाक्यश्रवणानन्तरं शुभकर्मण्येव प्रवृत्त्या नरको न स्यादित्यर्थः । सर्वत्र काण्डद्वये । 'सर्वात्मे'ति । एष त आत्माऽन्तर्यामीतिश्रुत्या, सर्वान्तर्यामी एष एव साधु कर्म कारयतीतिश्रुत्या, प्रवर्तको हरिरित्यर्थः । 'यज्ञ एवे'ति । सिद्धाव-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

ष्येत, तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत तदा मोक्षस्याऽनित्यताऽऽपत्तिर्धर्मजन्यस्वर्गादिवदेव स्यात् । नित्यश्च मोक्ष इति श्रुतिसिद्धम् । अतोऽनुष्ठेयफलविलक्षण ब्रह्मविद्याफल मोक्षाख्यं नित्यसिद्धमेवेति सिद्धम् । तस्मान्न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्त इति । तत्र पूर्वपक्षस्यैवाऽयुक्तत्वेनाऽसङ्गतत्वात्तदुत्तरस्य त्वसङ्गतत्व सुतरा भवतीतिपूर्वपक्षस्यैवाऽयुक्ततयाऽसङ्गतत्व प्रदर्शयन्ति-'साधनं चेति' । 'सर्वस्ये'ति । साधनस्य फलस्य चेत्यर्थः । तयाच सर्वस्य फलस्य पशुपुत्रादिमोक्षान्तस्य साधन यागज्ञानादिकमाह । सर्वस्य साधनस्य यागज्ञानादेः फल स्वर्गादिमोक्ष चाऽऽहेति सम्बन्धः । अथवा सर्वस्य फलस्य कामितस्य पूर्वोक्तस्यैव साधन पूर्वोक्तमाहेति । फल त्वनूद्योद्देश्यतयैवाऽऽहेत्यर्थः । श्रुतिरग्निहोत्रं जुहुयात्स्वर्गकामो, ब्रह्मविदाप्नोति परमित्यादि । ननु शब्दश्रवणानन्तरमेव प्रवृत्तिदर्शनात्कथ न श्रुते. प्रवर्तकत्वमित्यत आहुः—'तथा चेदि'ति । प्रवर्तकत्वे । हिर्हेतौ । स्यादितिशेषः । ननु श्रुतिमन्तरा कोऽवापरः प्रवर्तक इत्यत आहुः—'प्रवर्त-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

कत्वमेव विशेष इत्यत आहुः—न प्रवर्तयितुमिति । तथा चेत् 'न निषिद्धमाचरे'दित्यादिविधीनां प्रवर्तकत्वे । ननु विधेरप्रवर्तकत्वे कः प्रवर्तक इत्यत आहुः—प्रवर्तकस्त्वित्यादि । ननु हरेः प्रवर्तकत्वे

सिद्ध एव हि सर्वत्र वेदार्थो वेदवादिनाम् ।
मन्त्राणां कर्मणां चैव दर्शनश्रवणाच्छ्रुतौ ॥

गोस्वामिश्रीमन्मुरलीधरविरचिता अणुभाष्यव्याख्या ।

पूर्वतन्त्रे स्वर्गसाधनत्वेन यज्ञ एव बोध्यते । स च यज्ञो वै विष्णुरिति श्रुतेर्भगवद्रूप इति तद्बोधकस्याऽपि सिद्धार्थबोधकत्वमस्तीति का कथाऽर्थवादानां सिद्धार्थबोधकत्वे । नह्यर्थवादानां रोचनार्थत्वेन तत्प्रवर्तकत्वम् । तथा सत्यनाप्तत्वं स्यात् । ननु-सिद्धवस्तुप्रतिपादने निष्प्रयोजनत्वमेव भवेदिति चेत् । न । कर्मसमवायिपदार्थयाथात्म्यज्ञानजननेन सप्रयोजनत्वात् । स्वरूपज्ञानपूर्वकमेव कृतस्य कर्मणः फलसाधकत्वात् । अत एव वायुर्वै क्षेपिष्ठेत्यादिना क्षिप्रकारित्वविशिष्टज्ञानपूर्वकं वषट्कारो विधेय इत्युक्तं भवति । तथा वषट्कारो वै गायत्रियै शिरोच्छिनत्तस्यै रसः परापतत्स पृथिवीं प्राविशत्स खदिरोऽभवदित्यादिना खदिरस्वरूपं तादृशमेव ज्ञात्वा यूपे पशुबन्धनं फलाय नाऽन्यथेति स्वरूपमात्रप्रतिपादकत्वेऽपि न निष्प्रयोजनत्वमिति भावः । तावतैव प्रवर्तकत्वाभ्युपगमे बाढमिति ब्रूमः ।

ननु न कलञ्जं भक्षयेदित्यादौ लिङा भक्षणस्येष्टसाधनत्वाऽबोधनान्न नरकादेरनुपपत्तिः । निषेधस्य प्राप्तिपूर्वकत्वादिति चेत् । न । तस्य रागत एव प्राप्तत्वेन लिङाद्यर्थत्वाऽभावात् । ननु यागो नाम देवतोद्देशेन द्रव्यत्यागात्मिका मानसी क्रिया । तथा च कथं तस्य भगवद्रूपत्वमित्यत आहुः— 'सिद्ध एव ही'ति । कैव कथा यज्ञस्य वेदवादिनां वेदाभिज्ञानां वेदार्थः सर्वोऽपि सिद्ध एवाऽस्ति । सर्वस्य भगवद्रूपत्वात् । ननु प्रत्यक्षतः कृतिसाध्ये कर्मणि कथं सिद्धत्वमित्याशङ्क्य तत्र विनिगमकमाहुः—मन्त्राणामिति । श्रुतौ तत्तदुपाख्यानेषु ऋषीणां मन्त्राणां वैदिकानां कर्मणां च

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

करिष्व'ति । 'सर्वत्रे'ति विहितनिषिद्धयोः । नन्वेवं वैषम्यनैर्घृण्ये स्यातां भगवति । तत्राहुः— 'सर्वात्मे'ति । अत्रोपपादयन्ति—वैषम्यनैर्घृण्येनेति सूत्रे । नन्वेवं विधिवाक्यवैयर्थ्यं तत्राहुः— 'यज्ञ एवे'ति । स्वर्गादिकामनायां यज्ञादिरेवानुष्ठेयस्तत्साधनत्वेनेति बोध्यम् । न तु यागादौ प्रवृत्तिर्वाक्येन सम्पाद्यते । तथा च यागादौ भगवदिच्छाविषयत्वेष्टसाधनत्वबोधनार्थमेव वेदे प्रवृत्तेर्न वेदवैयर्थ्यमिति भावः । इदानीं प्रसङ्गात् पूर्वकाण्डार्थयागादिकर्मणां ब्रह्मात्मकतया नित्यत्वं वदन्तो वेदस्य साध्यार्थपरतां दूषयन्ति—'सिद्ध एवे'त्यादिना । सर्वत्र पूर्वोत्तरकाण्डयोर्वेदार्थे कर्मज्ञाने । वेदवादिनां वेदैकनिष्ठानाम् । तत्र हेतुमाहुः—'मन्त्राणामि'ति । कृतिश्चेति चकारः सिद्धतुल्यत्वमित्य-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

वैषम्यनैर्घृण्ये स्यातामत आहुः—सर्वात्मेति । पूर्वत्र पूर्वकाण्डे । सिद्ध एवेति । तथा च 'यज्ञो वै विष्णु'रितिश्रुतेर्यज्ञस्यैव सिद्धत्वम् । का कथेतरेषाम् ? नन्वेवं चेदर्थवादानां प्राशस्त्यज्ञानसम्पादनद्वारा प्रवर्तकत्वव्याघात इति चेत् । न । अर्थवादैः सिद्धार्थैर्योऽर्थो यस्य स्वरूपमुक्तं तादृक् तत्स्वरूपज्ञानपूर्वककर्मकरण एव फलं नान्यथेति स्वरूपबोधन एवार्थवादानामुपयोगात् । यथा 'वषट्कारो वै गायत्रियै शिरोच्छिनत्तस्यै रसः परापतत् स पृथिवीं प्राविशत् स खदिरो भवदि'त्याद्युक्तखदिरस्वरूपज्ञानपूर्वकं यूपनिर्माणेन पशुनियोजनाद्यनुष्ठान एव यज्ञात् फलमित्येवं नियमात् । सिद्धत्वमेवोपपादयन्ति—'मन्त्राणा'मित्यादिना । मन्त्राणां दर्शनं 'स एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यत्, एतं दीक्षितवादमपश्यत्'इत्यादौ बोध्यम् । तथा

कृतिश्च सिद्धतुल्यत्वं वेदः स्वार्थे च सन्मंतः ॥

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

सर्वत्र दर्शनं श्रूयते । यदि तेषां सिद्धत्वं न स्यात्तदा दर्शनस्य श्रवणं कथमुपपद्येत । तस्मात्साध्यत्वेन प्रतीतावपि न कश्चिद्विरोध इति भावः । ननु तस्य सिद्धत्वे कथं तिङादिभिः कृतिप्रतीतिरत आहुः— 'कृतिश्चे'ति । यागस्य भगवद्रूपत्वात्सिद्धत्वेऽपि ध्यानादिभिर्भगवन्मूर्तेराविर्भाववदाधानादिक्रियाभिस्त- दाविर्भावात्सिद्धस्य घटादेस्तुल्यत्वं कृत्वा ज्ञाप्यते । यत्किञ्चिद्भेदसत्त्व एव तुल्यत्वस्य वक्तव्यत्वात् । निर्गलितमर्थमाहुः—'वेद'इति । सर्वोऽपि वेदो विध्यर्थवादादिरूपः । स्वार्थ एव वाचकत्वेन। सतां दैत्यावेशरहितानां मतः सम्मत इत्यर्थः । कर्मणां ऋषिकर्तृकदर्शनप्रतिपादकान्युपाख्यानानि

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

सिद्ध एवेत्येवकारेण यजेतेति तिङन्ता- यजेत अर्थों यज्ञरूपो विष्णुरेव पूर्वकाण्डे बोध्यत इत्यर्थः । 'मन्त्राणामि'ति । स एतं सकर्णीरः काद्रवेयो मन्त्रमपश्यदिति र्थभावनारूपक्रियाध्यवच्छेदः । श्रुतौ मन्त्राणां अपश्यन्पुरोडाशं कर्मभूत१ सपेतमिति श्रुतौ द्रव्याणां दर्शनश्रवणादित्यर्थः । 'कृतिश्चे'ति । भावनापरपर्याया विधिबोध्याकृतिरित्यर्थः ।

ननु सर्वस्य सिद्धार्थत्वे यज्ञप्रवृत्तिरूपफलबोधकवाक्यानां लिङादिघटितानां निरर्थकत्वमत आहुः—'सिद्धतुल्यत्वमि'ति । सिद्धितुल्यत्वमित्यपपाठः । यजेत स्वर्गकाम इत्यादिवाक्यानां लिङ्बोध्यकृतेरपि यज्ञरूपसिद्धयदर्थसम्पादकत्वेन क्रीडेच्छाव्यापारत्वेन च सार्थकत्वमिति भावः । इदं च सर्वं कृतप्रयत्नापेक्षस्त्विति सूत्रे वक्ष्यते। वेदः वाक्यरूपो वेदः । स्वार्थे शक्त्या लक्षणया वा तत्तद्रूपार्थे । सम्मतः प्रमाणीभूतः । सन्मत इत्यपिपाठः । चकारेणार्थवाक्यानां लक्ष-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

स्याग्रेऽन्वेति। 'सिद्धतुल्यत्वमि'ति । अत्र श्रूयत इति शेषः । तथा च यागविषयिणी कृतिः सिद्धतु- ल्यत्वञ्चोभयमपि श्रूयत इत्यर्थः । ननु सिद्धत्वे कर्मणां जुहुयात्स्वर्गकामो ज्योतिष्टोमेन स्वर्ग- कामो यजेतेत्यादिकृतिश्रवणं विरुध्येतेत्यत आहुः—'श्रुतौ कृतिश्चेत्यादि' । होमयागादिविष- यणी-कृतिर्होमादीनां, सिद्धस्य घटादेस्तुल्यत्वम् । ज्ञापयतीत्यत्र शेषः । तथा च ब्रह्मात्मकत्वेन सिद्ध- स्याऽपि घटादेर्यथा कर्तृकरणव्यापारेणैवाऽऽविर्भावो यथा वा सिद्धस्यैव भगवद्रूपस्याऽपि ध्यानादिभिर- भिव्यक्तिस्तद्वदाधानादिक्रियादिभिरेव भगवद्रूपस्य यागहोमादेरप्याविर्भाव इति । कृतिः कृतिबोधकं

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप. ।

च प्रजापतेरग्निहोत्रादिकर्मणां मन्त्राणां च श्रुतौ दर्शन श्रूयते निरूप्यं चाग्रेऽतः सिद्धत्वमुक्तमन्यथा प्रजापतेर्दर्शनोक्तिरनुपपन्नैव स्यादिति भावः। ननु यज्ञादिकर्मणां सिद्धत्वे विधिवाक्यैर्यज्ञादौ प्रवृत्तिरनु- पपन्ना स्यादत आहुः—कृतिश्चेति । तथा च यथा ध्यानादिक्रियया भगवत्प्राकट्यं तथाधानादिक्रि- यया-यज्ञात्मनो भगवतः प्राकट्यमिति न क्रियागोचरकृतिवैयर्थ्यमिति भावः । सिद्धतुल्यत्वं सिद्ध- घटादितुल्यत्वं, यज्ञस्य कृतिः सम्पादयतीत्यर्थः । निर्गलितसिद्धान्तमाहुः—वेद इति । स्वार्थे वेदघ- टकतत्तत्पदवाच्येर्थे । सन्मतः सतां दैत्यावेशरहितानां मतः प्रमाणत्वेन सम्मत इत्यर्थः । कर्मणां

१ सम्मत इत्यपि पाठ ।

'प्रजापतिरकामयत प्रजायेयेति' 'स एतदग्निहोत्रं मिथुनमपश्यत्' 'प्रजापतिर्यज्ञानसृजताग्निहोत्रञ्चाग्निष्टोमं च पौर्णमासीं चोक्थ्यञ्चामावास्याञ्चातिरात्रञ्च तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोम' इत्यादि । न ह्युपाख्यानानां मिथ्यार्थत्वं बुद्धजन्मनः पुरोक्तं युक्तं वा । तथा सति वेदानामप्रामाण्यमेव स्यात्, मिथ्योपाख्यानप्रतिपादकलोकवत्। तस्मात् पूर्वमीमांसानभिज्ञाः क्रियापरत्वं सर्वस्यापि वेदस्य वदन्तो मूर्खा एव ।

गोस्वामिश्रीमुरलीविरचिता अणुभाष्यव्याख्या ।

दर्शयन्ति-'प्रजापतिरकामयत' इत्यारभ्य 'तावानग्निष्टोम' इत्यन्तम् । ननु विरुद्धार्थप्रतिपादकानां तेषां मिथ्यात्वमेवास्त्वित्यत आहुः—'नही'ति । वेदो हि भगवद्रूपस्तस्य मिथ्यात्वं को वा वदेत् । ननु भगवतैवोक्तं नवमावतारेणेति चेत् । न भगवान्हि सर्वकर्ता । भोक्ता च । तथा चाऽऽसुरव्यामोहनमपि तत्कार्यमेव । एकं भगवतः कार्यमितिन्यायात् । नहि तथोक्तौ भगवतः किञ्चिद्बाधकमस्ति । अभोक्तृत्वात् । तथा च बुद्धजन्मतो नवमावतारप्रादुर्भावात्पुरा केनापि वेदेऽक्षरमात्रस्याऽपि मिथ्यात्वं नोक्तमिति न मिथ्यात्वमस्तीति वक्तव्यम् । ननु यद्यदाचरतीतिन्यायात्तदुक्तौ किं बाधकमिति चेन्नेत्याहुः-'युक्तं वे'ति । भगवतः सर्वसमर्थत्वेन सर्वकर्तृत्वेन च तथाकृतौ न किञ्चिद्बाधकम् ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

णया प्राशस्त्यार्थे प्रमाणीभूतत्वं वेदस्य बोध्यम् । तेन च पूर्वकाण्डे यज्ञे ब्रह्मणि तात्पर्यात् सिद्ध एव हि सर्वत्र वेदार्थ इति सिद्धम् । यस्यां श्रुतौ दर्शनश्रवणं तादृशश्रुतिमाहुः—'प्रजापति'रिति । 'अपश्यदि'ति । सिद्धस्यैव दर्शनं द्वितीयश्रुतौ । 'उदमिमीते'ति । कर्मणः सिद्धत्व एवोन्मानसम्भव इति बोध्यम् ।

पूर्ववदुपाख्यानस्य मिथ्यात्वं खण्डयन्ति—'नही'ति । बुद्धजन्मनः बौद्धावतारस्य । सम्मतमिति शेषः । पुरोक्तं पुराणेष्वसुरव्यामोहार्थं कृतमित्युक्तम् । 'युक्तं वे'ति । नहीति पूर्वेणान्वयः । सिद्धार्थे

श्रीब्रजेशविरचिता वेदान्तचन्द्रिका ।

वाक्यं ज्ञापयतीति वार्थो ज्ञेयः । नन्वेवं प्रत्यक्षविरोधाद्वेदार्थो लक्षणयान्यथा ज्ञेय इत्यत आहुः-'वेद'इति । स्वार्थो मुख्यवृत्त्या प्रतिपाद्योऽर्थः । कर्मणां दर्शनप्रतिपादकानि वाक्यानि प्रदर्शयन्ति-'प्रजापतिरि'त्यादि । ननु दर्शनमात्रेण कर्मणां न सिद्धत्वं सिध्यतीत्यत आहुः-'प्रजापतिर्यज्ञानि'ति । सिद्धस्यैव वस्तुनो मानकरणसम्भवात् । ननूपाख्यानानां सत्यार्थकत्वे वेदार्थस्य सिद्धरूपत्वं सिध्येत्तदेव तु नास्तीति कथं तथेत्याशङ्क्याऽऽहुः-'न ही'ति । विपक्षे बाधकमाहुः-'तथा सती'ति।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

दर्शनप्रतिपादकान्याख्यानानि प्रदर्शयन्ति—'प्रजापति'रित्यादिना । ननु सिद्धार्थप्रतिपादकतया पूर्वकाण्डार्थविरुद्धतयोपाख्यानानां मिथ्यार्थप्रतिपादकत्वेन मिथ्यार्थत्वमेवास्तामतो न वेदस्य सिद्धार्थत्वसिद्धिरत—आहुः—'नही'त्यादि। ननु बुद्धावतारेण भगवतैव वेदार्थस्य मिथ्यात्वमुक्तमत आहुः—बुद्धेत्यादि । पुरोक्तं भगवदतिरिक्तेन केनापि पूर्वं वेदार्थमिथ्यात्वं नोक्तमिति भावः । ननु 'यद्यदाचरति श्रेष्ठ' इतिवाक्याद्स्माभिरपि तथोच्यते इत्यत आहुः—युक्तं वेति । तथा च शिवे गरलस्य ग्रीवाभूषणत्ववदासुरव्यामोहाय भगवतस्तथावचनमपि भूषणमेव पुण्यपापफलभोक्तृत्वाभावात् । जीवानां तु तथाचरणं उभयलोकनाश एव स्यादिति भावः । तथा सति एकांशेऽपि वेदानां मिथ्या-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

स्मरारातेर्गरलग्रैवेयकत्ववत् । नह्येतावता जीवस्य तद्युक्तमिति । सर्वनाशजनकत्वात् । नन्वेकत्र विरुद्धांशस्य दृष्टत्वेन तत्र तथोक्तौ न किञ्चिद्बाधकमित्यत आहुः-'तथा सती'ति। एकत्राऽनाप्तत्वेऽन्यत्र को वा निवारयेत् । तत्र दृष्टांतमाहुः-'मिथ्योपाख्याने'ति । उपसंहरति-'तस्मादि'ति । जैमिनिर्हि कर्मतत्त्वज्ञो व्यासशिष्यः कथमपि न तद्विरुद्धं वक्तुमर्हति । परन्त्वाधुनिकाः पूर्वमीमांसाया जैमिनिकृतायास्तात्पर्योऽनभिज्ञाः सन्तः क्रियापरत्वं साक्षात्परम्परया वा सर्वस्य विध्यर्थवादमन्त्रादिरूपस्य-वेदस्य-वदन्तो बुद्धिहीना एव । सर्वस्यापि वेदस्य तत्तत्स्वरूपमात्रप्रतिपादकत्वात् । तथा

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

उपसंहारमाहुः-'तस्मादि'ति । अयं भावः । क्रिया द्विविधा सिद्धा साध्या च । तत्र नामवाच्या पुरुषाऽनपेक्षा सिद्धावस्थापन्ना क्रिया। यथा पाकपदवाच्या। तिङन्तवाच्या पुरुषापेक्षा क्रिया साध्यावस्थापन्ना । यथा पचतीतिपदवाच्या । उक्तं च वैयाकरणभूषणे—**साध्यत्वेन क्रिया यत्र धातुरूपनिबन्धना । सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः** । लक्षणमपि तत्रैवोक्तम् । क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकत्वं सिद्धत्वम् । क्रियान्तराकाङ्क्षोत्थापकतानवच्छेदकत्वं साध्यत्वम् । एवं च प्रकृते सर्वस्य पूर्वकाण्डस्य सिद्ध एव यज्ञरूपोर्थः । सिद्धस्यैव दर्शनं श्रुतौ प्रतिपादित्वात्[1] । मन्त्राणां कर्मणां च तदङ्गत्वमर्थवादवाक्यानामपि स्तावकत्वेन तदङ्गत्वम् । तथा च पूर्वकाण्डं यज्ञपरमुत्तरकाण्डं च ब्रह्मपरमितिरीत्या पूर्वपक्षाऽसङ्गतिर्बोध्या । पूर्वपक्ष्याशयस्तु सर्वस्य वेदस्य लिङर्थप्रेरणापरत्वं प्रेरकत्वं चेति । उभयत्रापि यजेत आत्मेत्येवोपासीतेति लिङ्घटितवाक्यश्रवणात् । अर्थवादमन्त्रादिवाक्यानां विध्येकवाक्यतया प्रामाण्यम् । एवं च यज्ञ उपासनायां च प्रवृत्तिरूपक्रियाया एव मुख्यतया प्रतिपादकत्वं सर्वस्य, न तु ब्रह्मप्रतिपादकत्वमिति ।

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

तत्र दृष्टान्तः-'मिथ्ये'ति । उपसंहरन्ति-'तस्मादि'ति । यस्माद्धर्मस्यैव जिज्ञास्यतया, तत्प्रतिपादकपूर्वकाण्डसमन्वयस्य सिद्धरूपस्यैव धर्मस्य च जैमिनेरभिप्रेतत्वम् । तस्मात्स्वाचार्यसिद्धान्तविरुद्धवादित्वेन तत्तात्पर्याऽनभिज्ञास्तथा वदन्तस्तथाभूता एव । एतेन पूर्वपक्षाऽसङ्गतिः प्रदर्शिता भवति ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

एतावता क्रियार्थानामेव पुमर्थपर्यवसायित्वेन स्वार्थे प्रामाण्यमक्रियार्थानां विधिशेषतया प्रामाण्यमित्यादिव्यवस्था पूर्वकाण्ड एव नोत्तरकाण्ड इति शास्त्रयोनित्वपूर्वपक्षोऽसङ्गत इत्यर्थः । यदुक्तं प्रवर्तकानामेव वाक्यानां पुमर्थपर्यवसायित्वादर्थ । 'नचैवं किमनेने'त्यादिना । 'अनेन कर्मणा किमुत्कृष्टत्वं ज्ञानिनो,

अथवदीयश्रीमद्विष्णुदासाममणीत प्रदीप ।

यैस्वे वक्तव्ये सति । वेदानां वेदत्वावच्छेदेन वेदानां । लोकवत् कदाचिन्मिथ्यावक्तृत्वेन लोकैः प्रतीतः कश्चित्सर्वदा मिथ्यावादीवायमिति तदुक्तौ न कोपि प्रामाण्यमुरीकरोति तथा भगवदुक्तवेदेप्येकत्राप्रामाण्यनिश्चये सर्वत्रैव तथा स्यादित्यर्थः । सिद्धान्तमुपसंहरन्ति-'तस्मादि'त्यादिना । पूर्वमीमांसानभिज्ञाः व्यासशिष्यतत्त्वविज्जैमिनितात्पर्यानभिज्ञाः । क्रियापरत्वं कर्मविधायकवाक्यैर्यथाकथञ्चिदेकवाक्यतया सर्वस्य वेदस्य प्रामाण्यम् ।

१—इत प्रभृति पत्रद्वयात्मको भावत्रुटित । पुस्तक नैकमेव लिखितम् । तच्च भट्टश्रीबलभद्रशर्मणां सम्पदागे निरतिशयप्रीतिभाजाम् । अन्यैस्तु सम्प्रदायनामधारिभिरपि शोधनकर्मणि पुस्तकदानमात्रेणाऽपि नोपकृतम् । हन्त ! ! !

उत्तरवादिनोपि पूर्वाज्ञानमङ्गीकृत्य पूर्वानुपयोगित्वं ब्रह्मज्ञानस्य वदन्तो वेदानभिज्ञाः । 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवती'त्युपनिषज्ज्ञानस्य श्रुतिसिद्धैव कारणता । नच बाधितत्वात् त्यज्यत इति वाच्यम् । ब्रह्मात्मज्ञानवत एव

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

च तन्न्यायेन वेदान्तानामपि क्रियापरत्वं समर्थ्य ब्रह्मणः शास्त्रप्रमाणकत्वं कथं वक्तुं शक्यमिति पूर्वपक्षोऽप्यसङ्गत एवेत्यर्थः । अधुना सिद्धान्तस्याप्यसङ्गतत्वं प्रतिपादयन्ति—'उत्तरवादिनोपी'ति । उत्तरस्मिन्ब्रह्मकाण्डे ये वादिनो वादमात्रकर्तारो न तु तत्तात्पर्याभिज्ञास्तेऽपि ब्रह्मज्ञानस्य पूर्वस्मिन्कर्मण्यनुपयोगित्वं वदन्ति । ज्ञानदशायां द्वैतविज्ञानस्योन्मथितत्वेन सकलक्रियाकारकावकाशस्य वक्तुमशक्यत्वात् । ते हि न केवलमुत्तरतात्पर्याऽनभिज्ञाः, किन्तु सर्वस्यापि वेदस्याऽनभिज्ञा इत्यर्थः । तत्र हेतुमाहुः—'यदेवे'ति । तथाच नास्ति वचनस्याऽतिभार इति कथं तन्नेति वक्तुं शक्यमिति भावः । ननूक्तमेकत्वविज्ञानेन द्वैतविज्ञानोन्मथनात्कथं क्रियाकारकावकाश इत्यत आहुः—'नचे'ति ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

प्रकृतमनुसरामः—एताद्यपूर्वपक्षाशयं स्वीकृत्यैव यैः सिद्धान्तितं तदसङ्गतिमाहुः—'उत्तरे'ति । 'पूर्वानुपयोगित्वमि'ति । यज्ञानुपयोगित्वमित्यर्थः । 'ब्रह्मज्ञानस्य वदन्त' इति । वेदान्तभागस्य धर्मप्रतिपादकत्वमस्तु वा मा वा, परन्तु ततः शुद्धबुद्धमुक्तस्वभावब्रह्मात्मावगतौ सत्यामविद्याजनितक्लेशनिवृत्तौ तस्य सार्थक्यमिति वदन्त इत्यर्थः । छान्दोग्यश्रुत्युपपादनेन वेदानभिज्ञत्वं साधयन्ति—'यदेवे'त्यादि 'प्रवृत्तिरि'त्यन्तम् । कारणता सहकारिकारणता । उपनिषदर्थज्ञानेनाविद्यानिवृत्तौ यज्ञे प्रवृत्त्यभावात्सहकारिकारणताया बाध इत्याशयेनाऽऽशङ्कते—'न चे'ति । उत्तरयन्ति-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

इदानीं स्वतत्कृतसिद्धान्ताऽसङ्गतिं प्रदर्शयन्ति—'उत्तरवादिन' इति । उत्तरमीमांसायां वादकर्तारः । 'पूर्वाज्ञानमि'ति । पूर्वस्मिन् कर्माधिकारे । अज्ञानं ज्ञानाभावम् । अत्र हेतुत्वेनेति शेषः । 'पूर्वे'ति । पूर्वस्मिन् कर्मणि । 'वेदे'ति । पूर्वोत्तरकाण्डयोस्तात्पर्याज्ञानात्तथेत्यर्थः । अत्र हेतुमाहुः—'यदेवे'ति । 'सिद्धैवे'ति । एवकारेण ज्ञानस्य कर्मण्यपि हेतुत्वाऽङ्गीकारेऽन्योन्याश्रयप्रसक्तिभियाऽकारणत्वक-

श्रीलालुभट्टकृता गूढार्थदीपिका ।

न किमपीत्यर्थः । समाधिमाहुः—इत्थंभूतत्वाच्चज्ञस्येति । यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवतीति श्रुतेर्ज्ञात्वाज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति । विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेदिति श्रीभागवतवाक्याच्च वीर्यवत्तरत्वादिरूपोत्कृष्टत्वं ज्ञानसहितकर्मण इति भावः । ननु कर्मणः स्वर्गादिरूपपशुपुत्रादिरूप-

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

उत्तरवादिन इति । ब्रह्मकाण्डे वादिन एव न तु तत्त्वविद इत्यर्थः । पूर्वाज्ञानमिति कर्मस्वरूपाज्ञानमङ्गीकृत्येत्यर्थः । पूर्वानुपेत्यादि । कर्मानुपयोगित्वमित्यर्थः । वेदानभिज्ञा इति । ते हि न केवलमुत्तरकाण्डार्थानभिज्ञाः किन्तु सर्वस्यैव वेदस्यानभिज्ञा इत्यर्थः । वेदार्थाज्ञाने हेतुमाहुः—'यदेवे'त्यादिना । कारणता कर्मानुष्ठाने कारणता । बाधितत्वात् ब्रह्मज्ञानवतां देहाद्यध्यासाभावेन कर्मानुष्ठानस्य बाधितत्वात् । त्यज्यते कर्माधिकारित्वं ब्रह्मज्ञेषु नोरीक्रियत इत्यर्थः । न च वाच्यमित्युक्तं तत्र हेतुमाहुः—'ब्रह्मात्मे'त्यादि । ब्रह्मात्मज्ञानवतः स्वात्मनि ब्रह्माभेदज्ञानवतः । न

वसिष्ठादेर्यज्ञाधिकारात् । नचैवं किमनेनेति वाच्यम् । इत्थम्भूतत्वात् यज्ञस्य । किञ्च, कर्मफलवत् ब्रह्मफलस्यापि लौकिकत्वात् । 'य एवं वेद प्रतितिष्ठति अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्येति' । अत्यन्ताविद्यावतो यज्ञानधिकाराच्चन्नि-

गोस्वामिश्रीपुरुषोत्तमविरचिता अणुभाष्यव्याख्या ।

तत्र हेतुमाहुः—'ब्रह्मज्ञानवत एवे'ति । आदिपदेन जनकादयोऽपि संगृह्यन्ते । ननु ब्रह्मज्ञानवतः कर्माधिकारेण तत्कृतौ कर्मणि कथमुत्कर्षाऽऽधायकत्वमित्यत आहुः—न चैवमिति । तत्र हेतुमाहुः—'इत्थमि'ति । यथा ब्रह्म तथा यज्ञोऽपि भगवद्रूपत्वादितिज्ञापनार्थं परस्परोपयोगित्वेन तथादर्शनमिति भावः । ननु तमेव विदित्वेत्यादिभिर्ब्रह्मज्ञानस्याऽमृतत्वमेव फलम् । कर्मणस्तु स्वर्गादिकमिति कथं तुल्यत्वमित्यत आहुः—'किञ्च कर्मफलवदि'ति । न हि कर्मणो लौकिकमेव फलम् । ज्ञानिकृतस्य तस्य देवयानमार्गेण मुक्तिफलकत्वात् । निष्कामकृतस्याऽऽत्मानन्दसाधकत्वाच्च । तस्य भगवद्रूपत्वात्सर्वसामर्थ्यवत्त्वेन फलमत उपपत्तेरिति न्यायेन च सर्वफलदातृत्वमिति ज्ञापनार्थं लौकिकमपि फलं दर्शितम् । तथा ब्रह्मज्ञानस्याऽपि-य एवं वेदेत्यादौ लौकिकफलसाधकत्वोक्तेर्दृश्यमानत्वेन न साम्याऽनुपपत्तिरित्यर्थः ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

ब्रह्मेति । शङ्कते-न चेति । किमनेनेति । ब्रह्मज्ञानेनैव सर्वसिद्धौ यज्ञकरणरूपाग्रहेण किमित्यर्थः । उत्तरयन्ति-इत्थंभूतत्वादिति । 'यज्ञो वै विष्णुरि'ति श्रुत्या विष्णुरूपयज्ञस्येत्थंभूतत्वं नाम एतादृश-

कैश्चिद्विरचिता वेदान्तचन्द्रिका ।

ल्पनापक्षः परिहृतो वेदितव्यः । अत्र कारणतापदं ज्ञानं सहकारिकारणताबोधकम् । अत्र श्रुतौ विद्यापदेनाऽऽत्मनि भिदाबाधकं ज्ञानम् । श्रद्धापदेन वेदोक्ता आस्तिक्यबुद्धिः । उपनिषत्पदेन परमात्मस्वरूपविषयकरहस्यज्ञानम् । वीर्यवत्तरमनश्वरफलदम् । तत्कर्म भवतीत्यर्थः । ननु ज्ञानस्य कर्मवृत्तिकारणीभूतार्थित्व

श्रीलालूभट्टकृता गूढार्थदीपिका ।

फलस्य श्रूयमाणत्वात्तुच्छफले कर्मणि ज्ञानसाहित्यमयुक्तमित्याशङ्क्य ज्ञानस्याऽपि तुच्छफलजनकत्वप्रदर्शनेन कर्मणि ज्ञानानुपकारकतां खण्डयन्ति—'कर्मवद्ब्रह्मफलस्यापी'त्यादिना । नहि हीनफलदानमात्रेण कर्मणां हीनत्वं भवति । तथा सति हीनफलदातृत्वस्य ज्ञानेऽपि सत्त्वाज्ज्ञानस्याऽपि तथात्वाऽऽपात इत्यत आहुः—'ब्रह्मफलस्याऽपि लौकिकत्वादि'ति । ब्रह्मज्ञानफलस्येत्यर्थः ।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

चेत्यादि । किमनेन मोक्षफलकसिद्धब्रह्मात्मज्ञानमतो यज्ञादिकरणेन किं फलं आधिक्यमित्यर्थः । तत्र हेतुमाहुः—इत्थमित्यादि । यज्ञस्य इत्थम्भूतत्वात् 'सर्वापेक्षा च यज्ञादिश्रुते'रितिसूत्रात्फलप्रतिबन्धकयज्ञादिकरणप्रारब्धसमापनद्वारा यज्ञादेरपि मोक्षाधिकारसम्पादकत्वेन व्यासाभिप्रेतत्वादित्यर्थः । ननु मुमुक्षूणां यज्ञा नावश्यकाः कर्मफलस्य मनुष्यादिब्रह्मान्तेषु लौकिकस्यैव परमानन्दात्मकस्य श्रवणादित्यत आहुः—किञ्च कर्मेत्यादि । ब्रह्मफलस्य ब्रह्मज्ञानफलस्य । अत्यन्तेत्यादि । अत्यन्ता-

१—एतावद्भागोऽस्माभिर्लब्धः ।

**पेधार्थं ज्ञानमुपयुज्यते । नच देहाध्यासस्य कारणत्वम् । 'ब्रह्मार्पणं ब्रह्महवि'रित्यादिस्मृतेः ।**

**तस्मादन्योन्योपयोगित्वे न कोपि दोषः । क्रियाज्ञानयोः स्वातन्त्र्येण पुरुषार्थसिद्ध्यर्थं भिन्नतया शास्त्रप्रवृत्तिः ।**

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

ननु ब्रह्मज्ञानस्य केन प्रकारेण कर्मोपयोगित्वमित्यत आहुः—'अत्यन्ते'ति । यद्यप्यविद्यावद्विषयाण्येव शास्त्राणि तथाप्यत्यन्ताविद्यावतो यज्ञाधिकारो नास्ति । तस्य देह एवाऽऽत्मा । न तदतिरिक्तोऽभिमानी । तथा च देहे गते कस्येद पारलौकिक फलमात्मनो नष्टत्वाददृष्टत्वाच्चास्तीति निश्चयोऽपि न वक्तु शक्यत इतिज्ञानवतः कुत्र यज्ञेष्वधिकारः । तस्माद्वेदान्तैरापाततो देहाऽतिरिक्तात्माऽस्तित्वे प्रतीते यज्ञाधिकारसम्भवात्तज्ज्ञानमत्रोपयुज्यत इत्यर्थः । ननु वेदान्तैः सघातद्भिन्नत्वेनाऽऽत्मप्रतीतावध्यासस्य निवृत्तत्वात्कथ कर्मकरणमित्यत आहु —'न चे'ति । तत्र हेतुः—'ब्रह्मार्पणमि'ति । यद्यपि प्रजायेयेत्यादिना, वाचारम्भण विकार इत्यादिना च वेदान्ताना द्वैधाबोधनप्रकारस्य दृष्टत्वाज्ञानात्मप्रतीतावपि ब्रह्मावगते॰॰ सम्भवात्कर्मकृतावप्यनुपपत्त्यभावः प्रत्यक्षत एव श्रुतिसिद्धोऽस्ति । तथाप्यधिकं तत्रानुप्रविष्टमित्यनुसन्धाय स्मृत्युपन्यास इति ज्ञेयम् । उपसहरन्ति—'तस्मादि'ति । नन्वेतयोः पुरुषार्थपर्यवसायित्वेन तुल्यत्वे 'अथातो धर्मब्रह्मजिज्ञासे'ति प्रतिज्ञाय

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

ब्रह्मज्ञानवता क्रियमाणे यज्ञे आविर्भावित्वम् । तथैव पुराणेषु श्रूयत इति भावः । ननु श्रुतौ कर्मफलश्रवणात् लौकिकफलमुद्दिश्य कर्मणि प्रवृत्तिर्ब्रह्मज्ञस्यानुचितेत्यत आह—किञ्चेति । ब्रह्मफलस्यापि ब्रह्मज्ञानफलस्यापीत्यर्थः । अत्र श्रुतिसम्मतमाहुः—'य एवं वेदे'ति । भृगुप्रपाठकस्थेय श्रुतिः । इदानीं देहाध्यासवतः पुरुषस्य यज्ञाधिकारत्व खण्डयन्ति—अत्यन्तेति । न चेति । न हीत्यर्थः । ब्रह्मार्पणमिति । तथाच 'परे चास्मि सन्यज'इति श्रुतिप्रामाण्यादपि अध्यासस्य कारणता नास्तीत्यपि मन्तव्यम् ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

'लौकिकत्वादि'ति । य एवं वेद प्रतितिष्ठति अन्नवानिति लौकिकफलश्रवणादित्यर्थः । ननु कर्मत्वेन देहाध्यासत्वेन कार्यकारणभावाज्ज्ञाने देहाध्यासस्य नाशात्कथ ज्ञानिनः॰॰ कर्मप्रसक्तिरित्याशङ्क्य समादधते—'न च देहाध्यासस्ये'त्यादिना । देहाध्यासस्य यज्ञ प्रति कारणत्व नास्ति । व्यतिरेकव्यभिचारादित्यर्थः । व्यतिरेकव्यभिचार प्रदर्शयन्ति—'ब्रह्मार्पणं ब्रह्महविरि'त्यादि । 'स्मृतेरि'ति । अर्प्यते हविर्भिः क्षिप्यते येन तत् अर्पण स्रुवादि, तत् ब्रह्म । हविर्हूयमान द्रव्य घृतादि, तदपि ब्रह्म । होमाधिकरणभूतोऽग्निरपि । ब्रह्मणा ब्रह्मरूपेण यजमानेन । यजमानोऽपि

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप ।

विद्यावतो देहस्यैवात्मत्वेन निर्णयात् यज्ञादिफलस्य च देहोत्तरकालीनत्वेन श्रवणात्कस्य फल भविष्यतीति बुद्ध्वा तादृशस्य यज्ञाद्यनुपेक्षासम्भवेनानधिकारादित्यर्थः । तन्निषेधार्थं अत्यन्ताविद्यावतो यज्ञाद्यधिकारनिषेधार्थम् । कारणत्वं यज्ञादौ कारणत्वम् । ब्रह्मार्पणमित्यादि । तथा च कर्तृकर्मादिसर्वेषामप्युपस्करे ब्रह्मत्वेन ज्ञानादेव ब्रह्मात्मफलस्योक्तत्वात् नाध्यासस्य कर्मणि तत्फले वा कारणतेति भावः ।

सिद्धान्तमुपसहरन्ति—तस्मादिति । तथा च ब्रह्मज्ञानस्य देहात्ममतिनिरासकतया यज्ञादौ यज्ञानां चान्त करणशुद्धिद्वारा प्रारब्धक्षयापादनद्वारा वा ब्रह्मविद्यायामुपयोगे न कोपि दोष इति फलितम् ।

किञ्च, वेदान्तवाक्यानामस्मिञ्छास्त्रे समन्वय एव प्रतिपाद्यते सन्देहनिराकरणद्वारा ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

शास्त्रारम्भस्योचितत्वात्कथं भिन्नतया प्रतिज्ञापूर्वकं तत्प्रवृत्तिरित्यत आहुः—'क्रियाज्ञानयोरि'ति । स्वरूपज्ञानपूर्वकं कृतस्य कर्मणोऽसम्भावनाविपरीतभावनानिवर्तकात्मज्ञानस्य चान्योन्यनैरपेक्ष्येणाऽपि पुरुषार्थत्वमस्ति, समत्वादिति ज्ञापनार्थं भिन्नतया तत्करणमित्यर्थः । यदुक्तं—वेदान्तवाक्यानि तात्पर्येणैतस्यैवाऽर्थस्य प्रतिपादकत्वेन सम्यगनुगतानीति समन्वयस्य सत्त्वाच्छास्त्रयोनित्वं ब्रह्मणः कथमिव नेति वक्तुं शक्यमिति तत्राहुः—'किञ्चे'ति । सिद्धवद्धेतुत्वेन निर्देशात्समन्वयोऽनेनैव सिद्धश्चेदस्मिञ्छास्त्रेसमन्वयप्रतिपादके सन्देहनिराकरणपूर्वकं समन्वयप्रतिपादनं व्यर्थमेव स्यात् ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

शाङ्करमतेऽप्यन्योन्योपयोगित्वं स्वीकर्तव्यमित्युपसंहरन्ति—तस्मादिति । ननु परस्पराकाङ्क्षत्वेनैकवा-क्यत्वादेकशास्त्रत्वमेव स्यादित्यत आह—क्रियेति । स्वातन्त्र्येणेति । धर्मार्थकामरूपे त्रिवर्गे साधनीय

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ब्रह्मैव । हुतं होमोऽपि ब्रह्म । तेन प्राप्तव्य फलमपि ब्रह्मैव । इत्थ ज्ञानवता निरध्यस्तेनापि यज्ञकर-णादध्यासाभावेऽपि यज्ञसत्त्वान्नाध्यासस्य यज्ञं प्रति कारणतेत्यर्थः । नन्वन्योन्योपकारकत्व एकयैव मीमांसया कुतो न चारितार्थ्यमित्याकाङ्क्षायामाहुः—'क्रियाज्ञानयोरि'त्यादिना । पूर्वकाण्डप्रति-पाद्यायाः क्रियाया, उत्तरकाण्डप्रतिपाद्यस्य ज्ञानस्याऽन्योन्यसाहाय्यं विनापि पुरुषार्थसाधकता वर्तत इति सूचनाय भिन्नतया मीमांसाद्वयप्रवृत्तिरित्यर्थः । शास्त्रयोनित्वपूर्वपक्षनिराकरणाय समन्वयादिति हेतुरुप-यस्तस्तं दूषयन्ति—'किञ्च वेदान्तवाक्यानामि'त्यादिना । समन्वयरूपस्य हेतोः साधनाय व्यासचरणानां प्रवृत्तिः । हेतोः साम्प्रतमसिद्धत्वादसिद्धहेतुना न साध्यसिद्धिरिति भावः । सिद्धव-

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीप ।

नन्वेवं पूर्वोत्तरकाण्डयोरेकैकेन फले सम्पादनीये तदन्यस्य सहकारिकारणताकल्पन एकशास्त्रत्वमेव स्यान्न तु पूर्वोत्तरमीमांसेतिशास्त्रद्वयमित्यत आहुः—क्रियेत्यादि । स्वातन्त्र्येणेति । निष्कामकर्मानुष्ठानेन मोक्षः सकामस्य च त्रिवर्ग एव फलं निष्कामज्ञानिनो मोक्षः सकामस्य तु प्रजापश्वादिरूपमेव फलमिति तत्र काम्यफले परस्परस्योपयोगाभावो यतोतः स्वातन्त्र्येणेत्यर्थः । पुरुषार्थसिद्ध्यर्थं त्रैवर्गिकपुरुषार्थ-सिद्ध्यर्थम् । इत्थं च तादृशफल उभयोः स्वातन्त्र्यान्नैकशास्त्रतागन्धोपीति भावः ।

एव पूर्वोक्तग्रन्थेनेतरेषां वेदानभिज्ञत्वं प्रतिपाद्य सूत्रार्थानभिज्ञत्व प्रदर्शयितुमाहुः—किञ्च वेदान्तेत्यादि । अत्र शङ्कराचार्यैः सर्वज्ञसर्वशक्तिमदुत्पत्त्यादित्रितयकर्तृ ब्रह्मेति वेदान्तैरवगम्यत इति प्रतिज्ञाय समन्वयादितिहेतुस्तत्रोक्तः । समन्वयश्च सर्ववेदान्तवाक्याना तात्पर्यकल्पनया सृष्ट्यादिकर्तृ-त्वलाभेन । तत्र ब्रह्मपक्षक सृष्ट्यादित्रितयकर्तृत्वसाध्यकं नानावेदान्तवाक्यसमन्वयहेतुकमनुमानं केवलव्यतिरेकि तेषामभिमतम् । एव मतान्तरेपि रामानुजादीनां बोध्यम् । इद च तेषां निरूपणं, पूर्व-मीमांसकैः सर्ववेदान्तवाक्यानां कर्मविध्यपेक्षितब्रह्मस्वरूपदेवतासमर्पकत्वेन कर्मविध्येकवाक्यतया प्रामा-ण्यमुपासनादिविधिशेषतया वा प्रामाण्यमिति पूर्वपक्षितं तत्समाधानाय समन्वयादिति हेतुरुपन्यस्तः सोनुचिततर इति सूत्राज्ञानं बोद्धव्यम् । अनौचित्यमेवोपपादयन्ति—'अस्मिन्नि'त्यादिना । व्यास-सूत्ररूपे शास्त्रे । समन्वय एव कर्तृत्वभोक्तृत्वप्रतिपादकवेदान्तानां ब्रह्मणि समन्वय एव । सन्देहेति

तत्कथं सिद्धवद्धेतुत्वेन निर्देशः । अग्रिमवैयर्थ्यं च स्यात् । नच प्रतिज्ञागर्भितहेतुत्वम् । अनुपयोगात् । गौणमुख्यभावे परं विवादः । नच येन रूपेण समन्वयो मतान्तरस्थैर्वि-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

दूषणान्तरमाहुः—'अग्रिमे'ति । अग्रिमस्य विरोधनिराकरणस्य समन्वयार्थत्वात्तस्य पूर्वमेव तत्सिद्धौ तद्वैयर्थ्यं दुष्परिहरमेव भवेत् ।

ननु यथा ब्रह्मजिज्ञासेति प्रतिज्ञाय ततस्तस्यैव प्रपञ्चः सर्वस्मिन्नपि शास्त्रे, तथेदमपि समन्वयप्रतिज्ञाप्रतिपादकमिति कुतो वैयर्थ्यमित्याशंक्य निराकुर्वन्ति—'न चे'ति । तत्र हेतुमाहुः—'अनुपयोगादि'ति । समन्वयादीनां चतुर्णां विचारस्य ब्रह्मजिज्ञासाऽनतिरिक्तत्वात्तत्प्रतिज्ञैव चारितार्थ्ये भिन्नतया तस्या अनुपयोगात् । तस्मात्कर्मब्रह्मणोः परस्परोपयोगित्वादेकरूपत्वाच्च न सिद्धान्तस्याऽपि सङ्गतत्वमिति निर्विवादमेव सर्वं पूर्वोक्तम् । उपादानत्वेऽभ्युपगम्यमाने विवादस्थलं प्रदर्शयन्ति—

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

उभयोः स्वातन्त्र्येणेत्यर्थः । इतःपरं सर्वेषां मते सूत्रानभिज्ञत्वमाहुः—किंचेति । सिद्धवद्धेतुत्वेनेति । शङ्कराचार्यैरुत्पत्त्यादित्रयकारणीभूतं ब्रह्म पक्षीकृत्य वेदान्तशास्त्रगम्यत्वं साध्यते । समन्वयादिति हेतुः । तत्र सर्वेषां वेदान्तवाक्यानां ब्रह्मणि तात्पर्यात्समनुगतत्वादिति हेतुवाक्यार्थः । तत्रैवं विचार्यते । सकलशास्त्रसमाप्त्यनन्तरं सन्देहनिराकरणद्वारा सर्वेषां वेदान्तवाक्यानां ब्रह्मणि समन्वयः सिद्धो भविष्यति । आदौ तु तस्यासिद्धत्वात् सिद्धत्वेन हेतुनिर्देशः कथमिति । इदंच्च सर्वेषां मत एतादृशहेतुनिर्देशस्य सत्वाद्दूषणं बोध्यम् । वैयर्थ्यमिति । अग्रिमग्रन्थे वाक्यानां समन्वय एव साध्यते । सिद्धे सति वैयर्थ्यमिति भावः । ननु यथा प्रतिज्ञा बुद्धिस्थसाध्यग्रन्थविषयिणी तथाऽयं हेतुरपि बुद्धिस्थः प्रतिज्ञागर्भित एवेति सिद्धो हेतुर्न दुष्ट इत्याशयेन शङ्कन्ते—नचेति । प्रतिज्ञागर्भितहेतुत्वं समन्वयं साधयिष्य इति प्रतिज्ञाविषयीभूतहेतुत्वम् । उत्तरयन्ति—अनुपयोगादिति । मोदादि(?)मतनिराकरणं तु हेतुप्रयोगं विना

श्रीलालूभट्टकृता गूढार्थदीपिका ।

र्विर्देशे दूषणान्तरमाहुः—'अग्रिमे'त्यादिना । समन्वयस्य सिद्धत्वेऽग्रिमवेदान्तसूत्राणां वैयर्थ्यमित्यर्थः । 'न च प्रतिज्ञागर्भिते'त्यादि । समन्वयरूपो हेतुः प्रतिज्ञागर्भितः प्रतिज्ञायमानोऽस्यतः साध्यत्वेऽपि सिद्धवन्निर्देशदोषो न, व्यासचरणैः प्रतिज्ञातस्य सिद्धत्वादित्याशङ्क्य समादधते—'अनुपयो-

भगवदीयश्रीमदिच्छारामप्रणीत- प्रदीप- ।

उक्तार्थानां ब्रह्मणि सन्देहनिरासायेत्यर्थः । तत्कथमित्यादि । तथा च ब्रह्मणि विरुद्धार्थप्रतिपादकत्वेन प्रतीयमानसकलवेदान्तानां समन्वयनिश्चयार्थमेव व्यासशास्त्रस्य प्रवृत्तिरिति सन्दिग्धः समन्वयः कथं सिद्धत्वेन निश्चयविषयत्वेन निर्दिष्टः । वादिनं प्रति पूर्वपक्षनिरासकत्वेन प्रयुक्त इत्यर्थः । दूषणान्तरमाहुः—अग्रिमेत्यादि । आदावेव समन्वयनिर्णये समन्वयनिर्णयार्थं वक्ष्यमाणाग्रिमशास्त्रस्य वैफल्यं स्यादित्यर्थः । नन्वग्रे करिष्यमाणग्रन्थं बुद्धिस्थीकृत्यायं ग्रन्थो मया क्रियत इतिवदग्रे समन्वयं साधयिष्य इति मनसा प्रतिज्ञाय समन्वयादिति हेतुरुपन्यस्त इत्यत आहुः—'नच प्रती'त्यादि । प्रतिज्ञागर्भितः अग्रे समन्वयं साधयिष्य इतिप्रतिज्ञाकर्मीभूतः । अनुपयोगादिति । तथा च

१ वादीति स्यात् ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

'गौणमुख्ये'ति । तदुपादानं गौणं प्रकृतिगुणसम्बन्धसहितं, मुख्यं तद्रहितं वेति विवादः कदाचि-
त्सम्भवेत्स त्वीक्षतेरित्यादिभिः परिहृतो भविष्यतीति नाऽनुपपत्तिः काचिदिति भावः ।

मतान्तरीयसमन्वये दूषणान्तरमप्याहुः—'न चे'ति । अत्र ईक्षतेर्नाशब्दमित्याद्यधिकर-
णेषु । तत्र ब्रह्मण एव सर्वत्राऽनुस्यूतत्वेनोपादानत्वं सर्वरूपत्वेन तत्तच्छब्दवाच्यत्वं चेति निर्णयः
प्रतीयते । यथाऽस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा
इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्तीत्यादौ जगत्कारणं
भूताकाशो ब्रह्म वेति सन्देहे सूत्रकार आह—आकाशस्तल्लिङ्गादिति । आकाशो जगदुत्पत्त्या-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

न भविष्यतीति तस्य बुद्धिस्थत्व उपयोगाभावादित्यर्थः । गौणमुख्यभावेति । अस्माभिरिव मीमांसकैर्वे-
दान्तानां ब्रह्मप्रतिपादकत्वं स्वीक्रियत एव । परन्तु पूर्वकाण्डे शेषत्वरूपगौणत्वेनाऽस्माभिस्तु मुख्यत्वे-
नेत्येवंरूपस्य गौणमुख्यभावे विवादस्य सत्त्वात्तत्र हेतुप्रयोगस्योपयुक्तत्वम् । ब्रह्मप्रतिपादकत्वे तु विवादा-
भावात्समन्वयरूपहेतुप्रयोगोऽनुचित इति भावः । विवाद इति । ननु ब्रह्मप्रतिपादकत्व इति शेषः ।
ननु सम्यक् मुख्यत्वेन ब्रह्मप्रतिपादनं समन्वयशब्दार्थः । एवं च हेतुप्रयोगस्यौचित्यमित्यतो दूषणान्तर-
माहुः—न चेति । अस्तीत्यनेनान्वितं येन रूपेण यावद्धर्मशून्यत्वेन रूपेण समन्वयः । सर्वेषां वेदान्त-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

गादि'ति । समन्वयादिविचाराणां ब्रह्मजिज्ञासाऽनतिरेकात् । ब्रह्मजिज्ञासाप्रतिज्ञयैव चारितार्थ्ये
समन्वयप्रतिज्ञाया अनुपयोगादित्यर्थः । तस्मात्तत्तु समन्वयादिति सूत्रं ब्रह्मण उपादानत्वे यः
सन्देहो यश्च पूर्वपक्षस्तन्निराकरणार्थं प्रवृत्तमिति मन्तव्यम् । ननु ब्रह्मणो जगदुपादानत्वं
आत्मान ँ स्वयमकुरुत सहैतावानासेत्यादिश्रुतिभिः सिद्ध एवाऽस्ति, किमर्थं सूत्रप्रणयन-
मित्याकाङ्क्षायामाहुः—'गौणमुख्यभाव' इत्यादि । गुणसम्बन्धयुक्तं सगुणं ब्रह्म समवायिकारणं
तद्रहितं मुख्यं ब्रह्म वा समवायिकारणमिति गौणमुख्यभावे विवाद इत्यर्थः । तथा च ब्रह्मणो मुख्य-
स्यैवोपादानत्वसाधनार्थं सूत्रकारो भगवान् बादरायण आह—'तत्तु समन्वयादि'ति । तद्ब्रह्मैव,

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

मीमांसकैः कर्मविध्यपेक्षितकर्मसम्बन्धिब्रह्मरूपदेवताप्रकाशकत्वेन वेदान्तानां कर्मविध्येकवाक्यतया
प्रामाण्यं स्वीक्रियते, तत्र तन्मतं दूषयित्वा स्वातन्त्र्येण ब्रह्मणि वेदान्तानां प्रामाण्यं व्यवस्थापयितुमेष
हेतुर्गवद्भिरुद्भावनीयः स चासिद्धो वादिविजयाहेतुरित्यनुपयोगादित्यर्थः । तन्मतदूषणार्थं व्यासानां सम-
न्वयरूपहेतुसाधनमित्यप्यप्रयोजकमित्याहुः—गौणेत्यादि । तथा च वेदान्तानां ब्रह्मणि समन्वयस्तैरपि
स्वीक्रियत एव परं कर्मविधिशेषतया न तु स्वातन्त्र्येणेति तादृशसमन्वयसाधनमपि न व्यासाभिप्रेतमि-
त्यपि दूषणं बोध्यमित्यर्थः । मायावाद्यभिमतसमन्वयस्वरूपं दूषयितुमाहुः—'न च येने'त्यादि । तथा
च सर्वविशेषशून्ये निर्धर्मके ब्रह्मण्यध्यारोपापवादाभ्यां सर्ववेदान्तानां समन्वयो भवदभिमतः, स च न
व्यासविचारगोचरोऽत्र ईक्षतेर्नाशब्दमित्यारभ्यासमाप्ति सधर्मके ब्रह्मण्येव वेदान्तानां समन्वयस्य व्यासवि-
चारगोचरत्वादित्यर्थः । ननूपादानाभिन्ननिमित्तकारणं ब्रह्मेतिवादिनां सर्वेषामेव मते 'जन्माद्यस्य
यतः' 'शास्त्रयोनित्वात्' 'तत्तु समन्वया'दितिसूत्रद्वयेनैव सर्वज्ञत्वसर्वशक्तिमत्त्वजगदुपादानत्व-
निमित्तकारणत्वानां ब्रह्मणि सिद्धेरग्रेतनवेदान्तारम्भवैयर्थ्यं, सूत्रद्वयेनैव सर्ववेदान्तसिद्धान्तस्य निश्चया-

चारितस्तथाग्रे सूत्रेषु निर्णयोऽस्ति । शास्त्रारम्भस्तु प्रथमसूत्र एव समर्थितः । तस्मात् समवायिकारणत्वमेवानेन सूत्रेण सिद्धम् ।

ननु कारणत्वमेवास्तु ब्रह्मणः, किं समवायिकारणत्वेन ? । विकृतत्वञ्च स्यात् । अनर्थरूपत्वेन कार्यस्यायुक्तता च । तस्मादनारम्भणीयमेवैतत्सूत्रमिति चेत्—

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

दिकारणत्वेनोक्तः परमात्मैव । तल्लिङ्गात्तस्यैव ब्रह्मण उपादानत्वेनाऽनुस्यूतत्वादिलिङ्गादित्येवमादिप्रकारेणैव ब्रह्मणः सर्वत्र समन्वयस्य प्रतिपादनान्न मतान्तरीयः समन्वयः सूत्रकारसम्मतोऽस्तीत्यर्थः । नन्वेवं सूत्रद्वयेनैव सर्वज्ञं सर्वशक्ति जगदुपादानकारणं ब्रह्मेतिज्ञानस्य सम्भवादग्रे शास्त्रारम्भोऽनर्थक एव कस्मान्न भवतीत्यत आहुः—'शास्त्रारम्भ' इति । शास्त्रस्य सन्देहवारकत्वेन यस्मिन्नेव विषये विप्रतिपत्तिस्तत्रैव शास्त्रप्रवृत्तिः सार्थिकेति प्रतिज्ञासूत्रव्याख्यान एव समर्थितमित्यर्थः ।

एवं सूत्रार्थं निरूप्योपसंहरन्ति—'तस्मादि'ति । यस्मान्मतान्तरीयः समन्वयो न सूत्रकारसम्मतस्तस्मादुपादानकारणत्वमेवानेन सूत्रेणोच्यत इति सिद्धमित्यर्थः । ननु न वयं कारणत्वं व्यासेधामः, किन्तूपादानत्वम् । न ह्युपादानत्वे तत्र कश्चनोत्कर्षः सिद्ध्यति । प्रत्युताऽनिष्टस्यैव प्रसक्तिरित्याह पूर्वपक्षी—'ननु कारणमि'ति । यद्विपरिणामि तद्विकृतमिति व्याप्तेः । दूषणान्तरमाहुः—

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

वाक्यानामिति शेषः । मतान्तरस्थैर्मायावादिभिः । तथा—तेन रूपेण निर्णयो नास्तीति पूर्वेणान्वयः। तथा चाग्रिमसूत्रेषु सर्वत्र कर्त्रादिरूपेणैव तत्तद्वाक्यानां ब्रह्मप्रतिपादकत्वं निःसन्दिग्धमिति नायं हेतुप्रयोग उचित इति भावः । ननु सर्वत्र श्रुत्या सिद्धार्थ एव प्रतिपाद्यते चेत्तत्र सन्देह एव नोदेतीति शास्त्रारम्भो व्यर्थ इत्यत आहुः—शास्त्रेति । गौणतापत्तिरजिज्ञास्यत्वं चेत्यादिस्थले । उपसंहरन्ति—तस्मादिति । ननु विकाराभावार्थं केवलकारणतास्वीकार एवास्त्वित्याशयेनाऽऽशङ्कते—नन्विति । नन्वात्मपदस्यारस्यादेवाविकृतत्वमिति पूर्वमेवोक्तमित्यतो दूषणान्तरमाहुः—अनर्थेति । कार्यस्यानर्थरूपत्वेन विना-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

समवायिकारणम् । कुतः समन्वयात् । अस्ति—भाति—प्रियत्वेन सर्वत्रान्वयात् । इह सर्वत्राऽन्वयोक्त्या शुद्ध ब्रह्मैवोक्तम् । व्यापकत्वनिर्देशात् । ततश्च शुद्धस्य निर्गुणब्रह्मण एव जगत्समवायिकारणतासिद्धिः । अत एव गौणश्चेन्नात्मशब्दादित्यनेन गौणत्वं परिहरिष्यते । 'अनर्थरूपत्वेने'ति । कार्यस्याऽनर्थरूपत्वेनेत्यर्थः । 'अयुक्तता चे'ति । समवायिकारणत्वस्याऽयुक्तता चेत्यर्थः । यदि

भगवदीयश्रीमदिष्टारामप्रणीतः प्रदीपः ।

दित्यत आहुः—शास्त्रारम्भेत्यादि । तथा च यत्र यत्र निरुद्धवादिसम्पादितो वेदान्तानां ब्रह्मणि समन्वये सन्देहस्तत्र सर्वत्र सन्देहनिरासार्थं सकलव्यासशास्त्रोपयोग इति प्रथमसूत्रविचारे एवास्माभिः समर्थितमिति न वैयर्थ्यशङ्कालेशोपीति भावः । सिद्धान्तमुपसंहरन्ति—'तस्मा'दित्यादिना । तस्मात् सर्वज्ञत्वसर्वशक्तिमत्त्वयोर्ब्रह्मणि जगत्कारणत्वस्य च वेदसिद्धत्वं तत्र हेतुत्वेन समन्वयादित्यस्योपन्यासः कृतस्तस्य पूर्वोक्तरीत्या दूषितत्वादित्यर्थः । अनेन सूत्रेण 'तत्तु समन्वयादि'तिसूत्रेणेत्यर्थः ।

वादी शङ्कते—नन्वित्यादि । किमित्यादि । समवायिकारणत्वे ब्रह्मणो न कोप्युत्कर्षः सिद्ध्यतीत्यर्थः । विकृतत्वमिति । यत्परिणामि तद्विकृतमितिव्याप्तेरित्यर्थः । कपाल दृष्टान्तः । दूषणान्तरमाह—अनर्थेत्यादि । ब्रह्मणः समवायिकारणत्वे समवायिकारणस्य च कार्यरूपतेतिसिद्धान्तात्

मैवम् । सर्वोपनिषत्समाधानार्थं प्रवृत्तः सूत्रकारः । तद्यदि ब्रह्मणः समवायित्वं न ब्रूयात् भूयानुपनिषद्भागो व्यर्थः स्यात् । 'इदं सर्वं यदयमात्मा' 'आत्मैवेदं सर्वं' 'स सर्वं भवति' 'ब्रह्म तं परादा'दित्यादि, 'स आत्मानं स्वयमकुरुत' 'एकमेवाद्वितीयं 'वाचारम्भणं विकार' इत्यादि, एवमादीनि वाक्यानि स्वार्थे बाधितानि भवेयुः ।

नन्वेवं निःसन्दिग्धत्वात् कथं सूत्रप्रवृत्तिः ? ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

'अनर्थे'ति । कार्यस्याऽनर्थरूपत्वेनोपादानस्याऽपि तदभिन्नत्वेन तद्रूपत्वप्रसक्तेरयुक्ततैवोपादानत्वस्येति शेषः । उपसंहरन्ति—'तस्मादि'ति । यस्मात्पूर्वोक्तदूषणापत्त्यपरिहारान्नोपादानत्वं ब्रह्मणस्तस्मात्त्वन्मत उपादानत्वसमर्थकमिदं सूत्रमनारम्भणीयमेवेति स्थितेऽत्र सिद्धान्तमाहुः—'मैवमि'ति । शास्त्रस्य सन्देहवारकत्वेनेदं सर्वं यदयमात्मा आत्मैवेदं सर्वं भवतीत्यादौ ब्रह्मण एव सर्वरूपत्वोक्तेः समवायित्वस्य श्रुतिसम्मतत्वात्तत्र यानि कानिचिद्दूषणानि प्रतीयमानानि तानि चेत्सूत्रकारो न निवारयेत्तदा शास्त्रस्य तावत्यंशेऽशास्त्रत्वं, ब्रह्मणः समवायित्वाभावेन तावन्ति वाक्यानि च स्वार्थे बाधितान्येव भवेयुस्तस्मान्नारम्भणीयमेवैतदिति प्रलपितमात्रम् । ननु तत्र यद्युपादानत्वं स्पष्टमेव प्रतीयते तदा तु तस्याऽनारम्भणीयत्वमेव प्रसज्येत । सन्देहं विना शास्त्रस्या-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

शित्वेन । अयुक्तत्वेति । ब्रह्मणः कार्ये समन्वयेऽयुक्तता । विनाशित्वं स्यादित्यर्थः । समाधानमाहुः—मैवमिति । समाधानार्थं विरुद्धवाक्यानामेकवाक्यतासम्पादनार्थम् । व्यर्थः स्यादिति । स्वार्थेऽप्रामण्यात् व्यर्थः स्यादित्यर्थः । ब्रह्मणः समवायित्वाभावे बहूनां वाक्यानामसङ्गतत्वमुक्तं तन्मध्ये कानिचिद्दर्शयन्ति—इदमिति । वाक्यसप्तकम् । प्रथमं मैत्रेयीब्राह्मणे । तत्र सर्वस्मिन्नात्माभेदः प्रतिपादितः । स च समवायित्वमन्तरेण न घटते । द्वितीयं छान्दोग्ये सनत्कुमारनारदसंवादे । तृतीयं पुरुषविधब्राह्मणे । चतुर्थं मैत्रेयीब्राह्मणे । तत्र सर्वमिदमात्माभिन्नमिति यो वेद तं प्रति ब्रह्म परादात् सः अमृतत्वाभावरूपं पराभवं प्राप्नुयादित्यर्थः । पञ्चमं तैत्तिरीये ब्रह्मवित्प्रपाठके । तत्रैकस्यैव कर्तृकर्मभावः समवायित्वमन्तरेण न

श्रीबालूभट्टकृता गूढार्थदीपिका ।

समवायिकारणं ब्रह्माङ्गीक्रियते तदा समवायिकारणकार्ययोरभेदात्कार्यधर्माः कारणेऽप्यायान्तीति ब्रह्मणोऽपि जगन्निष्ठतुच्छत्वादिधर्मवत्त्वं स्यादिति भावः । 'एतत्सूत्रमि'ति । समन्वयसूत्रमित्यर्थः । 'प्रपञ्चरूपप्रतिपादकानामि'ति । समवायिकारणतानिरूपणे कार्यकारणयोरभेदात्प्रपञ्चरूपता ब्रह्मणः सिद्ध्यतीति समवायिकारणत्वप्रतिपादकानां, इदं सर्वं यदयमात्मा आत्मैवेदꣳसर्वं स सर्वं भवति आत्मानꣳ स्वयमकुरुत बहु स्यां प्रजायेयेत्यादीनां मुख्यार्थबाधकत्वं

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

ब्रह्मणः कार्यतापत्तिरूपानर्थत्वापत्तेरित्यर्थः । पूर्वपक्षमुपसंहरन्ति—तस्मादिति । अनारम्भणीयं समवायिकारणताप्रतिपादनाय नारम्भणीयमित्यर्थः ।

सिद्धान्तमाहुः—'मैव'मिति । समवायित्वं उपनिषत्सिद्धं समवायित्वम् ।

ननु ब्रह्मणः समवायिकारणतायाः श्रुतिसिद्धत्वे सन्देहाभावाद्व्याससूत्रप्रवृत्तिस्तत्रापार्थेत्यत आहुः—नन्वेवमित्यादि ।

उच्यते, अस्थूलादिवाक्यान्यपि सन्ति सर्वत्र प्रपञ्चतद्धर्मवैलक्षण्यप्रतिपादकानि, ततोऽन्योन्यविरोधेनैकस्य मुख्यार्थबाधो वक्तव्यः। तत्र स्वरूपापेक्षया कार्यस्य गौणत्वात् प्रपञ्चरूपप्रतिपादकानामेव कश्चित् कल्पयेत्, तन्माभूदिति जन्मादिसूत्रवत् समन्वयसूत्रमपि सूत्रितवान्। तथा च अस्थूलादिगुणयुक्त एव अविक्रियमाण एवात्मानं करोतीति वेदान्तार्थः सङ्गतो भवति। विरुद्धसर्वधर्माश्रयत्वं तु ब्रह्मणो भूषणाय।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

ऽप्रवृत्तेरित्याहु.—'नन्वि'ति। अत्र समाधानमाहुः—'उच्यत'इति। यद्यपि समवायित्वं निस्सन्दिग्धमेव प्रतिपाद्यते तथाप्यस्थूलादिवाक्येषु कार्यतद्धर्मवैलक्षण्यस्यं च प्रतीयमानत्वाद्भवति सशयः। श्रौतत्वाऽविशेषादेकतरबाधस्याऽशक्यवचनत्वात्। न च संशय एवाऽस्तु किं बाधकमिति वाच्यम्। वेदान्तवाक्याना शक्तितात्पर्याऽवधारणरूपस्य श्रवणस्याऽसिद्धौ सर्वमेव नश्येत्। अत एकतरनिश्चयार्थं धर्मिप्रतिपादकस्योपजीव्यत्वात्सर्वात्मना बाधासम्भवाद्धर्मप्रतिपादकस्यापि श्रौतत्वात्सर्वथा बाधाभावेऽपि परिचायकत्वाद्यभ्युपगमेन मुख्यार्थबाधे सर्वोपपत्तिरिति कश्चित्कल्पयेत्तन्निषेधार्थं समन्वयसूत्र प्रयुक्तवान्सूत्रकारः, प्रधानादीनां कारणत्वनिराकरणपूर्वक ब्रह्मकारणत्वप्रतिपादकजन्मादिसूत्रवत्। ततो यज्जात तदाहु.—'तथा चे'ति। ननु प्रपञ्चतद्धर्मवैलक्षण्यं, तद्रूप-

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम्।

सम्भवति। षष्ठ छान्दोग्ये। सप्तम तु स्पष्टमेव समवायित्व वदति। तस्मात् सामान्यकारणज्ञाने ज्ञाते सामान्यधर्मप्रकारक ज्ञान विशेषधर्मप्रकारकजिज्ञासाजनकमिति न्यायात् विशेषधर्मजिज्ञासानिवर्तकत्वेनेद सूत्रमावश्यकमिति भाव.। पुन. शङ्कते—नन्विति। प्रवृत्तिरिति। तथाच सूत्रप्रवृत्त्यन्यथानुपपत्त्योक्तश्रुत्या नि सन्दिग्ध समवायित्व न प्रतीयत इति शङ्काकर्तुराशय.। समाधानमाहु—उच्यत इति। 'अस्थूले'ति। अस्थूलमनण्वित्यादीनीत्यर्थः। अपिना सविशेषप्रतिपादकवाक्यसङ्ग्रहः। ननु ततः किमित्यत आहुः—'तत' इति। मुख्यार्थ इति। शक्त्या प्रतिपाद्य इत्यर्थ.। 'गौणत्वादि'ति। इच्छोत्तर जायमानत्वेन गौणत्वादित्यर्थ.। 'कल्पयेदि'ति। मुख्यार्थबाधकत्वमित्यादि। 'जन्मादिसूत्रवदि'ति। कर्तृत्वं यथा प्रतिपादित तथा समवायित्वमपि ब्रह्मणि प्रतिपादित स्वमतं इति।

श्रीलालूभट्टकृता गूढार्थदीपिका।

कश्चित्कल्पयेदित्यर्थः। 'ततः कर्तृत्वमपी'ति। कर्मसापेक्ष ईश्वर. फल ददातीत्येव कर्माधीनताया-मीश्वरस्याङ्गीकृतायामनीश्वरताप्रसक्तौ स्वतन्त्रत्वाभावात्स्वतन्त्र. कर्तेत्यस्य लक्षणप्रसक्तिराहित्यात्कर्तृत्वं भज्येतेत्यर्थः।

भगवदीयश्रीमदिच्छाराममणीत प्रदीप।

उच्यते समवायिकारणतानिश्चयार्थं सूत्रप्रवृत्तेरावश्यकत्वमुच्यत इत्यर्थ.। अन्योन्येत्यादि। सधर्मकनिर्धर्मकप्रतिपादकवाक्याना परस्परविरोधेनेत्यर्थ.। मुख्यार्थः शक्यार्थः। तत्र सधर्मकनिर्धर्मकब्रह्मप्रतिपादकवाक्यानामन्यतरस्य मुख्यार्थबाधकल्पनायाम्। स्वरूपापेक्षया 'निष्कल शान्त'मित्यादिवाक्यप्रतिपाद्यापेक्षया। कार्यस्य 'स एतावानास ऐतदात्म्यमिद सर्वं स आत्मान ५ स्वयमकुरुते'त्यादिवाक्यप्रतिपाद्यस्य लोकानां कार्यत्वेनाभिमतस्य। गौणत्वात् वादिनो गौणत्वाभिमानात्। प्रपञ्चरूपेति। प्रपञ्चात्मकब्रह्मरूपेत्यादि। कल्पयेत् मुख्यार्थबाध कल्पयेत्। तत् कार्यब्रह्मप्रतिपाद-

किञ्च, अन्यपदार्थसृष्टौ वैषम्यनैर्घृण्ये स्याताम् । कर्माधीनत्वे त्वनीशिता । ततः कर्तृत्वमपि भज्येत । ततः सर्वमाहात्म्यनाश एव स्यात् ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

त्वं चोभयमपि विरुद्धमिति कथमेकत्र तत्सम्भवः । सम्भवे वा विकृतत्वं कस्मान्न भवतीत्यत आहुः—'विरुद्धे'ति । इदमेव हि तस्य सर्वतोऽधिकमाहात्म्यं यत्तद्रूपत्वेऽप्यविकृतत्वमिति विरुद्धधर्माश्रयत्वम् । नह्यन्यस्तादृशो दृष्टः श्रुतो वा । अत एवाऽद्वैतश्रुतिरपि संगच्छते । तस्यैव समवायित्वे साधकान्तरमाहुः—'किञ्चे'ति । 'अन्यपदार्थसृष्टावि'ति । भगवतो निमित्तत्वमात्रेऽभ्युपगते कार्यस्याऽन्यत्वमापद्येत । तथा च तत्सृष्टौ कांश्चित्सुखिनः कांश्चिद्दुःखिनः प्रलयं च कुर्वन्कथं विषमो निर्घृणश्च न भवेत् ।

ननु कर्मसापेक्षः सन्नेव तथा करोतीति कथमुक्तदूषणावकाश इत्यत आहुः—'कर्माधीनत्व' इति । यदि कर्मसापेक्ष एव फलं प्रयच्छेत्तदा तत्कर्म किमिति विचारणीयम् । ब्रह्म चेत्स दोषस्तदवस्थ एव । अन्यच्च तत्सापेक्षत्वादस्वातन्त्र्याच्चद्धेतोरेवेतिन्यायेन च कर्मण एव तदुपपत्तावीश्वरत्वं कारणत्वं च भज्येत । हेतुव्यपदेशश्च विरुध्येत । तस्मात्सृष्टेरात्मरूपत्वाऽभ्युपगम एव वैषम्यादिदोषपरिहारो नाऽन्यथा । अत एवैष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति । एष उ एवाऽसाधु कारयति तं यमधो निनीषते । पुण्यो वै पुण्येन कर्मणा

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

सिद्धान्तमाहुः—'तथा चे'ति । सङ्गत इति निःसन्दिग्ध इत्यर्थः । तथा च विरुद्धवाक्यैः सन्देहे जाते सूत्रप्रवृत्तिरिति भावः । ननु विरुद्धधर्माश्रयत्वे कल्पना स्यादित्यत आहुः—'भूषणाये'ति । 'अपाणिपादो जवनो ग्रहीते'त्यादिश्रुतिप्रतिपाद्यत्वरूपभूषणसत्वे काल्पनिकत्वं नास्तीति भावः । ननु पूर्वसूत्रे कर्तृत्वसिद्धौ ब्रह्मणि विरुद्धधर्माश्रयत्वं सिद्ध्यत्येव तावतैव स्वाभिमतसिद्धौ सत्यां पुनर्ब्रह्मणि समवायित्वस्वीकारो व्यर्थ एव, तदङ्गीकारे च विकृतत्वं गले पतति । लोके घटादिविकारित्वस्य मृत्तिकादौ सत्वादिति समन्वयसूत्रं न कर्तव्यमित्यत आहुः—'किञ्चे'ति । 'अन्ये'ति । ब्रह्मणोऽन्यो यः पदार्थस्तदुपादानिका या सृष्टिर्यथा कुलालो मृदुपादानिकां घटादिसृष्टिं करोति तथा स्वीकृ-

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीपः ।

कानां मुख्यार्थबाधनम् । जन्मादीत्यादि । तथा च प्रकृत्यादीनां कारणतानिरासार्थं ब्रह्मणः कारणताव्यवस्थापनाय यथा जन्मादिसूत्रं तथा ब्रह्मणः समवायिकारणताव्यवस्थापनाय समन्वयसूत्रमित्यर्थः । फलितार्थमाहुः—तथाचेत्यादि । वेदान्तार्थः 'सर्वं खल्विदं ब्रह्मे'त्यादिश्रुत्यर्थः । ननु प्रपञ्चतद्धर्मवैलक्षण्यं प्रपञ्चतद्धर्मरूपत्वं च ब्रह्मणो विरुद्धमत आहुः । विरुद्धेत्यादि । भूषणाय नहि एतादृशोन्यः कश्चित्सम्भवति इति ब्रह्मण एवासाधारणधर्मत्वाद्भूषणायेत्यर्थः ।

अविकृतस्यैव समवायिकारणत्व उपष्टम्भकमाहुः—किञ्चेत्यादि । अन्येत्यादि । ब्रह्मातिरिक्तपदार्थस्य ब्रह्मणः सृष्टिकरणे । वैषम्येत्यादि । सृष्टानां जीवानां दुःखादिकारणेन वैषम्यनैर्घृण्ये स्यातामित्यर्थः । ननु शुभाशुभकर्माधीन एव परमात्मा जीवानां सुखदुःखे प्रयच्छति न त्वनधीन इति नोक्तदोष इत्यत आहुः—कर्मेत्यादि । अनीशिता स्वतःसामर्थ्याभावः । ततः अस्वातन्त्र्यात् । भज्येत 'स्वतन्त्रः कर्ते'ति तल्लक्षणादस्वातन्त्र्ये भज्येतेत्यर्थः । ततः कर्तृत्वभङ्गतः । सर्वमाहात्म्येत्यादि । कर्तृत्वान्यथानुपपत्त्या कल्प्यमानं सर्वज्ञत्वं सर्वशक्तिमत्त्वमपि भज्येतेत्यर्थः ।

नन्वेवमेवास्तु, अपदार्थत्वात्। रज्जुसर्पवदयुक्तार्थकथनेपि न दोषः । 'सर्वं समाप्नोषि ततोसि सर्व'मिति स्मृतेश्चेति चेत्—

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

भवति पापः पापेन कर्मणेति। वैषम्यनैर्घृण्ये इति सूत्रं तु लोकबुद्ध्यनुसारि। अन्यथा फलमत उपपत्तेरित्यधिकरणं विरुध्येत। नन्वस्वातन्त्र्यात्कर्तृत्वं भज्येतेति यदुक्तं तत्तु परमात्म- 'न्यकर्ता अभोक्ते'त्यादिभिस्तदभावश्रवणादित्याशङ्क्याहुः—'तत'इति। परमात्मनोऽकर्तृत्वे कर्तृत्वादिप्रतीतस्य सर्वस्यापि माहात्म्यस्य नाश एव भवेदित्यर्थः। नन्वकर्तृत्वस्यैव माहात्म्यसाधकत्वात्तदेवाऽस्त्वित्यत आहुः—'नन्वि'ति। ननु तस्याऽकर्तृत्वे कार्यस्य विद्यमानत्वात्कर्त्रन्तराऽभावात्तत्प्रतीत्यनुपपत्तिरित्यत आहुः—'अपदार्थत्वादि'ति । सर्वस्याऽपि कार्यजातस्याऽध्यासिकत्वेनाऽपदार्थत्वादित्यर्थः ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

तायां सृष्टावित्यर्थः। 'वैषम्ये'ति। वैषम्यं च नैर्घृण्यं च वैषम्यनैर्घृण्ये। एकस्य सुखवत्त्वकरणमेकस्य दुःखवत्त्वकरणं वैषम्यं, दुःखादिसम्पादनं निर्दयत्वं च ब्रह्मणि स्यातामित्यर्थः। अस्मन्मते तु 'स आत्मानं स्वयमकुरुत' 'एकाकी न रमते' 'बहु स्यामि'त्यादि, 'निर्विकारी निरञ्जन' इति श्रुत्या निर्विकारित्वमपि स्वीकर्तव्यं, श्रुतिप्रामाण्यात्। स्वसृष्टौ स्वयमेव जगद्रूपेण क्रीडतीति वैषम्यनैर्घृण्यसम्भावनापि नास्ति। समवायित्वं विना जगद्रूपत्वं च न सम्भवतीत्यतः समन्वयसूत्रं कर्तव्यमिति भावः। एतच्च द्वितीयाध्याये प्रथमे पादे वैषम्यनैर्घृण्येति सूत्रे व्युत्पादयिष्यते । ननु- कर्माधीनत्वे वैषम्यादिदोषो नास्तीत्यत आहुः—'अनीशिते'ति। पुनः शङ्कते—'नन्वि'ति। अपवादार्थत्वादि'ति । अपदार्थत्वादित्यपपाठः। कर्तृत्वं श्रुत्या यत्प्रतिपाद्यते तदपवादार्थमेव वस्तुतः कर्तृत्वं ब्रह्मणि नास्तीति न विरुद्धधर्माश्रयत्वमिति भावः । नन्वेवं विद्यमानार्थकथनरूपाऽप्रामाण्यापत्तिरत आह—'रज्जुसर्पवदि'ति । अपथगामिनि बालके भयप्रदर्शनार्थं रज्जुं प्रदर्श्य सर्पोऽयमित्युच्यते

श्रीलालूभट्टकृता गूढार्थदीपिका ।

ननु श्रुत्युक्तत्वात्कर्तृत्वं यथाद्रियते तथा श्रुत्युक्तत्वादकर्तृत्वमेव कुतो नाङ्गीक्रियत इत्याह— 'नन्वेवमेवास्तु' इति। अकर्तृत्वमेवास्त्वित्यर्थः। ननु तर्हि श्रुतिपठितस्य कर्तृत्वस्य का गतिरित्याशङ्क्याऽऽह—'अपवादार्थत्वादि'ति। श्रुतौ कर्तृत्वं यदुक्तं तस्याऽपवादार्थत्वात्। कर्तृत्वमपवादार्थमुक्तम्। प्राप्तिं विना निषेधस्य कर्तुमशक्यत्वादिति भावः । नन्वस्तु कर्तृत्वकथनमपवादार्थं तथापि स ऐक्षतायानास स आत्मानं स्वयमकुरुतेत्यादिवाक्यानां का गतिरित्याशङ्क्य समादधते—'रज्जुसर्पवदयुक्तार्थे'त्यादिना । न ह्यत्र मृदो घटकारणतेव ब्रह्मणो जगत्समवायि

भागवदीयश्रीमदिच्छारामप्रणीत. प्रदीप. ।

ननु निष्कलं शान्तमित्यादिवाक्यप्रतिपाद्ये ब्रह्मणि कर्तृत्वादिधर्मशून्यत्वमेव माहात्म्यमित्थं चोक्तधर्मरूपमाहात्म्यनाशे इष्टापत्तिरित्यत आहुः—नन्वेवमित्यादि । एवमेव शुद्धस्य परब्रह्मणः कर्तृत्वादिधर्मशून्यत्वमेवास्त्वित्यर्थः । ननु ब्रह्मणोऽकर्तृत्वेतिरिक्तस्य च कर्तुरभावे प्रपञ्चो न भवेदत आहुः—अपदार्थत्वादि । तथा च नावस्तुनः खपुष्पादेः कर्त्राकाङ्क्षास्तीति भावः । नन्ववस्तुत्वे प्रपञ्चस्य वस्तुत्वेन प्रतीतिर्न स्यादत आहुः—रज्जुसर्पेत्यादीति ।तथा चावस्तुत्वेपि विशेषादर्शनदशा-

१ अपवादार्थत्वादिति पाठो गूढार्थदीपिका-विवरणसम्मत ।

मैवम् । तथा सति पापण्डित्वं स्यात् । एतादृशशास्त्रार्थाङ्गीकर्तुरासुरेषु भगवता गणितत्वात् । 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् । अपरस्परसम्भूतं किमन्यत् कामहैतुक'मिति ।

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

एतदुक्तं भवति । तत्कर्तृत्वस्य ब्रह्मणि साक्षादनुपपत्तेरविद्यासाहचर्येण तत्कथनेऽपि न दोषो न वा प्रतीत्यनुपपत्तिरित्यर्थः । अपवादार्थत्वादितिपाठे तु कर्तृत्वं त्वस्थूलादिवाक्यानुरोधादपवादार्थमेवास्तीति तत्पूर्वं तत्कथनेऽपि नानात्मकामत्वादिदोषप्रसक्तिर्न वा प्रतीत्यनुपपत्तिः । अविद्याया एव तदुपरक्तायास्तत्र कारणत्वस्याऽभ्युपेतत्वादित्यर्थः । तत्र दृष्टान्तमाहुः—'रज्जुसर्पवदि'ति । यथा रज्जुसर्पस्य विशेषदर्शननाश्यत्वेनाऽऽध्यासिकत्वेऽपि प्रतीत्युपपत्तिस्तथेदमपीति भावः । साधकान्तरमप्याहुः—'सर्व'मिति । चैतन्यस्य सर्वस्मिन्व्यापकत्वात् । अधिष्ठानत्वेन 'ऐतदात्म्यमि'त्यादौ कार्यरूपत्वोक्तिर्नतूपादानत्वेनेत्यकर्तैव स इति स्थिते समादधते—'मैवमि'ति । प्रपञ्चस्याऽऽध्या-

गोस्वामिश्रीमद्गिरिधरविरचित विवरणम् ।

तदनन्तरं विनीते तस्मिन् रज्जुरेवेयमित्युच्यते तद्वदेदेऽपि माहात्म्यज्ञापनेन वैराग्याद्युत्पत्त्याऽतात्त्विकार्थकथनं, न तु कर्तृत्वादौ तात्पर्यमिति न दोष इति भावः । न'न्वात्मैवेदं सर्वमि'त्यादिश्रुतिस्तु समवायित्वं वदतीत्यत आह—'सर्वमि'ति । व्यापकत्वं वदति । न तु समवायित्वम् । अत एव गीतायां विश्वरूपज्ञानानन्तरमेवार्जुनेनोक्तं 'ततोऽसि सर्वमि'ति । समाधानमाहुः—'मैवमि'ति । पापण्डित्वासुरत्वे तु गीतावाक्यं प्रमाणमाहुः—'असत्यमि'ति । आसुराः अप्रतिष्ठं, न विद्यते ब्रह्मणि

श्रीलालूभट्टकृता गूढार्थदीपिका ।

कारणतोच्यते । किन्तु रज्ज्वामज्ञानकल्पितसर्पकारणतावद्ब्रह्मणो जगदुपादानत्वं स्वीक्रियते । तथा च यथा सर्पोपादानभूताऽपि रज्जुर्न सर्पगुणदोषाभ्यां संसृज्यते, तथा जगदुपादानं ब्रह्मापि जगद्गुणदोषाभ्यां न लिप्यते । एवं सत्युपादानकारणकार्ययोरभेदाद्ब्रह्मणि कार्याऽभेदरूपार्थस्य कार्यगुणदोषयोजकतयाऽयुक्तस्य रज्जुसर्पवत्कथने दोषो न । रज्जुसर्पाऽभेदस्य रज्जौ सर्पनिष्ठगुणदोषाप्रयोजकत्वात् । अत एव सर्वत्र व्यापकतयैव सर्वरूपत्वं गीतासूक्तमित्याह—**सर्वं समाप्नोषि ततोऽसि सर्वमिति स्मृतेश्चेति चेदिति** । ब्रह्मणो व्यापकतया सर्वाधिष्ठानत्वेन सर्वरूपत्वम् । न तु सर्वस्य ब्रह्मसमवायिकारणतया ब्रह्माभेदः । एवं सति सर्वस्य ब्रह्मरूपत्वाभावान्मिथ्यात्वम् । ततोऽन्यदार्तमितिश्रुत्या ब्रह्मातिरेके ह्यसत्यत्वात् । एवं पूर्वपक्षिणा कर्तृत्व उपादानत्वे प्रपञ्चसत्यत्वे च खण्डिते तत्समर्थनायाऽऽहुः—'मैवं, तथा सती'त्यादिना । सर्वस्य मिथ्यात्वाङ्गीकारे सतीत्यर्थः ।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

यां दोषवलाद्यथा रज्जुसर्पज्ञानं तथाऽविद्यादोषवलात्सर्वस्य मिथ्यात्वज्ञानरूपविशेषदर्शनामात्रकाले प्रपञ्चस्यापि वस्तुत्वेन भानं नानुपपन्नमित्यर्थः । मिथ्यावादी समाधानान्तरमाह—सर्वमित्यादि । तथा च 'सर्वं समाप्नोषी'ति सर्वं जगद्व्याप्नोषि । 'ततः' हेतोः 'सर्वमसि' सर्वपदवाच्योऽसीत्यर्थः । इत्थं च 'अथेदं सर्वं यदयमात्मे'त्यादिश्रुतिः 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मे'त्यादिरूपा च या श्रुतिः सा ब्रह्मणो व्यापकत्वेन सर्वस्मिन् मिथ्याभूते जगति ब्रह्मगतस्य सत्यत्वस्यारोपेण ब्रह्मत्वं वदति नतु जगत्समवायिकारणत्वेनेति स्मृतितात्पर्यं वाच्यमिमतम् ।

तद्दूषयन्ति—मैवमित्यादिना । पापण्डित्वमिति । पापलिङ्गित्वं स्यादित्यर्थः । एतदेवोपपादय-

शास्त्रानर्थक्यञ्च, 'सर्वं समारोपी'त्यप्यसङ्गतं स्यात्, वस्तुपरिच्छेदात्। नहि वेदो निःप्रपञ्चरूपकथनमुक्त्वा स्वोक्तं जगत्कर्तृत्वं निषेधति। तस्मादध्यारोपापवादपरत्वेन व्याख्यातृ-

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या।

सिकत्वाङ्गीकर्तुः पाषण्डित्वं स्यात्। वेदविरुद्धपदार्थाभ्युपगम एव पाषण्डित्वमिति हि स्थितिः। कथमेतस्य वेदविरुद्धत्वमित्यत आहुः—'तादृशे'ति। शास्त्रार्थो वेदार्थः। दूषणान्तरमाहुः—'शास्त्रानर्थक्यं चे'ति। शास्त्रस्य ब्रह्मकारणत्वोपपादकस्य जन्माद्यस्य यत इत्यादेरानर्थक्यं स्यात्। तस्याऽकर्तृत्वादित्यर्थः। पुनर्दूषणान्तरमाहुः—'सर्वमि'ति। ब्रह्मणो निमित्तत्वे कार्यस्य तदन्यत्वात्सद्व्याप्तिर्ब्रह्मणो न सम्भवति। तत्र हेतुमाहुः—'वस्त्वि'ति। लोके हि वस्तुना कार्येण सह कर्तुः परिच्छेदाद्भिन्नतया स्थितेर्दर्शनात्तन्न्यायेनाऽत्रापि तथा भविष्यतीत्यर्थः।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम्।

प्रतिष्ठा यस्येत्यप्रतिष्ठम्। न विद्यत ईश्वरो नियन्ता यस्येत्यनीश्वरम्। अपरस्परं योषित्पुरुषसम्बन्धं विना संभूतमेतादृशमेव जगत्। काम एव प्राणिनां कारणमन्यत्र किमपीत्यर्थः। इत्याहुरिति गीतावाक्यार्थः। अत्रेदमाकूतं—अध्यारोपवादिमते शास्त्रप्रवृत्तिर्हि द्विविधा वक्तव्या। संसारभ्रमनिवारणार्थमीश्वरसत्तासाधनार्थं च। तत्र केवलब्रह्मस्वरूपप्रतिपादकवाक्यैरेव भ्रमनिवृत्तावन्येषां वाक्यानां वैयर्थ्यं स्यात्। अथ च सर्वैरेव स्वमतरीत्या चेतनस्वरूपं ब्रह्मेत्यङ्गीक्रियत एव पुनस्तत्साधनार्थं प्रवृत्तिर्व्यर्थैव। किञ्च, सर्वं समारोपीत्यस्याप्यसङ्गतिः। सर्वस्यापवादार्थत्वेनारोपितत्वादवस्तुत्वेनाव्याप्यत्वादपरिच्छेदकत्वं, बोधकत्वाभावादिति मन्तव्यम्। ननु वेद एव तथा वदतीत्यत आहुः—'न ही'ति। निषेधतीत्यने-

श्रीलालूभट्टकृता गूढार्थदीपिका।

'शास्त्रानर्थक्यं चे'ति। प्रपञ्चमिथ्यात्वाङ्गीकारे वेदादेः शास्त्रस्यापि मिथ्यात्वेन जीवाज्ञानकल्पितत्वात्कल्पितस्य मिथ्यापदार्थनिवर्तकसाधनोपदेशाऽसमर्थत्वेनाऽऽनर्थक्यं स्यादित्यर्थः। 'सर्वं समारोपीत्यप्यसङ्गतं स्यादि'ति। सर्वस्य मिथ्यात्वाङ्गीकारे सर्वस्यैव वस्तुतोऽभावाद्व्याप्याऽभावे व्यापिकथनस्याऽयुक्तत्वादित्यर्थः। असङ्गतत्वे हेतुमाहुः—'वस्तुपरिच्छेदादि'ति। 'स्वोक्तं जगत्कर्तृत्वमि'ति। प्रतीत्या प्राप्तं लोकानुसारि यज्जगत्कर्तृत्वं तदेव श्रुतिर्निषेधति। यतो वा इमानि भूतानि जायन्ते एतस्माज्जायते प्राणः स आत्मानं स्वयमकुरुतेत्यादिभिर्वाक्यैर्यत्स्वोक्तं जगत्कर्तृत्वं तन्निषेधति। तथा सति प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायेन जगत्कर्तृत्वोक्तिर्बाध्येतेत्यर्थः। यच्चोक्तं जगत्कर्तृत्वं निषेधार्थं श्रुत्याऽनूद्यत इति। तदप्ययुक्तम्।

भगवदीयश्रीमदिच्छारामप्रणीत. प्रदीप.।

न्ति—एतादृशेत्यादि—असति बाधे वेदस्य मुख्यार्थबाधकर्तुः। आसुरत्वरूपफलेन तेषां पाषण्डित्वं द्रढयन्ति—आसुरेष्वित्यादिना। तदेवोपपादयन्ति—'असत्यमि'त्यादिना। असत्यं मिथ्याभूतम्। अप्रतिष्ठं अकाल्पनिकधर्माधर्मतद्व्यवस्थापकप्रमाणशून्यम्। अनीश्वरं अकाल्पनिकेश्वरशून्यम्। अपरस्परसम्भूतं सर्वस्य कारणकार्यत्वाभिमतस्य मिथ्यात्वात् स्त्रीपुरुषादिरूपकारणजन्यमित्यर्थः। तथा सति सर्वं कथं दृश्यत इत्यत आह—कामेत्यादि। तथा चाविद्यमानापि कामिनी यथा कामिना दृश्यते एवं द्वेषादनिष्टमपि दृश्यते तथा मिथ्याभूतमपि दोषात् दृश्यत इति त आहुरित्यर्थः। शास्त्रानर्थक्यं ब्रह्मणो जगत्कारणताप्रतिपादकश्रुतिसूत्रवैयर्थ्यम्। असङ्गतं स्यादित्युपपादयन्ति—'वस्त्वि'त्यादिना। तथा च ब्रह्मणो व्यापकत्वं सर्वात्मकव्याप्यवस्तुपरतन्त्रं, तत्र सर्वस्य मिथ्यात्वे व्याप्यवस्तु-

भिर्वेदान्तास्तिलापः कृता इति मन्यामहे, सर्ववाक्यार्थबाधात् । यथा निर्दोषपूर्णगुणविग्रहता भवति तथोपरिष्टाद्वक्ष्यामः ।

ननु पुरुषार्थार्थानि शास्त्राणि । इदं च शास्त्रं मोक्षरूपपुरुषार्थसाधकम् । मोक्षश्चाविद्यानिवृत्तिरूप इति युक्तम् । अविद्या चाज्ञानं ज्ञानेनैव नश्यति । ततो ज्ञानोपयोगित्वेन व्याख्यातव्ये वेदान्तेऽध्यारोपापवादव्यतिरेकेण व्याख्यानमयुक्तम्, अतो यथाकथञ्चिद्व्याख्यानेपि पुरुषार्थसिद्धेर्न कोपि दोष इति चेत्—

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

ननु कर्तृत्वादिकमुक्त्वा स्वयमेव निषेधतीत्यनुपपत्त्याऽध्यारोपापवादपरत्वेन श्रुतयो व्याख्यायन्त इत्यत आहुः—'न ही'ति । ब्रह्मणो निर्विशेषत्वप्रतिपादकानां किं निर्विशेषत्वमात्रे तात्पर्यमुत प्रपञ्चवैलक्षण्य इति सन्देह उत्तरं पूर्वसन्देहवारकमित्युक्तेर्गीतावाक्यस्यैव निर्णायकत्वम् । तत्र चाऽवजानन्ति मामित्यादिना प्रपञ्चसाधारण्येन तज्ज्ञानं निन्दित्वा, महात्मानस्त्वित्यनेन तद्वैलक्षण्येनैव ज्ञानं पुरुषार्थसाधकमित्युक्तम् । तथा जन्मकर्म च मे दिव्यमित्यादिना च । एवं निर्विशेषप्रतिपादकानां लौकिकतत्तन्निषेधमात्रपरत्वेन प्रपञ्चवैलक्षण्य एव तात्पर्यं, न तु स्वोक्ततन्निषेधोऽप्यभिप्रेतः । तस्य तदसाधकत्वात् । ननु तत्साधकत्वाभावेऽपि तन्निषेधे बाधकाऽभावात्सोऽप्यस्तीति चेत् । न । तमेव विदित्वातिमृत्युमेतीत्यत्र तच्छब्देन पूर्वोक्तं सहस्रशीर्षत्वादिविशिष्टमेव परमात्मानं परामृश्य तज्ज्ञानस्यैवेतरनिराकरणपूर्वकममृतत्वसाधकत्वमुक्तमिति न श्रुत्युक्तानामपि धर्माणां निषेधः श्रुत्यभिप्रेत इति सुधीभिराकलनीयम् । नन्वध्यारोपापवादपरत्वेऽपि सामञ्जस्यं शाखारुन्धतीन्याये दृष्टमिति कथमेतदनभ्युपगम इत्याशङ्क्योपसंहारेणाऽऽह—'तस्मादि'ति । तत्र

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

नान्वितम् । अध्यारोपापवादवादिनमुपहसन्ति—'कृता' इति । अस्पृश्याः कृता इत्यर्थः । वेदान्तार्थस्पर्शोऽपि तेषां नास्तीति भावः । ननु प्रपञ्चसमवायित्वे कार्यदोषो ब्रह्मणि स्यादत आहुः—'यथे'ति । वक्ष्यामः । अन्तस्तद्धर्माधिकरण इति शेषः । स एव पुनः प्रत्यवतिष्ठते—'नन्वि'ति । पुरुषार्थार्थानि पुरुषार्थचातुर्विध्यमेवार्थः प्रयोजनं येषां तानि । इदं च वेदान्तशास्त्रं च ।

श्रीलालूभट्टकृता गूढार्थदीपिका ।

अनुवादं विनापि निषेधस्याऽजरममरमित्यादिश्रौतवाक्येषूपलभ्यमानत्वात् । नहि कुत्राप्युपनिषत्सु ब्रह्मणि जरामरणादिकमनूदितमस्ति । न च प्राप्तिं विना निषेधो न स्यादिति वाच्यम् । भ्रान्तप्रत्ययेन प्रसक्तस्य सुखेन निषेद्धुं शक्यत्वात् । एवं सति लोकप्रतीत्या प्राप्त यत्कुलालादितुल्यं कर्तृत्वं तस्यैव

भागवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

नोऽभावे व्यापकत्वमपि मिथ्यैव भवेदिति फलितम् । समाधानान्तरमाहुः—न हीत्यादिना । तथा 'चापहतपाप्मे'त्यादि 'पूर्णकाम निष्कल'मित्यादि प्रपञ्चविलक्षणं ब्रह्म प्रतिपाद्य यदि स्वोक्तकर्तृत्वं निषेधेत तदा मृषावादित्वेनाप्रामाण्यं स्यात्सर्वस्यापि वेदस्येत्यर्थः । तिलापः कृताः अप्रमाणीकृता इत्यर्थः । तदेवोपपादयन्ति—सर्ववाक्यार्थेत्यादिना । 'सर्वं खल्वि'ति 'ऐतदात्म्य'मिति 'स आत्मानं स्वयमकुरुते'त्यादीनां प्रामाण्यबाधादित्यर्थः । सर्ववेदान्तानां मुख्यार्थे प्रामाण्यार्थमाहुः—यथेत्यादि । उपरिष्टात् अन्तस्तद्धर्माधिकरणे ।

न । पुरुषार्थस्य शास्त्रार्थस्य वा स्वरूपं शास्त्रैकसमधिगम्यम् । न स्वबुद्धिपरिकल्पितम् । अतः स्वबुद्ध्या शास्त्रार्थं परिकल्प्य तत्र वेदं योजयन्तो महासाहसिकाः सद्भिरुपेक्ष्याः । पुरुषार्थः पुनर्यथा वेदान्तेष्ववगतः । 'ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मविदाप्नोति परं' 'न स

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

हेतुमाहुः—'सर्वे'ति । तत्र तस्य सामञ्जस्येऽन्यत्र बहूनां वाक्यानामर्थस्य बाधान्नाऽत्र सामञ्जस्यमिति भावः । ननु तस्योपादानत्वे कार्यरूपत्वेन प्राकृतत्वमापद्येतेत्यत आहुः—'प्रथे'ति । नहि कार्यं प्राकृतं, सर्वस्य भगवद्रूपत्वात् । पुरुषः स्वभ्रमादेव 'तथा पश्यतीत्यादिकमुपरिष्टात्तदनन्यत्वमारम्भणेत्यादिषु । पुनः पूर्वपक्षी प्रत्यवतिष्ठते—'नन्वि'ति । सर्वाण्यपि हि शास्त्राणि त्रिवर्गसाधकत्वात्पुरुषार्थपर्यवसानानि । वेदान्तशास्त्रं तु मोक्षसाधकत्वात्ततोऽप्यधिकम् । मोक्षस्तु पञ्चपर्वाऽविद्यानाश एव । यतस्तमेवेत्यादिभिर्ज्ञानस्यैव मोक्षसाधकत्वस्य प्रतीयमानत्वात् । ज्ञानस्य चाज्ञाननिरासकत्वात् । तथा च वेदान्तानां ज्ञानोपयोगित्वेनैवं मोक्षपर्यवसायित्वस्योपपत्तेर्नोऽध्यारोपापवादव्यतिरेकेण सृष्ट्यादिवाक्यानां तदुपयोगित्वं सम्भवतीति तथैव व्याख्यानेन सर्वोपपत्तौ न किञ्चिद्दूषणमिति स्थिते निषेधन्ति—'ने'ति । पुरुषार्थपर्यवसायित्वाऽन्यथानुपपत्त्याऽध्यारोपापवादोऽङ्गीकर्तव्य इति यदुक्तम् । तन्न युक्तम् । यतः पुरुषार्थस्वरूपं श्रुत्येकसमधिगम्यं न स्वबुद्धिकल्पितम् । तस्य संघात-

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

'अज्ञानमि'ति । भावरूपं नतु ज्ञानाभावः । इदं च योगशास्त्रे प्रसिद्धम् । 'यथा कथञ्चिदि'ति । तथा च यथा वेदान्तव्याख्यानेन ज्ञानं भविष्यति तथा व्याख्येयम् । ततो ज्ञाने जाते 'ब्रह्मविद्ब्रह्मैव भवती'तिब्रह्मरूपस्वरूपावस्थात्मकपुरुषार्थसिद्धौ सत्यामध्यारोपापवादेन व्याख्यानं युक्तमेवेति भावः । समाधानमाहुः—'ने'ति । पुरुषार्थस्य मोक्षस्य । महासाहसिका इति । तथा च भवद्रीत्याऽविद्यानिवृत्तिरूपो मोक्षोऽध्यारोपापवादेन व्याख्यानरूपः शास्त्रार्थोऽपि नास्तीति भावः । ननु भवन्मते कीदृशो मोक्ष इत्यत आहुः—'पुरुषार्थ' इति । अवगत इति । तथा मन्तव्य इति शेषः । येषु वाक्येष्ववगतस्तानि वाक्यान्याहुः—'ब्रह्म वेदे'ति । इदं वाक्यपञ्चकं, ब्रह्मभावः,

श्रीलालूभट्टकृता गूढार्थदीपिका ।

श्रुत्या निषेधः क्रियते । न तु परमालौकिकस्य मनसाप्याकलयितुमशक्यस्य स्वोक्तकर्तृत्वस्य । अत एव जन्मादिसूत्रभाष्ये समवोचद्भगवान् भाष्यकारः प्रतीतं च निषेध्यं नाप्रतीतं न श्रुतिप्रतीतमिति । ननु कारणत्वमात्रस्वीकारे दोषाऽभावेऽपि समवायिकारणतास्वीकृतौ कार्यकारणयोरभे-

भगवदीयश्रीसदिच्छारामप्रणीतः प्रदीपः ।

अध्यारोपापवादखण्डनमसहमानस्तद्वादी पुनः प्रत्यवतिष्ठते—'नन्वि'त्यादिना । पुरुषार्थार्थानि पुरुषार्थचतुष्टयसम्पत्तिबोधकानि । इदं च वेदान्तरूपं च । अज्ञानं पञ्चपर्वात्मकं न तु ज्ञानाभावरूपम् । तथा सत्यहमज्ञ इति प्रत्यक्षानुपपत्तेः । तथा हि अहमज्ञ इति च धीर्ज्ञानसामान्याभावविषयिणी वाच्या । अभावप्रत्यक्षस्य प्रतियोगिज्ञानजन्यत्वनियमात् । प्रतियोगिज्ञानसत्त्वे च ज्ञानसामान्यभावस्य वक्तुमशक्यत्वात् । तथा चाहमज्ञ इति प्रत्ययप्रकारगता पञ्चसु सर्वेष्वेव वाच्या नत्वभावे इति फलितं बोध्यम् । ज्ञानेनैव मिथ्यापदार्थव्यावृत्तब्रह्मज्ञानेनैव । व्याख्यानं वेदान्तानां व्याख्यानम् । यथाकथञ्चित् अध्यारोपापवादप्रकारेणापि ।

पुनरावर्त्तते', 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरं' 'अनावृत्तिः शब्दादनावृत्तिः शब्दादि'त्येवमादिभिः श्रुतिस्मृतिन्यायैः ब्रह्मप्राप्तेरेव पुरुषार्थत्वं, ब्रह्म च पुनर्न जीवस्यात्ममात्रमज्ञानवद्धा । 'एकस्यैव ममांशस्य जीवस्यैव महामते । बन्धोऽस्याविद्ययानादिर्विद्यया च तथेतर' इति भगवता जीवस्यैवाविद्यावत्त्वप्रतिपादनात् ।

---

गोस्वामिश्रीमुरलीधरविरचिता अणुभाष्यव्याख्या ।

निवृत्त्यनन्तरभावित्वेन पूर्वं तज्ज्ञानस्य श्रुतिं विनाऽसम्भवात् । तथा च स्वबुद्ध्या शास्त्रार्थं शास्त्रस्य वेदान्तस्यार्थं, प्रयोजनं फलं पुरुषार्थं मोक्षरूपं परिकल्प्य कथं तत्र वेदः सर्वोऽपि योजयितुं शक्यः । ज्येष्ठप्रमाणस्याऽपौरुषेयत्वेन निरस्तसमस्तदोषाशङ्कस्य प्रमाणान्तरानुरोधेन नेतुमशक्यत्वात् । नयने वा साहसमात्रत्वात्सतामसम्मतमेवेत्युपेक्षाविषयत्वं न व्यभिचरतीति सर्वं सुस्थम् ।

तर्हि कीदृशः शास्त्रार्थ इत्याकांक्षायां तत्स्वरूपमाहुः—'पुरुषार्थ' इति । तदेवाहुः—'ब्रह्म वेदे'ति । ननु ब्रह्मप्राप्तेः कथं पुरुषार्थत्वम् । प्राप्यप्रापकभावस्य भेदसिद्ध्यधीनत्वात् । जीवस्य चाभेदबोधकश्रुत्यनुरोधेन ब्रह्मरूपत्वादित्याशङ्क्याऽऽहुः—'ब्रह्म चे'ति । नहि जीवमात्रं ब्रह्मेति वक्तुं शक्यम् । सर्वं एवात्मानो व्युच्चरन्तीत्यादौ जीवातिरिक्तस्यांऽशिनः प्रतीयमानत्वात् । दूषणान्तरमाहुः—

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

परप्राप्तिः, संसारेऽनावृत्तिः, परप्राप्तिस्वरूपं, जन्यभावनश्वरत्वयोर्व्याप्तिनिराकरणं, एतत्सर्वकं बोधयति । 'पुरुषार्थत्वमि'ति । भवतीति शेषः । तथा च श्वेताश्वतरोपनिषदि मायानिवृत्तिरेव मोक्षः । तैत्तिरीये ब्रह्मज्ञानेन मायानिवृत्तौ परप्राप्तिरेव मोक्षो नत्वविद्यानिवृत्तौ । एकादशस्कन्धे विद्याविद्ययोर्माया-जन्यत्वस्योक्तत्वेन मायाविद्ययोर्भेदादिति भावः । नन्वविद्यावतो जीवस्य ब्रह्मस्वरूपस्य परमव्योमा-स्मकत्वसम्पादनरूपत्वेन ब्रह्मणोऽप्यविद्यावत्त्वं तस्य पुनः सर्वत्र सत्त्वात्कथं परप्राप्तिरुच्यत इत्यत आहुः—'ब्रह्मे'ति । 'आत्ममात्रमि'ति । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरात्कृत्स्नात्मस्वरूपमि-

श्रीलालूभट्टकृता गूढार्थदीपिका ।

दात्कार्यगता दोषा ब्रह्मणि प्रसज्येरन्नित्याशङ्क्याऽऽहुः—'यथा निर्दोषपूर्णगुणविग्रहते'त्यादि । 'यथाकथञ्चिद्व्याख्यानेऽपी'ति । श्रुतीनां-मुख्यार्थबाधेन-व्याख्यानेऽपीत्यर्थः । 'जीवस्याऽऽत्ममात्रमि'ति । देहेन्द्रियप्राणान्तःकरणात्मकभेदेन पञ्चात्मको यः सङ्घातस्तत्र सङ्घाते यो जीवः स आत्मा तदेव ब्रह्मेति न । किन्तु सर्वस्य १

भगवदीयश्रीमदिच्छारामप्रणीत प्रदीप' ।

स्वबुद्धिपरिकल्पितं अवैदिकावध्यारोपापवादौ कल्पयित्वा सर्वेषां वेदान्तानां निर्धर्मके ब्रह्मणि तात्पर्यकल्पन शास्त्रार्थ इति स्वबुद्धिकल्पितम् । तत्र स्वबुद्धिकल्पिततात्पर्यविषये । महासाहसिकाः लोकेऽविचारितकर्तारः साहसिकाः, वेदार्थातिक्रमेणाविचारितवक्तारो महासाहसिका इत्यर्थः । वादिमतसिद्धं पुरुषार्थं खण्डयित्वा सिद्धान्ते पुरुषार्थस्वरूपमाहुः—पुरुषार्थ इत्यादिना । ननु जीवब्रह्मणोश्चैतन्यव्यक्तिभेदाभावात्, प्राप्तेश्च भेदपूर्वकत्वनियमाद्ब्रह्मप्राप्तेः कथं पुरुषार्थतेत्यत आहुः—ब्रह्म चेत्यादि ।

---

१ अत्राऽपि पुस्तकाभावात्पुनरग्रिममन्यत्रुटित ।

तस्मान्न्यायोपबृंहितसर्ववेदान्तप्रतिपादितसर्वधर्मवत् ब्रह्म । तस्य श्रवणमनननिदिध्यासनैरन्तरङ्गैः शमदमादिभिश्च बहिरङ्गैरतिशुद्धे चित्ते स्वयमेवाविर्भूतस्य स्वप्रकाशस्य सायुज्यं परमपुरुषार्थः । तस्मात् सर्वे वेदान्ताः स्वार्थ एव शक्तार्था इति न्यायैर्वक्तव्यत्वात् ब्रह्मणः समवायित्वाय समन्वयसूत्रं वक्तव्यम् एवं ब्रह्मजिज्ञासां प्रतिज्ञाय किंलक्षणकं ब्रह्मेत्याकाङ्क्षायां जन्मादिसूत्रद्वयेन वेदप्रमाणकजगत्कर्तृ समवायि चेत्युक्तं, एवं त्रिसूत्र्या जिज्ञासालक्षणविचारकर्तव्यता सिद्धा ।

इति प्रथमाध्याये प्रथमपादे तृतीयं समन्वयाधिकरणम् ॥

---

गोस्वामिश्रीपुरुषोत्तमजिद्विरचिता अणुभाष्यव्याख्या ।

'अज्ञानवद्ब्रे'ति । अज्ञानमविद्या । नह्यविद्यावत्त्वं ब्रह्मणः केनापि वक्तुं शक्यम् । एकस्यैव ममांशस्येत्यादौ जीवस्यैव तद्वत्त्वश्रवणात् । ततः किमत आहुः—'तस्मादि'ति । यस्माद्वेदार्थस्य सर्वस्यापि स्वरूपं न स्वबुद्धिकल्पितं किन्तु शास्त्रैकसमधिगम्यं तस्मादित्यर्थः । श्रुत्यर्थो हि सूत्रानुसारेणोक्तः स्वाभाविक इति ब्रह्मणो वेदार्थत्वेन तत्स्वरूपं पुरुषार्थस्वरूपं चोभयमपि यादृशं वेदान्तेष्ववगतं तादृशमेवेति मन्तव्यम् । एतावन्निरूपणस्य प्रयोजनमाहुः—'तस्मादि'ति । अस्थूलादिवाक्यानां स्वार्थपरत्वे तन्न्यायेनाऽन्येषामपि श्रौतत्वात्तत्परत्वस्याऽऽवश्यकत्वात्तदात्मानं स्वयमकुरुतेत्यादिसमवायित्वप्रतिपादकवाक्यस्यसन्देहनिराकरणार्थं समन्वयसूत्रकथनस्याऽऽवश्यकत्वात्सार्थकत्वमित्यर्थः ॥

इति तृतीयाधिकरणम् ।

गोस्वामिश्रीमद्गिरिधरविरचितं विवरणम् ।

मित्यर्थः । 'प्रतिपादनादि'ति । जीवस्याविद्यावत्त्वांशत्वप्रतिपादनेनांशिब्रह्मप्रतिरुचितैवेति भावः । ब्रह्मणः सर्वधर्माश्रयत्वमुपसंहरन्ति—'तस्मादि'ति । 'न्यायोपबृंहिते'ति । न्यायेनोत्तरमीमांसयोपबृंहितः वर्द्धितो यो वेदान्त उपनिषद्भागस्तेन प्रतिपादितमित्यर्थः । तस्य सर्वधर्मविशिष्टस्य ब्रह्मणः । 'अतिशुद्ध' इति । तथा च सर्वेषां साधनानां चित्तशुद्ध्यर्थत्वमेवेति भावः । 'स्वयमाविर्भूतस्ये'ति । 'नायमात्मा प्रवचनेने'ति श्रुत्या प्रसाद एवाऽऽविर्भावे हेतुरिति स्वयंपदेन द्योत्यते । तथा च 'सोऽश्नुते' इति श्रुत्युक्तं सायुज्यमेव मोक्ष इति भावः । उपसंहरन्ति—तस्मादिति । स्वार्थ एव शक्यार्थ एव । न्यायैः उत्तरमीमांसासूत्रैः । सर्वत्र शक्त्यैवोपनिषद्वाक्यप्रतिपादनं व्यासाभिप्रेतमिति भावः । समवायित्वाय समवायिकारणत्वबोधनायैव ।

इति तृतीयाधिकरणम् ।

भगवदीयश्रीमदिच्छारामप्रणीतः प्रदीपः ।

सिद्धान्तमुपसंहरन्ति—तस्मादिति । न्यायोपबृंहितं सर्वव्याससूत्रप्रतिपादितं । तस्य सधर्मकब्रह्मणः । स्वार्थ एव वाच्यार्थ एव । समवायित्वाय 'स आत्मानं स्वयमकुरुते'तिश्रुतिप्रतिपादितसमवायिकारणताव्यवस्थापनायेत्यर्थः । प्रतिज्ञाय प्रथमसूत्रेण ब्रह्मविचारप्रतिज्ञां कृत्वा । इत्युक्तं निमित्तकारणत्वमसमवायिकारणत्वरूपलक्षणद्वयवद्ब्रह्मेत्युक्तम् । एवं त्रिसूत्रोक्तार्थमुपसंहृत्य सिद्धमाहुः । त्रिसूत्र्येत्यादि ~

इति प्रथमाध्याये प्रथमपादे तृतीयं समन्वयाधिकरणम् ॥ ३ ॥